॥ श्री ॥

# वासुदेवविजय काव्यम्

धातुकाव्यसहितम्

—:o:—

वासुदेवकविविरचितम्

यस्वांऽभिजनकाव्यतीर्थोपहित

पं० श्रीरामप्रपन्नशास्त्रिसङ्कलितया

कैशव्याख्यया व्याख्यया समुपेतम्

प्रयोगसिद्ध्यंशमात्रया पदचन्द्रिकया चोपोद्बलितम्

# Vasudevavijayam with DhatuKavyam

BY

SHRI VASUDEVA KAVI RAJ

OR

(the History of Sri Krishna's life as far as the fall of Kansa complete in six Cantoas in Verse exemplifying the rules of grammer,)

WITH

NEW KESHAVI COMMENTARY

BY

*Pt. RAM PRAPANNA SHASTRI KAVYA TIRTHA,*

(which clearly explains the prose construction, meaning and the grammatical structure of the verses so as to enable even an ordinary student to master Sanskrit rhetoric and poetry without the help of a teacher.)

पञ्जाब-प्रिंटिंग-वर्क्साख्ये निजयन्त्रालये

लवपुरे

पं० श्रीचरणदासशर्मणा बी० ए०

उपाधिधारिणा महानुभावेन मुद्रितम्

अस्याः पुनर्मुद्रणाद्यधिकारष्टीकाकायत्तः



प्रथमावृत्तिः १००० ] सं० १९७१ ज्ये० प्र० १० [ मूल्यम् १॥)

ऽवसानम्' (१।४।११०) इत्यवसानसंज्ञायां 'खरवसानयोर्विसर्जनीयः'(८।३।१५)॥७६

इति श्रीवासुदेवविजयाख्ये काव्ये कैशवाख्यया व्याख्यया समेते भाविहरिजनितःप्रसीदत्सुरतःपुष्पवर्ष--वियद्गीः --रात्रिस्वागोत्तर--विष्णुजन्मगर्गाशीः--कंसमूर्छा--पितृस्तुति--कंसकुवृत्तश्रावण--तदाज्ञयाधृतशिशुरूपहरिकमेकयशोदाशय्यास्थापन--कन्यानयन--तद्रोदनप्रबुद्धरक्षिसूचितकंसकर्तृककन्यापातनोत्तराऽऽकाशगततद्वचोभीतकंससत्कृतरक्षःसमितकंसप्रोत्साहन--गोद्विजबालवधसंमत्युत्तर-सुदान-भीतकंसकर्तृकसर्वत्रहरिदर्शन--पान्थश्रुतव्रजोत्सवजन्यदेवश्रीवसुदेवाऽऽनन्दवर्णनं नाम **तृतीयः सर्गः** समाप्त् ॥

रामान्तोऽजनि केशवश्च मधुदापुर्यां प्रसिद्धो बुधः
बाल्येऽधीत्य महेशपूःस्थभवदेवाख्याद्गुरोर्विश्रुतात् ।
छात्राध्यापनकर्मणा च खलु यः स्वायुःशतं पाणिनेः
शास्त्रस्य प्रचुरप्रचारविधये पञ्चाम्बुकेऽजीगमत् ॥ १ ॥
तत्पुत्रो रघुनाथशर्मविबुधो लालो मुकुन्दादितः
तस्मात्पण्डितधूर्जटिः समभवद् रामप्रपन्नस्ततः ।
काव्यव्याकृतितीर्थशास्त्रिपदवीकः सोऽकरोत्कैशवीं
व्याख्यां छात्रगणप्रियां स्ववसतिर्यस्यास्ति जेजों पुरी ॥२॥

इति श्रीवासुदेवविजयं काव्यं सटीकं समाप्तिमगमत् ॥ शुभं भवतु ।



(टि०)-१ "मदूद" इति सम्प्रति प्रसिद्धः शतद्रुविपाशयोरन्तर्वर्त्ति होश्यारपुरत उपरिज्वालामुख्यधःपर्वतोपत्यकायां यशःपालभूपालभूतपूर्वराजधानीजेजांपुरीतो दक्षिणदिशि क्रोशमितस्थाने स ग्रामः। २ पञ्चनददेशे । ३ पं० मुकुन्दलालतोऽत्र वसन्ति ॥

(वासुदेवविजयपरिशिष्टरूपम्)

# धातुकाव्यम् ।

पूर्वव्याख्यातृमङ्गलम् ।

स्मरत हरेर्मधुरतरं मुरलीनिनदामृतं हि शब्दमयम् ॥
पदयुगलं च भवान्या महिषारेर्मुक्तिविलयवासिन्याः ॥

अथ कैशवीमङ्गलम् ।

यत्स्मृत्या निखिलं तमो विगलति प्रकाश्यमेति प्रधीः,
दुष्टव्रातकदन्दशूकनिकरो यद्वाहभीतिर्द्रवेत् ।
यच्चक्रं खलसैंहिकेयहतिकृत्त्राताऽम्बरीषप्रभोः
भवताभीष्टकरः स्वयं हरिशिशी पादेष्वसौ नम्यते ॥
संश्रित्य तोपर्णीं प्र.चो व्याख्यां छात्रमुदे तरीं ।
भ्रियते धातुकाव्याब्धौ नाविकेनाऽद्य कैशवी ॥

**उदाहृतं पाणिनिसूत्रमण्डलं प्राग्वासुदेवेन तदूर्ध्वतोऽपरः ।**
**उदाहरत्यद्य वृकोदरोदितान्धातून्क्रमेणैव हि माधवाश्रयात् ॥१॥**

**उदाहृतमि**ति **प्राक्** पूर्वकाले **वासुदेवेन** केरलेषु पुरुवनग्रामवास्तव्येन केनचिद्विदुषा **पाणिनिसूत्रमण्डलं** पण-स्तुतौ धातुः पणनं पणः स्तुतिरस्यास्तीति पणी ब्रह्मा तस्यापत्यं पाणिनिः तस्य सूत्राणि 'वृद्धिरादैच्' इत्यादीनि तेषां मण्डलं समूहः **उदाहृतम्** 'अध्यगीषत' इत्यादिप्रयोगेषु सङ्गमसूच्या प्रदर्शितं वासुदेवविजयाख्ये काव्ये, **तदूर्ध्वतः** तस्मात् अग्रे **अपरः** कश्चिद्विद्वान् एतेन स्वनामाकीर्तनेनाभिमानाभावः सूचितः **वृकोदरोदितान्** भीमसेनकथितान् धातून् भ्वादीन् इत्यनेन प्रामाण्यमुपन्यस्तं । **क्रमेणैव** आनुपूर्व्येणैव नतु श्लोकयोजनानुरोधेन यथासम्भवनिवेशेन इत्यनेन पूर्वैरगतार्थता दुष्करकर्मणः करणेन स्वस्य वैदुषी जिज्ञासूनामादरणीयत्वं च प्रदर्शितम् । **माधवाश्रयात्** माधवो नाम धातुवृत्तिनामकग्रन्थकारः तस्य (विग्रातद्वतामभेदविवक्षया) तद्रचितग्रन्थस्येत्यर्थः आश्रयात् अवलम्बात् भीमसेनपाठस्यानेकविधत्वात् माधवोक्तमेव तत्र व्याख्यानं प्रामाणिकत्वेन युक्तमवलम्बयितुमिति भावः । अथच माधवस्य मधुर्नाम यदोर्ज्येष्ठः पुत्रः तस्यापत्य माधवः श्रीकृष्णः तस्य आश्रयात् यद्वा माधव आश्रयः प्रतिपाद्यः

तस्माद्धेतोः **अथ उदाहरति** उदाहर्तुमारभत इत्यर्थः (आसन्ने भविष्यति लट्) अत्र सर्गे **वंशस्थं** छन्दः। "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥१॥

**स गान्दिनीभूरथ गोकुलैधितं स्पर्धालुधीगाधितकार्यबाधिनम्।**

**द्रक्ष्यन्हरिं नाधितलोकनाथकं दधे मुदास्कुन्दितमन्तरिन्द्रियम् ॥२॥**

**स** इति **अथ** श्रीकृष्णानयनार्थं कंसाज्ञाग्रहणोत्तरम् **सः** प्रसिद्धः **गान्दिनीभूः** गान्दिनी नाम श्वफल्कभार्या ततो भवति उत्पद्यते इति सः अक्रूरः तं **गोकुलैधितं** गोकुल ग्रामे प्रवृद्धं। **स्पर्द्धालुधीगाधितकार्यबाधिनम्** स्पर्द्धालुधीभिः परोत्कर्षासहनं स्पर्द्धा तद्युक्तबुद्धिभिः गाधितम् आलोडितं कार्यं बाधितुं शीलमस्य स तं **नाधितलोक नाथकं** नाधितलोकस्य उत्तमजनस्य नाथकमीशितारं रक्षकमित्यर्थः यद्वा नाधितस्य प्रार्थित-स्य लोकस्य स्वजनस्य नाथकम् आशीरूपेणानुग्रहीतारं **हरिं** श्रीकृष्णं **द्रक्ष्यन्** अव-लोकयिष्यन् **अन्तरिन्द्रियं** मनः **मुदास्कुन्दितं** मुदि हर्षे आस्कुन्दितम् आप्लुतं यद्वा मुदा हेतुना उत्प्लुत्य गतं कृतनर्तनमिति यावत् **दधे** धारयामास ॥२॥

**गान्दिनीभूरिति**। गान्दिन्या भवत्युत्पद्यत इति गान्दिनीभूः। १ भू—सत्तायाम् उदात्तः परस्मैभाषः। अस्मात् 'क्विप् च' (३।२।७६) इति क्विप्। **एधितमिति**। २ एध-वृद्धौ। एतदादयः कत्थान्ता उदात्ता अनुदात्तेतः। अस्मात् 'गत्यर्थाकर्मक- (३।४।७२) इत्यादिना कर्तरि क्तः। **स्पर्धालुधीगाधिते**ति। ३ स्पर्ध—संघर्षे। संघर्षः पराभिभ-वेच्छा। पराभिभवस्य धात्वर्थान्तर्भावादकर्मकः। अस्माद् 'गुरोश्च हलः' (३।३।१०३) इत्यप्रत्यये स्पर्धां लात्यादत्ते मितद्र्वादित्वाद्डुः। ४गाधृ-प्रतिष्ठालिप्सयोर्ग्रन्थेच। आत्मयापना स्थानलाभश्च प्रतिष्ठा। एकत्र स्थापनं संदर्भो वा ग्रन्थः। संदर्भः शब्दविषयोऽर्थविषयोऽपि अस्मात् कर्तरि कर्मणि वा क्तः। **कार्यबाधिनमि**ति। ५ बाधृ—लोडने लोडनं प्रतिघातः। अस्मात् 'सुप्यजातौ णिनिः' (३।२।७८) इति णिनिः। **नाधितलोकनाथकमि**ति। ६ नाधृ—७ नाथृ—याच्ञोपतापैश्वर्याशीःषु। ऐश्वर्यमाधिपत्यं नियन्तृत्वं च। 'नृति-नन्दि-नर्दि-नक्कि-नाटि-नाधृ-नाथृ-नृ--वर्जिताः सर्वे नादयो णोपदेशाः' इत्युक्त्या द्वावप्यणोपदेशौ आद्यो णोपदेश इत्येके। आद्यात् कर्तरि कर्मणि वा क्तः। द्वितीयाण्ण्वुल्। **दधे**। ८ दध—धारणे। लिट्। **स्कुन्दितम्**। ९ स्कुदि—आप्रवणे। आप्रवणमाप्लवनमुत्प्लुत्य गमनं वा। उद्धरणं वा। अस्मादिदित्त्वान्नुमि प्राग्वत् क्तः। ॥ २ ॥

यद्यस्य भगवतीयान् प्रेमातिशयः तर्हि कथं पूर्वमेव न प्रस्थितवान् इत्यत्राह—

**प्रश्विन्दिताशं यशसा पुराप्यसौ विवन्दिषुस्तं नतभन्दिनं विभुम् ।**
**स्वमान्दिरात्स्पन्दितुमेव नाशकत्कंसात्परिक्लिन्दितसज्जनाद्भिया ॥३॥**

**प्रश्विन्दितेति असौ** अक्रूरः पुरा पूर्वम् **अपि यशसा** कीर्त्या **प्रश्विन्दिताशं** प्रश्विन्दिताः सिताकृता आशा दिशो येन तं **नतभन्दिनं** नतान् कृतप्रणतीन् भन्दयितुं सुखयितुं कल्याणं कर्तुं वा शीलं यस्य **तं विभुं** व्यापनादिसामर्थ्ययुक्तं **विवन्दिषुः** वन्दितुमिच्छुरपि सन् **परिक्लिन्दितसज्जनात्** परिक्लिन्दिताः परिदेविताः सज्जनाः सत्पुरुषा येन तस्मात् **कंसात् भिया** भयेन **स्वमन्दिरात्** निजगृहात् **स्पन्दितुं** किञ्चिच्चलितुम् **एव** अपि **न अशकत्** न समर्थोऽभूत् । वन्दनेच्छुरपि कथं चालितुं नाशकदिति विरोधः भियेति तु परिहारः । इति विरोधाभासोऽत्रालङ्कारः ॥ ३ ॥

**प्रश्विन्दितेति** । १० श्विदि–श्वैत्ये । णिजन्तात् कर्मणि क्तः । **विवन्दिषुरिति** । ११ वदि-अभिवादनस्तुत्योः । प्रणतिपूर्वकमाशीर्वचनं नतिमात्रं वाभिवादनम् । अस्मात् सन्नतात् ' सनाशंसभिक्ष उः (३।२।१६८) इत्युप्रत्ययः । **नतभन्दिनमिति** । १२ भदि–कल्याणे सुखे च । कल्याणं कल्याणवद्भावः । अस्माणिणजन्त णिनि । **मन्दिरादिति** । १३ मदि–स्तुतिमोदमदस्वप्नकान्तिगतिषु । स्वप्न आलस्यम् । अस्मादधिकरणार्थे 'इषि-मादि-मुदि-खिदि-श्विदि-भिदि-मन्दि-' इत्यादिना किरच् । **स्पन्दितुमिति** । स्पदि–किंचिच्चलने । तस्मात् 'शकधृष–' (३।४।६५) इत्यादिना तुमुन् । **परिक्लिन्दितेति** । १५ क्लिदि–परिदेवने । अस्माणिणजन्तात् कर्मणि क्तः ॥ ३ ॥

अस्य संतोषातिशयं दर्शयति—

**मुदा स चेतो ददे चिरं हरौ स्वादात्सुरैः स्वर्दितमङ्गलोर्दने ।**
**अकूर्दतेवास्य पुरः स्वखूर्दकैर्वनान्तगूर्दी रिपुगोदसूद्यसौ ॥ ४ ॥**

**मुदेति सः** अक्रूरः **चेतः** हृदयं **स्वादात्** माधुर्य्यात् हेतोः । **सुरैः** देवैः **स्वर्दितमङ्गलोर्दने** स्वर्दितानि अनुभूतानि मङ्गलरूपाणि ऊर्दनानि क्रीडाः यस्य तस्मिन् **हरौ** श्रीकृष्णे भगवति **मुदा** प्रेम्णा **चिरं ददे** समर्पितवान् **वनान्तगूर्दी** वनान्तेऽरण्यमध्ये गूर्दितुं क्रीडितुं शीलमस्य सः **रिपुगोदसूदी** रिपूणां शत्रूणां गोदं क्रीडां सूदितुं नाशयितुं शीलमस्य स **असौ** श्रीकृष्णः **स्वखूर्दकैः** निजक्रीडकैः सखिभिः सहेत्यर्थः **अस्य** अक्रूरस्य **पुरः** अग्रे **अकूर्दत** अक्रीडत **इव** मनसस्तत्र लीनत्वेन तादृशोऽभासतेत्युत्प्रेक्षा॥४॥

**मुदा**। १६ मुद-हर्षे। अस्मात् संपदादिक्विप्। **ददृदे**। १७ दद-दाने। धारणे च कल्पद्रुमे। तस्माल्लिटि 'न शसदद-' (६।४।१२६) इत्येत्वाभ्यासलोपाभावः। **स्वादात**। १८ स्वद-१६ स्वर्द-आस्वादने। आस्वादनमनुभवः। 'धात्वादेः षः सः' (६।१।६४) स्वदेर्घञ्। **स्वर्दितेति** कर्मणि क्तः अनयोराद्यः षोपदेशः। अन्यो न। 'अन्दन्त्यपरसादयः षोपदेशाः। स्मिङ्-स्विदि-स्वदि-स्वञ्जि-स्वपयश्च' इत्युक्तेः। **ऊर्दने**ति।। २० उर्द-माने क्रीडायां च। अस्माल्ल्युटि। 'उपधायां च' (८।२।१८) इति दीर्घः। **अकूर्दते**ति। २१ कुर्द-२२ खुर्द-२३ गुर्द-२४ गुद-क्रीडायामेव। कुर्देर्लङ्। **खूर्दकैः** खुर्देर्ण्वुल्। **वनान्तगूर्दी**। **रिपुगोदसूदी**। गुर्देर्णिनिः। गुदेश्च घञ्। २५ षूद-क्षरणे। निःसरणं तत्। हिंसार्थेऽप्यस्ति। अस्माण्णिनिः॥

**गभीरनिर्ह्रादमथास्थितो रथं ह्लादादनुस्वादितकृष्णसत्कथः।**
**पृदाकुजिद्वेगमयत्नतो ययौ वियोयुतत्काननजोतिनाध्वना॥ ५॥**

**गभीरे**ति अथ विचारोत्तरं **ह्लादात्** सुखेन हेतुना **अनुस्वादितकृष्णसत्कथः** पुनः पुनः अनुभूताः कृष्णस्य सत्कथाः श्रेष्ठवृत्तानि येन सः। अक्रूरः **गभीरनिर्ह्रादं** गभीरः अनुत्तानः निर्ह्रादः शब्दो यस्य तं **पृदाकुजिद्वेगं** पृदाकुं सर्पं "सर्पः पृदाकुर्भुजग" इत्यमरः। जयतीति सः गरुडः तद्वत् वेगो यस्य तं (रथविशेषणं क्रियाविशेषणम्वा) **रथं** स्यन्दनम् **आस्थितः** आरुह्योपाविष्टः सन्। **वियोयुतत्काननजोतिना** वियोयुतता अत्यर्थं भासमानेन काननेन वनेन जोतितुं भासितुं शालं यस्य तेन **अध्वना** मार्गेण **अयत्नतो** ऽनायासेन **ययौ** प्रस्थितः॥ ५॥

**निर्ह्रादमि**ति। २६ ह्राद-अव्यक्ते शब्दे। अस्माद् घञ्। **ह्लादात्**। २७ ह्लादी-सुखे च। चादव्यक्तशब्देऽपि। अस्मादपि घञ्। **अनुस्वादिते**ति। २८ स्वाद-आस्वादने। कर्मणि क्तः। **पृदाकु**रिति। २९ पर्द-कुत्सिते शब्दे। अस्मात्' पर्देर्नित्संप्रसारणमल्लोपश्च' इत्याकुप्रत्ययो रेफस्य संप्रसारणं पकारस्थिताकारस्य लोपश्च। **अयत्नतः**। ३० यती-प्रयत्ने। अस्माद् 'यजयाचयत्-'(३।३।९०) इति नङ्प्रत्ययः। **वियोयुताद्**ति। ३१ युतृ-३२ जुतृ-भासने। युतेः यङ्लुगन्ताच्छता। **जोतिना**। जुतेर्णिनिः॥ ५॥

एवं गोकुलं प्रति प्रस्थितोऽक्रूरो निजेप्सितप्रतिबन्धमाशङ्कमानः प्रार्थयते—

**स वेथते स्माखिलवेथितं विधिं प्रश्नन्थितग्रन्थनधीरकत्थनः।**
**अतेन्मुरारिमिम चिन्मयोऽन्तिकं च्यातन्दिशः प्रश्च्युतितैः स्मितामृतैः॥६॥**

**स** इति **प्रश्रन्थितग्रन्थनधीः** प्रश्रन्थितं शिथिलीभूतं ग्रन्थनं कौटिल्यं यस्याः तादृशी धीः बुद्धिर्यस्य सः **अकत्थनः** अनात्मश्लाघानिरतः **सः** अक्रूरः **अखिलवेथितम्** अखिलैः सर्वैर्जनैः वेथितं प्रार्थितं **विधिं** विश्वसृजं **वेथतेस्म** प्रार्थयामास। यत् "**चिन्मयः** ज्ञानस्वरूपः **मुरारिः** मुकुन्दः 'मुकुन्दो मुरमर्दनः'' इति विष्णुनामस्वमरः। **प्रश्च्युतितैः** क्षरितैः **स्मितामृतैः** मन्दहासरूपपीयूषैः **दिशः** आशाः **च्योतन्** आसिञ्चन् सन् **मम अन्तिके** समीपे **अतेत** सततं गच्छेत् इति" ॥ ६ ॥

**वेथत** इति। ३३ विथृ–३४ वेथृ–याचने। विथेः 'लट् स्मे' (३।२।११८) इति भूते लट्। विथितम् वेथेः कर्मणि क्तः। **प्रश्रन्थिते**ति। ३५ श्रथि–शैथिल्ये। तच्च विशिष्टता अगाधता वा। अस्मात् कर्तरि क्तः **ग्रन्थने**ति। ३६–ग्रथि–कौटिल्ये। शाठ्यं वक्रता वा तत्। अस्माल्ल्युट्। **अकत्थन** इति। ३७ कत्थ–श्लाघायाम्। सा च परविषया स्वविषया च स्यात्। अस्माद् 'अनुदात्तेतश्च–' (३।२।१४) इति युच् अत्र युजन्तोक्त्या तवर्गान्तानुदात्तेतां समाप्तिः सूचिता। **अतेदि**ति। ३८ अत सातत्यगमने। इतः शुन्धन्ता उदात्ता उदात्तेतः अस्माल्लिङ्। उदात्तेत्प्रकरणारम्भकद्योतकमिदम्। **चिन्मय** इति। ३९ चिती–संज्ञाने। तच्च चैतन्यं स्मरणं च। भट्टिमते ज्ञानमात्रं च। अस्मात् संपदादिक्विबन्तान्मयट्। तद्रूप इति केचित्। इति कौमुद्युक्तेः। ताद्रूप्ये मयट्। **च्योतन्**। ४०। च्युतिर्–आसेचने। आर्द्रीभवनं तत्। अस्म च्छता **प्रश्च्युतितैरि**ति। ४१ श्च्युतिर्–क्षरणे। स्रुतिस्तत्। अस्मात् कर्तरि क्तः ॥ ६ ॥

कंसं प्रति हितानुक्तिदोषेण प्रार्थनप्रतिबन्धमाशङ्क्य परिहरति—

**ममन्थ विश्वं सुजनानकुन्थकान्प्रपुन्थ्य बन्धूनपि लुन्थति स्म यः।**
**स भोजराडद्य हरिं मिमन्थिषुः प्रमान्थनं सेधतु को निषेत्स्यति ॥ ७ ॥**

**ममन्थे**ति यः कंसः **विश्वं** जगत् **ममन्थ** क्षोभितवान् **अकुन्थकान्** कस्यापि असंक्लेशकान् **सुजनान्** सत्पुरुषान् **प्रपुन्थ्य** हिंसित्वा **बन्धून्** सम्बन्धिनः **अपि लुन्थतिस्म** जघान ॥ **स भोजराट्** भोजाख्यदेशस्य राजा **अद्य हरिं** श्रीकृष्णं **मिमान्थिषुः** हन्तुमिच्छुः सन् **प्रमान्थनं** मरणं **सेधतु** प्राप्नोतु **को जनः** पुरुषः **निषेत्स्यति** निषेधं कारिष्यति न कोपीत्यर्थः। मुमूर्षुमूर्खो व्यवसितात् निवर्तयितुं दुःशक इति भावः ॥ ७ ॥

**ममन्थे**ति। ४२ मन्थ–विलोडने। क्षोभणं तत्। अस्माल्लिट्। **अकुन्थका-**

निति । ४३ कुथि-४४ पुथि-४५ लुथि-४६ माथि-४७ मान्थ-हिंसासंक्लेशनयोः । कुन्थेर्ण्वुल् । प्रपुन्थ्येति । पुन्थेर्ल्यप् । लुन्थति । लुन्थेर्भूते लट् । मिमन्थिषुः । मन्थेः सनि उप्रत्ययः । प्रमान्थनम् । मान्थेर्ल्युट् । सेधतु । ४८ षिध-गत्याम् । अतिसर्गे प्राप्तकाले वा लोट् । निषेत्स्यति । ४९ षिधू-शास्त्रे माङ्गल्ये च । शास्त्रं शास्त्रगतं शासनं शासनमात्रं वा । माङ्गल्यं मङ्गलक्रिया । अस्माद्लृट् ॥ ७ ॥

पलान्यखाद्यानि खदन्वदद्वपुर्गदन्नवाच्यानि रदन्सतां मनः ।
नदन्मदादर्दितसंक्षयोऽधुना क्षणं खलो नर्दतु गर्दभस्वरैः ॥ ८ ॥

पलानीति । अर्दितसंक्षयः अर्दितः साद्भिः प्रार्थितः संक्षयो मृत्युर्यस्य सः वदद्वपुः स्थिरीभवद्देहः खलः कंसः तदनुयायिगणश्च अखाद्यानि अभक्ष्याणि पलानि आमिषाणि "स्याच्चामिषे पलम्" इत्यमरः । खदन् भक्षयन् अवाच्यानि वक्तुमनर्हाणि गाल्यादीनि गदन् प्रलपन् सतां सज्जनानां मनः चेतः रदन् विलिखन् पीडयन् मदात् मत्ततया नदन् अव्यक्तशब्दं कुर्वन् अधुना सम्प्रति क्षणं स्वल्पकालं यावत् ('कालाध्वनोः' इतिद्वितीया। गर्दभस्वरैः रासभसदृशैः शब्दैः नर्दतु शब्दायतां ॥ ९ ॥

अखाद्यानीति । ५० खाद्-भक्षणे । अस्माद्ण्यत् । खदन्निति । ५१ खद-स्थैर्ये हिंसायां च । चाद्भक्षणेऽपि । वदन्निति । ५२ वद-स्थैर्ये । गदन्निति । ५३ गद-व्यक्तायां वाचि । रदन्निति । ५४ रद-विलेखने । तच्च विदारणं क्षोभणं वा । नदन्निति । ५५ णद-अव्यक्ते शब्दे । 'णो नः' (६।१।६५) एभ्यः शता । अर्दितेति । ५६ अर्द-गतौ याचने च । अस्मात् कर्मणि क्तः । नर्दत्विति । ५७ नर्द-५८ गर्द-शब्दे । नर्देरतिसर्गे लोट् । गर्दभ इति । 'कृशृशालिगर्दिभ्योऽभच्' इत्यभच्प्रत्ययः ॥ ८ ॥

अतर्दकास्त्वद्य विकर्दमाशयाः प्रखर्दवृत्तैरसमन्तितान्तिकाः ।
श्रुतान्दुकैश्चित्तगजेन्द्ररोधिनस्तुष्यन्तु सन्तो गुणविन्दुलोलुपाः ॥ ९ ॥

अतर्दका इति तु पुनः अतर्दकाः अहिंसकाः विकर्दमाशयाः विकर्दमः कलङ्कपङ्करहित आशयोऽभिप्रायः मनो वा येषां ते प्रखर्दवृत्तैः क्रूरव्यापारैः असमन्तितान्तकाः असमन्तितम् असम्बद्धम् अन्तिकं समीपं येषां ते श्रुतान्दुकैः श्रुतानि शास्त्राणि एव अन्दुकाः निगडानि पादश्रृङ्खला इति यावत् तैः । "अथ श्रृङ्खला

अन्दुको निगडोऽस्त्री स्यात्" इत्यमरः। **चित्तगजेन्द्ररोधिनः** चित्तं मन एव गजेन्द्रः करिराजः तस्य रोधिनः निवर्त्तनशीलाः । **गुणबिन्दुलोलुपाः** गुणस्य शान्त्याद्यन्यतमस्य बिन्दोरंशेपि लोलुपाः भृशं लुब्धाः **सन्तः** सत्पुरुषाः **अद्य तुष्यन्तु** कंसादिदुष्टनाशेन प्रसन्ना भवन्तु ॥ ९ ॥

**अतर्दका** इति। ५९ तर्द--हिंसायां। ण्वुल्। **विकर्दमे**ति। ६० कर्द--कुत्सिते शब्दे। बाहुलकात् औणादिकोऽमच्। **प्रखर्द**ति। ६१ खर्द--दन्दशूके। दन्दशूक इति-तत्कर्तृकं दंशनमुक्तम्। अस्मात् पचाद्यच्। **असमन्तिते**ति। ६२ अति--६३-अदि बन्धने। अन्तेः कर्मणि क्तः। **अन्दुके**ति। 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषू' इत्यू-प्रत्ययान्ताः। अन्देः स्वार्थे कनि। 'केऽणः' (७।४।१३) इति ह्रस्वः। **इन्द्रे**ति। ६४ इदि--परमैश्वर्ये। अस्माद् 'ऋज्रेन्द्र-' इत्यादिना निपातितो रन्। **बिन्दु**रिति। ६५ बिदि--अवयवे। बाहुलकादुप्रत्ययः ॥ ९ ॥

**मनोज्ञगण्डं तमनिन्दिताननं नन्दात्मजं शारदचन्द्रशीतलम्।**
**पराक्रमत्रन्दनकन्दितासुरं संक्रन्दनक्रन्दितमीक्षितास्महे ॥ १० ॥**

**मनोज्ञगण्ड**मिति वयं **मनोज्ञगण्डं** मनोज्ञौ मनोहरौ गण्डौ कपोलौ यस्य तम्। **अनिन्दिताननं** सुवदनं **शारदचन्द्रशीतलं** शरदि भवः शारदो यः चन्द्रस्तद्वत् शीतलं शिशिरं **पराक्रमत्रन्दनकन्दितासुरं** पराक्रमस्य बलस्य त्रन्दनेन चेष्टया कन्दिता रोदिता असुरा दैत्या येन स तं **संक्रन्दनक्रन्दितं** संक्रन्दनेन इन्द्रेण "संक्रन्दनो दुश्च्यवनस्तुराषाड्" इतीन्द्रनामस्वमरः। क्रन्दितं स्वरक्षार्थं पुनः २ आहूतं **तं** प्रकृतं **नन्दात्मजं** नन्दगोपस्य तनूजम् **ईक्षितास्महे** द्रक्ष्यामः ( अनद्यतने भविष्यति लुट् ) ॥ १० ॥

**गण्डम्**। ६६ गडि--वदनैकदेशे। अस्मात् पचाद्यच्। वदनैकदेशे इति तदारम्भक्रियोक्ता। **अनिन्दिते**ति। ६७ णिदि--कुत्सायाम्। कर्मणि क्तः। **नन्दे**ति। ६८ टुनदि--समृद्धौ। समृद्धिहेतुत्वे पर्यवस्यति। पचाद्यच्। **चन्द्रे**ति। ६९ चदि--आह्लादे दीप्तौ च। स्फायि-तञ्चि-वञ्चि-शकि-क्षिपि-क्षुदि-सृपि-तृपि-दृपि-वन्दि-उन्दि-श्विति-वृति-अजि-नीपदि-मदि-मुदि-खिदि-छिदि-भिदि-मन्दि-चन्दि-दहि--दसि-दम्भि--वासि-वाशि-शीङ्-हसि-सिधि-शुभिभ्यो रक्' इति रक्। **त्रन्दने**ति। ७० त्रदि--चेष्टायाम्।

( टि० ) १ "मृगय्वादित्वात्कुप्रत्ययः" इति तरवबोधिनी।

ल्युट् । **कन्दितेति** । ७१ कदि-७२ कदि-७३ क्लदि-आह्वाने रोदने च । कन्दे-र्णिजन्तात् क्तः । **संक्रन्दनेति** । 'समि-क्रन्द-कृषि-ह्लादिभ्यः' इति नन्द्यादित्वात्-ल्ल्युट् । **क्रन्दितमिति** । क्रन्देः कर्मणि क्तः ॥ १० ॥

**अक्लिन्दनीयाञ्शुधितात्मनो जनान्प्रशीकते यः करुणावलोकनैः ।**
**तमुत्तमश्लोकमवेत्य तत्स्तुतिद्रेकैरुपप्रेकयितास्मि दिक्तटम् ॥ ११॥**

**अक्लिन्दनीयानिति** यः श्रीकृष्णः **अक्लिन्दनीयान्** परिदेवयितुमनर्हान् **शुधितात्मनः** शुधितः शुद्धः आत्मा मनः बुद्धिर्वा येषां तान् । "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेपि च" इति धरणिः । **जनान्** स्वभक्तान् **करुणावलोकनैः** दयादृष्ट्या **प्रशीकते** प्रकर्षेण सिञ्चति । अहं तं प्रकृतम् **उत्तमश्लोकं** उत्तमः सर्वोत्कृष्टः श्लोकः स्तुत्यर्थकच्छन्दोबद्धशब्दसमुदायो यस्य तम् **अवेत्य** अवलोक्य **तत्स्तुतिद्रेकैः** तस्य श्रीकृष्णस्य स्तुतिरूपैः द्रेकैः शब्दैः **दिक्तटम्** आशाप्रान्तम् **उपप्रेकयितास्मि** शब्दयिष्यामि ॥ ११ ॥

**अक्लिन्दनीयानिति** । ७४ क्लिदि-परिदेवने । अस्माण्णिजन्तादनीयर् । **शुधितेति** । ७५ शुन्ध-शुद्धौ । अस्मात् कर्तरि क्तः 'अनिदिताम्' (६।४।२४) इति नकारस्य लोपः । अतादय उदात्ता उदात्तेतः । **प्रशीकत** इति । ७६ शीकृ-सेचने । एतदादयः श्लाघ्यन्ता उदात्ता अनुदात्तेतः अस्माल्लट् । आत्मनेपदारम्भसूचक-स्तशब्दः । **अवलोकनैरिति** । ७७ लोकृ-दर्शने । ल्युट् । **उत्तमश्लोकमिति** । ७८ श्लोकृ-संघाते । स च ग्रन्थनम् । तच्च कर्मगतं कर्तृगतं वा । अस्मात् कर्मणि घञ् । **द्रेकैरिति** । ७९ द्रेकृ-८० ध्रेकृ-शब्दोत्साहयोः । शब्दोत्साह इत्येके । उत्साहो वृद्धिरौद्धत्यं वा द्रेकेर्घञ् । **उपप्रेकयितास्मि** । ध्रेकेर्लुट् ॥ १२ ॥

**स एवमादीन्विमृशन्नरेकधीरसेकत स्रेकितमानसो हरौ ।**
**दुःस्रक्कमाश्रङ्क्य हरेः पदं जनः प्रश्लङ्कते कुत्र रुजं क्व शङ्कते ॥१२॥**

**स इति अरेकधीः** अरेकाऽशङ्का धीर्बुद्धिर्यस्य सः **हरौ** श्रीकृष्णे **स्रेकितमानसो** गतस्वान्तः सः अक्रूर **एवमादीन्** इत्यादिमनोगतानर्थान् **विमृशन्** विचारयन् सन् **असेकत** गच्छतिस्म । तथाहि **जनः** भगवद्भक्तः **दुःस्रक्कं** दुष्प्रापं **हरेः** भगवतः **पदं** स्थानं(पृ० १ पं० १६) भक्तिगम्यम् **आश्रङ्क्य** प्राप्य **कुत्र** कस्मिन् स्थाने **रुजं** पीडां **प्रशङ्कते** प्राप्नोति **क्व** वा **शङ्कते** शङ्कां संकोचं करोति ? न क्वापीत्यर्थ इति काकुः॥ १२॥

**अरेकेति** । ८१ रेकृ-शङ्कायाम् । घञ् । **असेकत** । ८२-सेकृ ८३ स्रेकृ-

८४ स्रकि ८५ श्रकि--८६ श्लकि--गत्यर्थाः । स्रेकेर्लङ् । **स्रकितेति** । स्रेकेः कर्तरि क्तः **दुःस्रङ्कमिति** । स्रङ्कः ' ईषद्दुःसुषु कृच्छ्रा '(३।३।१२६) इत्यादिना खल् । **आश्रङ्क्येति** । श्रङ्केर्ल्यप् । **प्रश्लङ्कत** इति श्लङ्केर्लट् । **शङ्कत** इति । ८७ शकि–शङ्कायाम् । लट् ॥१२॥

**फलाङ्कितान्वङ्कितवल्लिमङ्कितान्वनप्रदेशानुरुकाककोकिलान् ।**
**वृकावृतान्मुग्धचकोरकूजितानुड्डीनकङ्कानयमत्यवङ्कत ॥ १३ ॥**

**फलाङ्कितानिति अयम्** अक्रूरः **फलाङ्कितान्** फलैः रसालादिभिः अङ्कितान् लक्षितान् **वङ्कितवल्लिमङ्कितान्** वङ्किताभिः कुटिलीभूताभिः वल्लिभिः मङ्कितान् मण्डितान । **उरुकाककोकिलान्** बहवः काकाः वायसाः कोकिलाः परभृतश्च यत्र तान् **वृकावृतान्** वृकैः ईहामृगैः " कोक ईहामृगो वृकः " इत्यमरः । आवृतान व्याप्तान् **मुग्धचकोरकूजितान्** मुग्धं शोभनं चकोरकूजितं तदाख्यपक्षिशब्दः येषु तान् **उड्डीनकङ्कान्** उड्डीनाः उत्पतिताः कङ्काः लोहपृष्ठाः पक्षिणो येषु तान् " लोहपृष्ठस्तु कङ्कः स्यात् " इत्यमरः । **वनप्रदेशान्** अरण्यस्थलानि **अत्यवङ्कत** अतिक्रम्य गतवान् ॥ १३ ॥

**अङ्कितेति** । ८८ अकि–लक्षणे । कर्मणि क्तः । **वङ्कितेति** । ८९ वकि–कौटिल्ये । कर्तरि क्तः । **मङ्कितानिति** । ९० मकि–मण्डने । कर्मणि क्तः । **काक** इति । ९१ कक–लौल्ये । इच्छायां च द्रुमे । अस्माद् बाहुलकात् कर्तरि घञ् । **कोकिलः** । ९२ कुक-९३ वृक-आदाने । 'सलि-कलि-अनि-महि-भडि-भण्डि-शण्डि-पिण्डि-तुण्डि-कुकि-भूभ्य इलच् ' (उ०) इति कुकेरिलच् । **वृकेति** वृकेरिगुपधत्वात् कः । **चकोरेति** । ९४ चक–तृप्तौ प्रतिघाते च । अस्मात् ' कठिचकिभ्यामोरच् ' इत्योरच् । **कङ्केति** । ९५ ककि–९६ वकि–९७ श्वकि--९८ त्रकि--९९-ढौकृ १०० त्रौकृ--१०१ ष्वष्क--१०२ वष्क--१०३ मस्क--१०४ टिकृ--१०५ टीकृ–१०६ तिकृ–१०७ तीकृ-१०८ रघि–१०९ लघि–गत्यर्थाः । कङ्केः पचाद्यच् । **अत्यवङ्कतेति** । वङ्केर्लङ् ॥

**प्रश्वङ्कनोत्त्रङ्किततद्रथस्वानादढौकि भीतैरपि नो शिखावलैः ।**
**विष्वकपरित्रौकितलोचनैः स्थितं विष्वष्कमाणाम्बुदनादशङ्कया ॥१४॥**

**प्रश्वङ्कनेति प्रश्वङ्कनोत्त्रङ्किततद्रथस्वनात्** प्रश्वङ्कनेन शीघ्रगमनेन उत्त्राङ्कतात् उद्गतात् तस्य अक्रूरस्य रथस्य स्यन्दनस्य स्वनात् शब्दात् **भीतैः** भीतिमापन्नैः **अपि शिखावलैः** मयूरैः "शिखावलः शिखी केकी" इति मयूरनामस्वमरः । **नो अढौकि** न

गतम् । प्रत्युत **विष्वष्कमाणाम्बुदनादशङ्कया** विष्वंष्कमाणस्य वेगेन गच्छतः अम्बुदस्य मेघस्य नादः शब्दस्तस्य शङ्कया भ्रमेण **विष्वक्परित्रौकितलोचनैः** विष्वक् सर्वतः परित्रौकितानि संचारितानि लोचनानि नेत्राणि यैः तादृशैः सद्भिः **स्थितम्** आसितम् ॥ (तिष्ठतेः भावे क्तः) अत्र भ्रान्तिमानलंकारः ॥ १४ ॥

**प्रश्वङ्कनेति** । श्वङ्केर्ल्युट् । **उत्त्रङ्कितेति** । त्रङ्केः कर्तरि क्तः । **अढौकी**-ति । भावे चिण् । **परित्रौकितेति** । त्रौकेः णिचि कर्मणि क्तः । **विष्वष्कमाणे**ति ष्वष्केः शानच् । 'सुब्धातुष्ठिवुष्वष्कतीनां न' इति धात्वादेः षः साभावः ॥ १४ ॥

**अवष्कि रोहिद्भिरमस्कि विष्किरैरटेकि गोधाभिरटीकि पन्नगैः ।**
**अरङ्घि कोकैर्लघु तद्रथस्वनात्प्रबुध्य सिंहैः पुनरङ्घितं तदा ॥१५॥**

**अवष्कीति तदा** गमनकाले **रोहिद्भिः** मृगविशेषैः **अवष्कि** उत्प्लुत्यगतं । **विष्किरैः** पक्षिभिः **अमस्कि** उत्पतितं । **गोधाभिः** निहाकाभिः "निहाका गोधिका समे" इत्यमरः । **अटेकि** जवेन गतं । **पन्नगैः** उरगैः सर्पैः "उरगः पन्नगो भोगी" इत्यमरः । **अटीकि** अपसृतं । **कोकैः** चक्रवाकैः **लघु** क्षिप्रं "लघु क्षिप्रमरं द्रुतम्" इत्यमरः । **अरङ्घि** उद्गतम् । **सिंहैः** शार्दूलैः **तद्रथस्वनात्** तद्रथस्य अक्रूरस्यन्दनस्य स्वनात् (सर्वत्र वैष हेतुः) **प्रबुध्य** जागरित्वा **पुनः अङ्घितं** सधैर्यं गतम् । अत्र गत्यार्थका अपि एते कर्तृपदेन गतिविशेषे योजिताः ॥ १५ ॥

**अवष्कि, अमस्कि, अटेकि, अटीकि, अरङ्घि** । वष्कादीनां पञ्चानां भावे लुङि चिण् । **लघ्विति** । 'रङ्घिलङ्घ्योर्नलोपश्च' इत्युप्रत्ययः । **अङ्घितम्** । ११० अघि-१११ वघि-११२ मघि—गत्याक्षेपे । गतौ गमनारम्भे चैके । मघि—कैतवे च । अङ्घेः साध्यभावे क्तः ॥ १५ ॥

**प्रवङ्घमानस्य च तस्य सत्वरं विमङ्घनस्याधिकराघितात्मनः ।**
**निकाममुल्लाघतनोः समत्यगात्प्रद्राघिता श्लाघ्यगुणस्य वर्तनी ॥ १६ ॥**

**प्रवङ्घमानस्येति सत्वरम्** "आशु सत्वरं चपलं तूर्णमविलम्बितमाशु च" इत्यमरः । **प्रवङ्घमानस्य** प्रकर्षेण गच्छतः **विमङ्घनस्य** विगतकैतवस्य **अधिकरा**-**घितात्मनः** आधिकमत्यर्थं राघितः समर्थः आत्मा यस्य स तस्य । **निकामम्** अतिशयेन **उल्लाघतनोः** उल्लाघा नीरोगा तनुः शरीरं यस्य स तस्य । **श्लाघ्यगुणस्य** श्लाघ्याः स्तुत्या गुणाः सुशीलतादयो यस्य स तस्य । अक्रूरस्य **प्रद्राघिता** अतीवायता **वर्तनी**

पद्धतिः "सरणी पद्धतिः पद्या वर्तन्येकपदीति च" इत्यमरः । मार्गः **समत्यगात्** सम्यक् अनायासेनेव अतिक्रान्ता ॥ १६ ॥

**प्रवङ्घमानस्येति** । वङ्घेः शानच् । **विमङ्घनस्य** । मङ्घेर्ल्युट् । **राघितेति** । ११३ राघृ–११४ लाघृ–११५ द्राघृ–सामर्थ्ये । द्राघृ- आयामे च । स च दैर्घ्यं क्रियासमर्थनं वा । राघेः कर्तरि क्तः । **उल्लाघेति** । 'अनुपसर्गात्फुल्लक्षीब–'(८।२।५५) इति लाघेर्निपातितः । **प्रद्राघितेति** । द्राघेः कर्तरि क्तः । **श्लाघ्येति** । ११६ श्लाघृ–कत्थने । अस्मात् कर्मणि ण्यत् । शीकादय उदात्ता अनुदात्तेतः ॥१६॥

**अफक्कतातक्यगुणेन तङ्कता खलश्ववुक्कापरुषे पुरेऽमुना ।**
**फेनैः कखन्तीमिव तां कलिन्दजां संतीर्य वृन्दावनमैक्ष्यनोखितम् ॥१७॥**

**अफक्कतेति अफक्कता** मन्दगमनमसद्व्यापारं च कुर्वता **अतक्यगुणेन** अतक्या अहसनीया गुणा दयादाक्षिण्यादयो यस्य तेन **खलश्ववुक्कापरुषे** खला दुष्टा एव श्वानस्तेषां वुक्काभिर्भषणैः परुषे निष्ठुरे **पुरे** मथुरानगर्यां **तङ्कता** कृच्छ्रेण जीवता **अमुना** अक्रूरेण **फेनैः** हिण्डीरैः **कखन्तीं** हसन्तीम् इव (इत्युत्प्रेक्षा) **तां** तादृशीं **कलिन्दजां** यमुनां "कालिन्दी सूर्यतनया यमुना शमनस्वसा" इत्यमरः । **संतीर्य** समुल्लङ्घ्य. **अनोखितं** क्वचिदप्यशुष्कं **वृन्दावनं** गोचारणरासक्रीडादिप्रदेशविशेषः **ऐक्षि** दृष्टम् ॥ १७ ॥

**अफक्कतेति** । ११७ फक्क-नीचैर्गतौ । शिङ्घयन्ता उदात्ता उदात्तेतः । नीचैर्गतिर्मन्दगमनमसद्व्यापारो वा अस्मात् परस्मैपदारम्भद्योतकः शता । **अतक्येति** । ११८ तक–हसने । अस्मात् कर्मणि 'तकिशसिचतियतिजनीनां यद्वाच्यः' इति यत् । **तङ्कता** ११९ 'तकि–कृच्छ्रजीवने' । शता । **वुक्केति** । १२० वुक्क–भषणे । भषणं श्वरवः । 'गुरोश्च हलः' ( ३।३।१०३ ) इत्यप्रत्ययः । **कखन्तीमिति** । १२१ कखे–हसने । शत्रन्तान्ङीप् । **अनोखितम्** । १२२ओखृ-१२३ राखृ-१२४ लाखृ-१२५द्राखृ-१२६ध्राखृ-शोषणालमर्थयोः । ओखेः कर्तरि क्तः ॥१७॥

वृन्दावनं विशिनष्टि चतुर्दशभिः ।

**आराखितत्वग्भिः लाखितच्छदैः प्रद्राखिताध्राखिफलैश्च शाखिभिः ।**
**प्रश्लाखितं प्रोखितसत्त्वमुङ्क्षितं खर्गैवखन्मारुतवाङ्क्षिसौरभम् ॥ १८ ॥**

कथम्भूतं वृन्दावनमित्याह **अराखितेति अराखितत्वग्भिः** अशुष्कशल्कैः **अलाखितच्छदैः** अलाखिताः अविगताः छदाः पत्राणि येषां तैः "पत्रं पलाशं छन्दनं दलं पर्णं छदः पुमान्" इत्यमरः । **प्रद्राखिताध्राखिफलैश्च** प्रद्राखितानि अत्यन्त

पर्याप्तानि अभ्राखीण्यशोषणशीलानि फलानि येषां तैः **शाखिभिः** वृक्षैः **प्रश्लाखितं** व्याप्तं तथा **प्रोखितसत्त्वं** प्रोखितानि इतस्ततो गच्छन्ति सत्वानि जन्तवो यत्र तत् "सत्वमस्त्री तु जन्तुषु" इत्यमरः। एवं **खगैः** पक्षिभिः **उङ्खितं** व्याप्तं। तथा **वखन्मारुत वाङ्खिसौरभं** वखता संचरता मारुतेन वायुना वङ्खि चलनशीलं सौरभं सौगन्ध्यं यस्य तत् वृन्दावनम् ऐक्षीति पूर्वेणान्वयः एवमुत्तरत्रापि ॥ १८ ॥

**अराखितेति**। राखेः कर्तरि क्तः। **अलाखितेति**। लाखेः क्तः। **प्रद्राखितेति** द्राखेः क्तः। **अभ्राखीति**। भ्राखेर्णिनिः। **शाखीति**। १ ७ शाखृ--१२८ श्लाखृ-व्याप्तौ। शाखेरप्रत्ययान्ताद्व्रीह्यादित्वादिनिः। **प्रश्लाखितम्**। श्लाखेः क्तः। **प्रोखितेति** १२९ उख-१३० उखि-१३१ वख-१३२ वखि-१३३ मख-१३४ मखि-१३५ णख १३६ णखि-१३७ रख-१३८ रखि-१३९ लख-१४० लखि-१४१ इख-१४२ इखि १४३ ईखि-१४४ वल्ग-१४५ रगि-१४६ लगि-१४७ अगि-१४८ वगि-१४९ मगि-१५० तगि-१५१ त्वगि-१५२ श्रगि-१५३ श्लगि-१५४ इगि-१५५ रिगि-१५६ लिगि-गत्यर्थाः। उखेः कर्तरि क्तः। **उङ्खितमिति** उङ्खेः कर्मणि क्तः। **वखदिति**। वखेः शता। **वङ्खीति**। वङ्खेर्णिनिः ॥ १८ ॥

**मखत्कपोतं मदमङ्खिबर्हिणं नखत्पिकं नङ्खितखञ्जनोत्करम्।**
**रखच्छशं राङ्खितरङ्कु रिङ्खितद्विपं लखत्केसरिलङ्खदारवम् ॥ १९ ॥**

पुनः कीदृशं वृन्दावनमित्याह **मखदिति मखत्कपोतं** मखन्त उद्गच्छन्तः कपोताः पारावता यस्मिंस्तत्। **मदमङ्खिबर्हिणं** मदेन मत्ततया मङ्खिनः विचरणशीला बर्हिणा मयूरा यत्र तत् "मयूरो बर्हिणो बर्हीं" इत्यमरः। **नखत्पिकं** नखन्तः उद्गच्छन्तः पिकाः कोकिला यत्र तत् "कोकिलः पिक इत्यपि" इत्यमरः। **नङ्खितखञ्जनोत्करं** नङ्खितः गतः खञ्जनोत्करः खञ्जरीटसमूहो यस्मिन् तत्। "खञ्जरीटस्तु खञ्जनः" इत्यमरः। **रखच्छशं** रखन्तो विचरन्तः शशा लम्बकर्णा जन्तुविशेषा यत्र तत्। **राङ्खितरङ्कु** रङ्खिताः द्रुताः रङ्कवो मृगविशेषा यस्मिंस्तत्। रिङ्खिताः मन्दं गच्छन्तः द्विपा हस्तिनो यत्र तत्। **लखत्केसरिलङ्खदारवं** लखद्भ्यः इतस्ततो गच्छद्भ्य केसरिभ्यः सिंहेभ्यः "सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः" इत्यमरः। लङ्खन् उद्गच्छन् आरवः स्वनो यत्र तत्। अत्र सिंहे आरवशब्दः कविख्यातिविरुद्धः। तदुक्तं। मञ्जीरादिषु रणितप्रायं पक्षिषु कूजितप्रभृतिः॥ स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥ १९ ॥

**मखदिति** मखेः शता । **मङ्खीति** मखेर्णिनिः । **नखदिति** नखेः शता । **नङ्खितमिति** नङ्खेः क्तः । **रखदिति** रखेः शता । **रङ्खितेति** रङ्खेः क्तः । **लखत्०** **लङ्खत्०** लखिलङ्खयोः शता ॥ १९ ॥

**एखच्चकोरोत्करमिङ्खितं शुकैः प्रेङ्खल्लतावल्गनरङ्गमण्डपम् ।**
**विलङ्गदेणं शबराङ्गनाजनप्रवङ्गितं मङ्गलधेनुतङ्गितम् ॥ २० ॥**

**एखच्चकोरेति एखच्चकोरोत्करम्** एखन् गच्छन् चकोरोत्करः तदाख्यपक्षिसमूहो यत्र तत् **शुकैः** कीरैः **इङ्खितं** प्राप्तं **प्रेङ्खल्लतावल्गनरङ्गमण्डप** प्रेङ्खन्तीनां वायुवशाच्चलन्तीनां लतानां वीरुधां रङ्गमण्डपं नाट्यशालाचतुष्कं **विलङ्गदेणं** विलङ्गन्तः विशेषेण गच्छन्तः एणाः हरिणाः यत्र तत् । **शबराङ्गनाजनप्रवाङ्गितं** शबराणां म्लेच्छजातीयानाम् अङ्गनाजनेन स्त्रीगणेन प्रवङ्गितं प्राप्तं **मङ्गलधेनुतङ्गितं** मङ्गलरूपाभिः धेनुभिः सकृत्प्रसूताभिः गोभिः सामान्यगोभिर्वा तङ्गितं व्याप्तम् ॥२०॥

**एखदिति** । इखेः शता । **इङ्खितम्** । इङ्खेः कर्मणि क्तः । **प्रेङ्खदिति** । ईङ्खेः शता । **वल्गनेति** । वल्गेर्ल्युट् । **रङ्गेति** । रङ्गेः गच्छन्त्यस्मिन् प्रेक्षकाणां मनांसीति । 'हलश्च' (३।३।१२१) इति संज्ञायामाधिकरणे घञ् । अङ्गेः प्राप्नोत्यवयवानित्यङ्गम् । प्राग्वद् घञ् । अस्मात् 'अङ्गात् कल्याणे' इति पामादिपाठान्मन्वर्थीयो नः । **प्रवङ्गितमिति** । वङ्गेः कर्मणि क्तः । **मङ्गलेति** 'मङ्गेरलच्' (उ०) इत्यलच् । **तङ्गितमिति** तङ्गेः कर्मणि क्तः ॥२०॥

**त्वङ्गत्खगश्लङ्गितपक्ष्ममारुतश्लङ्गद्रजोराजिभिरिङ्गिताम्बरम् ।**
**रिङ्गत्प्रियालिङ्गितभृङ्गसंगमत्वङ्गत्प्रसूनं रवितापयुङ्गितम् ॥ २१ ॥**

**त्वङ्गदिति** पुनः कीदृशं वृन्दावनं **त्वङ्गत्खगश्लङ्गितपक्ष्ममारुतश्लङ्गद्रजोराजिभिः** त्वङ्गतां विहायसा गच्छतां खगानां पक्षिणां मारुतैः वायुभिः श्लङ्गन्तीभिः उद्गच्छन्तीभिः रजोराजिभिः धूलिपटलैः **इङ्गिताम्बरं** व्याप्ताकाशं । **रिङ्गत्प्रियालिङ्गितभृङ्गसङ्गमत्वङ्गत्प्रसूनं** रिङ्गन्त्या चलन्त्या प्रियया नायिकयाऽऽलिङ्गितानां संश्लिष्टानां भृङ्गाणां भ्रमराणां सङ्गमेन श्लेषेण त्वङ्गन्ति चलन्ति प्रसूनानि पुष्पाणि यस्मिंस्तत् "पुष्पं प्रसूनं कुसुमं सुमम्" इत्यमरः । **रवितापयुङ्गितं** रवेः सूर्यस्य तापेन तीक्ष्णातपेन युङ्गितं वर्जितम् ॥ २१ ॥

**त्वङ्गदिति** । त्वङ्गेः शता । **श्लङ्गितेत्यादि** श्लङ्गेः कर्तरि क्तः । श्लङ्गेः शता । इङ्गेः

(टि०) १ विशेषवाचका अपि शब्दा [illegible] सामान्यवाचकाः भवन्ति ।

कर्मणि क्तः । **रिङ्गदिति** रिङ्गेः शता । **आलिङ्गितेति** । आङ्पूर्वत्वादाश्लेषार्थत्वम् । कर्मणि क्तः । **त्वङ्गदिति** । त्वगि-कम्पने । अस्माच्छाता । **युङ्गितीमिति** । १५७ युगि-१५८ जुगि-१५६ वुगि-वर्जने । युङ्गेः कर्मणि क्तः ॥२१॥

**विजुङ्ग्य वुङ्ग्यं गुणसंघदङ्घका अलङ्घितानन्दरसात्तघर्घनाः ।**
**सुमङ्घिताः शिङ्घितपुष्पसौरभा यद्वर्चमानाः पशुपाः प्रसेचिरे ॥२२॥**

**विजुङ्ग्येति वुङ्ग्यं** वर्जनीयं पापं **विजुङ्ग्य** वर्जयित्वा **गुणसघदङ्घकाः** गुणसंघस्य भक्तिदयादाक्षिण्यादिगुणगणस्य दङ्घकाः पालकाः **अलङ्घितानन्दरसात्तघर्घनाः** अलङ्घितस्य अशुष्कस्य परिपूर्णस्येति यावत् आनन्दस्य रसेन सुखास्यानुभवेन आत्तं गृहीतं घर्घनं हासो यैस्ते । **सुमङ्घिताः** सुष्ठु मण्डिताः **सिङ्घितपुष्पसौरभाः** सिङ्घितम् आघ्रातं पुष्पाणां सौरभं सौगन्ध्यं यैस्ते **पशुपाः** गोपाः **वर्चमानाः** प्रकाशमानास्सन्तः **यत् प्रसेचिरे** प्रकर्षेण सेवितवन्तः तद् वृन्दावनम् ऐक्षीति-पूर्वेणान्वयः ॥ २२ ॥

**विजुङ्ग्येति** । जुङ्गेर्ल्यप् । **वुङ्ग्यमिति** । वुङ्गेर्ण्यत् । **दङ्घका** इति । ' दघि-पालने त्यागे च द्रमे । अस्माण्ण्वुल् । **अलङ्घितेति** । लघि—शोषणे ' । कर्तरि क्तः । **घर्घनेति** । १६०[1] घर्घ—हसने । ल्युट् । **सुमङ्घिताः** । १६१ मघि—मण्डने । कर्तरि क्तः । १६२ शिघि—आघ्राणे । कर्मणि क्तः । फक्कादय उदात्ता उदात्तेतः । **वर्चमाना** इति । १६३ वर्च—दीप्तौ ॥ ईजन्ता उदात्ता अनुदात्तेतः । अस्माच्छानच् । **प्रसेचिरे** १६४ षच—सेचने सेवनेऽपि । लिट् ॥२२॥

**सुलोचना यत्र शचीसमप्रभा अशाश्वचुः श्वञ्चितसौरभाः कचे ।**
**सकञ्चुकाः काञ्चनकाञ्चिभूषिता व्रजाङ्गना निर्मचनेन नर्मणा ॥ २३ ॥**

**सुलोचना** इति **यत्र** यस्मिन् वृन्दावने **सुलोचनाः** शोभननयनाः **शचीसमप्रभाः** शच्या इन्द्राण्या ' पुलोमजा शचीन्द्राणी " इत्यमरः । समा तुल्या प्रभा-कान्तिः यासां ताः **कचे** केशकलापे **श्वञ्चितसौरभाः** श्वञ्चितं व्याप्तं सौरभं सौगन्ध्यं यासां ताः **सकञ्चुकाः** सचोलकाः **काञ्चनकाञ्चिभूषिताः** काञ्चनकाञ्च्या स्वर्णरशनया भूषिताः अलङ्कृताः **व्रजाङ्गनाः** व्रजदेशयोषितः **निर्मचनेन** निर्गतं मचनं शाठ्यं यस्मात् तेन **नर्मणा अशाश्वचुः** विचारितवत्यः ॥ २३ ॥

(टि०)—१ घघ—हसने इति धातुपाठे । ततश्च ' घाघना ' इति यङन्ताद-प्रत्यये युक्तम् ।

**सुलोचना**। १६५ लोचृ-दर्शने। करणे ल्युट्। **शची**ति। १६६ शच-व्यक्तायां वाचि। इन्नन्तात् 'कृदिकारादक्तिनः' इति ङीष्। **अशाश्वचुः**। १६७ श्वच-१६८ श्वचि-गतौ। यङ्लुगन्तात् श्वचेर्लङि 'सिजभ्यस्त--' (३।४।१०६) इति झेर्जुस्। **श्वञ्चिते**ति। श्वञ्चेः कर्तरि क्तः। **कचे**ति। १६६ कच-बन्धने। दीप्तौ च द्रुमे। यूनां मनो बध्नातीति पचाद्यच्। **कञ्चुके**ति। १७० कचि-१७१ काचि-दीप्तिबन्धनयोः। कचेः बाहुलकादुकप्रत्ययः। **काञ्चने**ति। **काञ्ची**ति। काञ्चेरनुदात्तेत्त्वाद्युच्। औणादिक इन्नपि। **मचने**ति। १७२ मच-१७३ मुचि-कल्कने। मचीत्येके। मुचेरयन्ये। कल्कनं दम्भः। शाठ्यं कत्थनं वा। लोकरञ्जनार्थं साध्वाचारो दम्भः। **निर्मचनेने**ति मचेर्ल्युट्॥२३॥

**अमुञ्चनैर्मञ्चितचित्तपञ्चितत्रयीमतप्रस्तुचितैः शुभार्जकैः।**
**समृञ्जितं कन्दमभृक्तसत्फलान्यदद्भिरेकत्र यदेजितं जनैः॥ २४॥**

**अमुञ्चनै**रिति **यद्** वृन्दावनं **एकत्र** एकास्मिन्प्रदेशे **अमुञ्चनैः** अविद्यमानं मुञ्चनं दम्भः शाठ्यमात्माश्लाघा वा येषु तैः **मञ्चितचित्तपञ्चितत्रयीमतप्रस्तुचितैः** मञ्चिते धारिते उच्छ्रिते पूजिते वा हरौ यत् चित्तं मनस्तत्र पञ्चितेन व्यक्तीकृतेन त्रय्याः वेदस्य मतेन सिद्धान्तेन प्रस्तुचितैः प्रसन्नैः **शुभार्जकैः** शुभस्य कल्याणस्य ऐहिकस्य मोक्षरूपस्य वा अर्जकैः संपादकैः **समृञ्जितम्** अग्निपक्वं **कन्दं** सूरणम् "अर्शोघ्नः सूरणः कन्दः" इत्यमरः। **अभृक्तसत्फलानि** अभृक्तानि अनाग्निपक्वानि कालपक्वानीति यावत् सन्ति उत्तमोत्तमानि फलानि **अदद्भिः** भक्षयद्भिः **जनैः** तापसलोकैः **एजितं** शोभितं तद् वृन्दावनमैक्षीति पूर्वेणान्वयः॥ २४॥

**मञ्चिते**ति। १७४ मचि-धारणोच्छ्रायपूजनेषु। कर्मणि कर्तरि वा क्तः **पञ्चिते**ति। १७५ पचि-व्यक्तीकरणे। कर्मणि क्तः। **प्रस्तुचितैः**। १७६ष्टुच-प्रसादे। कर्तरि क्तः। **अर्जकैः**। १७७ ऋज-गतिस्थानार्जनोपार्जनेषु अर्जनोपार्जनेष्विति वा पाठः। अर्जनं स्वीकारः। ऊर्जनं शक्तिः प्राप्तिः प्राणनं वा। आङ्पूर्वाद् ऋजेर्ण्वुल्। **समृञ्जितम्**। १७८ ऋजि-१७९ भृजी-भर्जने। भर्जनं पाकः। ऋजेः कर्मणि क्तः। **अभृक्ते**ति। भृजेः प्राग्वत् क्तः। ईदित्वादनिट्त्वम्। **एजितम्**। १८० एजृ-१८१ भ्रेजृ-१८२ भ्राजृ-दीप्तौ। एजेः कर्तरि क्तः॥२४॥

**अभ्रेजि विभ्राभ्भिरनीजितैश्च यत्कदाप्यशोचद्भिरशेषजन्तुभिः ।**
**चुकोच यत्रोत्कुचिताङ्गमुन्मदः क्रौञ्चोऽपि लुञ्चन्हृदि सम्यगार्तताम् ॥२५॥**

**अभ्रेजीति यत्** वृन्दावनं **विभ्राभ्भिः** विशेषेण शोभमानैः **अनीजितैः** अकुत्सितैः **कदापि** कस्मिन्नपि काले **अशोचद्भिः** शोकमकुर्वाणैः **च अशेषजन्तुभिः** समस्तजीवैः **अभ्रेजि** शोभितम् । **यत्र** यस्मिन्वृन्दावने **उन्मदः** अतीव हृष्टः **क्रौञ्चः** पक्षिविशेषः **अपि हृदि** मनसि "हृन्मानसं मनः" इत्यमरः । **आर्ततां** विरहव्यथां **सम्यक्** सुष्ठु **लुञ्चन्** अपनयन् **उत्कुचिताङ्गम्** उच्चैः कुचितानि कुटिलभूतानि अङ्गानि अवयवा यस्मिन् कर्मणि तद्यथा स्यात्तथा **चुकोच** तारस्वरेण कूजितवान् तद् वृन्दावनमैक्षि ॥ २५ ॥

**अभ्रेजिं** । भ्रेजार्णिजन्तात् कर्मणि चिण् । **विभ्राभ्भिः** । भ्राजेः क्विपि 'चोः कुः' ( ८।२।३० ) इति कुत्वम् । वृश्चादिषत्वं तु राजेत्यनन्तरपठितस्यैव । **अनीजितैः** १८३ ईज–गतिकुत्सनयोः । कर्मणि क्तः । वर्चादयः पचिवर्जमुदात्ता अनुदात्तेतः । **अशोचद्भिः** । १८४ शुच–शोके । वृज्यन्ता उदात्ता उदात्तेतः ॥ अस्माच्छता । **चुकोच** । १८५ कुच–शब्दे तारे । गतावित्येके । अस्माल्लिट् । **उत्कुचितेति** । १८६ कुञ्च–१८७ क्रुञ्च–गतिकौटिल्याल्पीभावयोः । गतेः कौटिल्ये द्रव्यस्याल्पीभावे चेत्यर्थः। 'गतिकौटिल्ययोः' इति द्रुमे । कुञ्चेः कर्तरिः क्तः । **क्रौञ्च** इति । क्रुञ्चेः 'ऋत्विग्दधृग्' ( ३।२।५९) इत्यादिना क्विनि क्रुङ् । अस्मात्-पुनः प्रज्ञादित्वादण् **लुञ्चन्** । १८८ लुञ्च–अपनयने । शता । **सम्यगिति** । १८९ अञ्चु–गतिपूजनयोः । 'ऋत्विग्'(३।३।५९) इत्यादिना क्विन् । 'क्विन्प्रत्ययस्य कुः' ( ८।२।६२ ) इति कुत्वम् ॥२५॥

**आवक्रचञ्चूपुटतञ्चदारवत्वञ्चत्खगम्रुक्तशिखैर्लताद्रुमैः ।**
**अम्लुक्तरश्मौ शशिना निमुम्रुचे निमुम्लुचेऽर्केण च यत्र संततम् ॥२६॥**

**आवक्रेति आवक्रचञ्चूपुटतञ्चदारवत्वञ्चत्खगम्रुक्तशिखैः** आवक्रात् ईषत्कुटिलात् चञ्चूपुटात् तञ्चता उद्गच्छता आरवेण शब्देन सह त्वञ्चद्भिः गच्छद्भिः खगैः पक्षिभिः म्रुक्ताः प्राप्ताः शिखा अग्राणि येषां तैः । **लताद्रुमैः** लता वल्ल्यश्च द्रुमाः वृक्षाश्च तैः लतायुक्तैः द्रुमैश्च **अम्लुक्तरश्मौ** अम्लुता अप्रविष्टा रश्मयो यत्र तस्मिन्

(टि०)—१ 'चोः कुरिति कुत्वं इत्यादिः एतद्दृष्ट्या तस्यासिद्धेरस्य प्रथमं प्रवृत्तेः ।

**यत्र** यस्मिन् वृन्दावने **सन्ततं** सदा **शशिना** चन्द्रेण **निमुम्रुचे** अस्तमितं **अर्केण** सूर्येण **च निमुम्लुचे** अस्तङ्गतं ( भावे लिट् ) तत् ईदृक् शीतलं वृन्दावनमैक्षि ॥२६॥

**आवक्रोति** । १६० वञ्चु–१६१ चञ्चु–१६२ तञ्चु–१६३ त्वञ्चु–१६४ म्रुञ्चु १६५–म्लुञ्चु १६६ म्रुचु–१६७ म्लुचु–गत्यार्थाः । वञ्चेः 'स्फायितञ्चि–' (उ०)इत्यादिना रक्‌ नलोपश्च । **चञ्चू** इति । चञ्चेः 'पटिचटिचाञ्चिभ्यश्च'(उ०) इति भोजोक्त्या उप्रत्ययः । 'अप्राणिजातेश्च' इत्यूङ् । **तञ्चत्-त्वञ्चादिति** । तञ्चेः त्वञ्चेश्च शता । **म्रुक्तेति** । म्रुञ्चेः कर्मणि क्तः । **अम्लुक्तेति** । म्लुञ्चेः कर्तरि क्तः । **निमुम्रुचे निमुम्लुचे** । म्रुचिम्लुच्योर्भावे लिट् । निपूर्वत्वाद्वयोरस्तमयार्थत्वम् ॥२६॥

**समम्रुचत्क्षीरमथाग्लुचद्घृतं चुकोज वासांसि चुखोज मानसम् ।**
**समग्लुचत्केलिषु सज्जमानधीः स यत्र गुञ्जन्मणिनूपुरो हरिः ॥२७॥**

**समम्रुचादिति यत्र** वृन्दावने **गुञ्जन्मणिनूपुरः** गुञ्जन्तौ क्वणन्तौ मणिनूपुरौ मणियुतपादभूषणविशेषौ यस्य **सः हरिः केलिषु** क्रीडासु **सज्जमानधीः** गतबुद्धिः सन् नतु दारिद्र्यबुभुक्षाधूर्ततादिनेति भावः । **क्षीरं** पयः **समम्रुचत्** अचोरयत् । **अथ च घृतम्** आज्यम् **अग्लुचत्** स्तेयेन गृहीतवान् । **वासांसि** वस्त्राणि च **चुकोज** जहार । तथा **मानसं** व्रजवासिनां स्वान्तं **चुखोज** हृतवान् **समग्लुचत्** सम्यक् विजहार च । तद् वृन्दावनमैक्षि ॥ २७ ॥

**समम्रुचत्** । १९८ म्रुचु–१९९ ग्लुचु–२०० कुजु–२०१ खुजु-स्तेयकरणे । म्रुचेः 'जॄस्तम्भु—' (३।१।५८) इत्यादिना लुङ्यङ् । **अग्लुचत्** । ग्लुचेः प्राग्वदङ् । **चुकोज-चुखोज** । कुजेः खुजेश्च लिट् । **समग्लुचत्** । २०२ ग्लुञ्चु–२०३ षस्ज–गतौ । 'षचे' इत्यप्येके । षस्जेर्लक्षणया संनाहार्थता । ग्लुञ्चेरङि नलोपः । **सज्जमानेति** । 'यदभिप्रायेषु सज्जते' इति भाष्यप्रयोगादात्मनेपदम् । तेन शानच् **गुञ्जादिति** । २०४ गुजि–अव्यक्ते शब्दे । शता ॥२७॥

**सुरार्चिते म्लेच्छजनैर्दुरासदे श्रीलाञ्छिताङ्के स्मितपुष्पलाञ्छिते ।**
**यत्र स्थिते वाञ्छितदे हारिद्रुमे तदाञ्छितह्रीच्छनमास्त नन्दनम् ॥ २८ ॥**

**सुरार्चिते** इति **यत्र सुरार्चिते** देवपूजिते **म्लेच्छजनैः** म्लेच्छाः चातुर्वर्ण्या-

चाररहितास्तैरपशब्दभाषकैर्वा पुरुषैः **दुरासदे** दुष्प्रापे **श्रीलच्छिताङ्गे** श्रिया लक्ष्म्या शोभया च "लक्ष्मीः सम्पत्तिशोभयोः । ऋध्यौषधौ च पद्मायां वृद्धिनामौषधेऽपि च" इति कोषः । लच्छितं लक्षितमङ्कितम् अङ्गं शरीरं यस्य तस्मिन् **स्मितपुष्पलाञ्छिते** स्मितानि मन्दहासा एव पुष्पाणि प्रसूनानि तैः लाञ्छिते अङ्कनेन शोभिते **वाञ्छितदे** अभिलषितप्रदायिनि **हरिद्रुमे** हरिः श्रीकृष्ण एव द्रुमो हरिचन्दनः तस्मिन् **तदा स्थिते** कृतावासे सति **नन्दनं** देववनम् **आञ्छितह्रीच्छनम्** आञ्छितम् आयतं ह्रीच्छनं लज्जा यस्य तत् तादृशम् **आस्त** अभूत् ॥ २८ ॥

**अर्चितेति** । २०५ अर्च—पूजायाम् । 'अचे' इत्येके । अर्चेः कर्मणि क्तः । **म्लेच्छेति** । २०६ म्लेच्छ—अव्यक्ते शब्दे । स चास्पष्टशब्दः । अपशब्दो वा । म्लेच्छेः पचाद्यच् । **लच्छितेति** । २०७ लच्छ—२०८ लाछि—लक्षणे । लच्छेः कर्मणि क्तः । 'छे च' (६।१।७३) इति तुक् । पूर्वत्र 'दीर्घात्' (६।१।७४) इति तुक् । **लाञ्छितेति** । लाञ्छेः कर्मणि क्तः । **वाञ्छितेति** । २०२ वाछि-इच्छायाम् । कर्मणि क्तः । **आञ्छितेति** । २१० आछि—आयामे । कर्तरि क्तः । **ह्रीच्छनम्** । २११ ह्रीच्छ—लज्जायाम् । ल्युट् । प्राग्वत्तुक् ॥ २८ ॥

**अहूर्णचित्ताः परिमूर्च्छितव्रताः स्फूर्णामया अप्रयुशः कृतोञ्छनाः ।**
**भजन्ति यां व्युष्टिमतोऽपि भूयसीं भ्रजन्ति यद्भ्रूजनमात्रतो जनाः ॥२९॥**

**अहूर्णचित्ता** इति **अहूर्णचित्ता** अहूर्णम् अकुटिलं चित्तं मनो येषां ते **परिमूर्च्छितव्रताः** परिमूर्च्छितं परिपूर्णं व्रतं चान्द्रयणादि येषां ते । **स्फूर्णामयाः** स्फूर्णाः विस्तृता आमया रोगा येषां ते **अप्रयुशः** अप्रमत्ताः **कृतोञ्छनाः** कृतम् उपजीकार्थम् उञ्छनं शिलं यैः ते **जनाः यां व्युष्टिं** फलं समृद्धिं वा "व्युष्टिः फले समृद्धौ च" इत्यमरः । **भजन्ति** प्राप्नुवन्ति । **अतः** अस्या व्युष्टेः **अपि भूयसीं** महीयसीं व्युष्टिं **यद्भ्रूजनमात्रतः** यस्य वृन्दावनस्य भ्रजनमात्रतः प्राप्तिमात्रेण **भ्रजन्ति** प्राप्नुवन्ति । तद् वृन्दावनमैक्षि ॥ २९ ॥

**अहूर्णेति** । २१२ हुर्छा-कौटिल्ये । इह कौटिल्यमपसरणमित्येके । कर्तरि क्तः । आदित्त्वादनिट्त्वम् । **परिमूर्छितव्रताः** । २१३ मुर्छा-मोहसमुच्छ्राययोः । 'गुरोश्च हलः' (३।३।१०३) इत्यप्रत्यये मूर्छा । तस्मात् 'तदस्य संजातम्' (५।२।३६) इति तारकादित्वादितचि मूर्छितम् । **स्फूर्णेति** । २१४ स्फुर्छा-विस्मृतौ । कर्मणि क्तः । **अप्रयुशः** । २१५

युच्छ-प्रमादे। अस्मात् क्विपि 'च्छ्वोः शूड्–'(६।४।१९) उञ्छनेति। २१६ उछि-उञ्छे। उञ्छो धान्यानां पृथक्पृथगादानम्। अस्माल्ल्युट्। व्युष्टिमिति। २१७ उछी-विवासे। स च समाप्तिः। प्रायेण विबन्धनवर्जनातिक्रमेषु च द्रुमे। अस्मात् क्तिन्। भ्रजन्ति। २१८ भ्रज-२१९ भ्रजि-२२० धृज-२२१ धृजि-२२२ ध्वज-२२३ ध्वजि–गतौ। 'व्रजि' इत्येके। भ्रजेर्लट्। भ्रञ्जनेति भ्रञ्जेर्ल्युट्॥२९॥

अथ वनवर्णनमुपसंहृत्याक्रूरस्य प्रवृत्तिमाह—

**प्रभ्रज्य मोदं स दधृञ्ज तद्वनं ध्वजोद्गतिध्वञ्जितकूजदण्डजम्।**
**स्वर्गोपमं सर्जितपुण्यसंचयो गभीरगर्जद्रथतर्जिताम्बुदः॥ ३०॥**

प्रभ्रज्येति **सर्जितपुण्यसञ्चयः** सार्जितः अर्जितः पुण्यसञ्चयः सुकृतौघो येन सः। **गभीरगर्जद्रथतर्जिताम्बुदः** गभीरम् अनुत्तानं गर्जता शब्दायमानेन रथेन स्यन्दनेन तर्जितो भर्त्सितः अम्बुदो मेघो येन **सः** अक्रूरः **मोदं** हर्षं **प्रभ्रज्य** प्राप्य **ध्वजोद्गति-ध्वञ्जितकूजदण्डजं** ध्वजस्य केतोः उद्गत्या उड्डयनेन ध्वञ्जिता गताः कूजन्तः आरटन्तः अण्डजाः पक्षिणो यस्मात् तत् **स्वर्गोपमं** नाकसदृशं **तद्वनं** वृन्दावनं **दधृञ्ज** प्राप्तवान्॥ ३०॥

**प्रभ्रज्येति**। भ्रजेर्ल्यप्। **दधृञ्ज** धृञ्जेर्लिट्। **ध्वजेति**। ध्वजेः पचाद्यच्। **ध्वञ्जितेति**। ध्वञ्जेः कर्तरि क्तः। **कूजदिति**। २२४ कूज-अव्यक्ते शब्दे। शता। **स्वर्गेति**। २२५ अर्ज-२२६ षर्ज-अर्जने। सुष्ठु अर्ज्यते। अर्जेर्घञि वार्तिकमते न्यङ्क्वादित्वात् कुत्वम्। **सर्जितेति**। षर्जेः कर्मणि क्तः **गर्जदिति** २२७ गर्ज-शब्दे। मेघशब्दे द्रुमे। अस्माच्छता। **तर्जितेति**। २२८ तर्ज-भर्त्सने। कर्मणि क्तः॥३०॥

**अकर्जितोऽसौ हरिखर्जनोत्कधीरजत्पशुव्रातमजेन तेजितम्।**
**लसत्खजाकं व्रजमासदत्क्रमादखञ्जितैरेजितचामरैर्हयैः॥ ३१॥**

**अकर्जित** इति **अकर्जितः** भयेनाव्यथितः **हरिखर्जनोत्कधीः** हरेः विष्णोः खर्जने पूजायाम् उत्का उत्कण्ठिता धीः बुद्धिर्यस्य सः। **असौ** अक्रूरः। **अजत्पशुव्रातम्** अजन्तः गच्छन्तः पशुव्राता यस्मिंस्तत् **अजेन** श्रीकृष्णेन मायाविग्रहेण वस्तुतोऽजन्मनेति भावः। **तेजितं** पालितं **लसत्खजाकं** लसन्तः प्रकाशमानाः खजाकाः मन्थनदण्डा यत्र तत्तादृशं व्रजं गोष्ठग्रामं **क्रमात्** तत्तद्वस्तूल्लङ्घनक्रमेण **अखञ्जितैः** अपङ्गुभिः **एजितचामरैः** एजिताः कम्पिताः चामराः चमरीपुच्छरोमगुच्छका येषु तैः **हयैः**

वाजिभिः "वाजिवाहार्वगन्धर्वहय—" इत्यश्वनामस्वमरः । **आसदत्** आसन्नः ( समीपस्थो ) अभूत् ॥ ३१ ॥

**अकर्जित** इति । २२६ कर्ज-व्यथने । तच्च भयदुःखं चलनं च । अस्मात् कर्तरि क्तः । **खर्जनेति** । २३० खर्ज-पूजने । मार्जने च द्रुमे । ल्युट् **अजदिति** २३१ अज-गतिक्षेपणयोः । शता । **तेजितम्** । २३२ तेज-पालने । कर्मणि क्तः । **खजाकेति** । २३३ खज-मन्थे । 'खजेराकः' (उ०) इत्याकप्रत्ययः । **अखञ्जितैः** । २३४खजि-गतिवैकल्ये(कर्तरि क्तः) **एजितेति** । २३५ एजृ-कम्पने । कर्तरि क्तः ॥३२॥

**विस्फूर्जदक्षीणघनाघनोपमक्ष्वीजा ललजन्तस्त्रिदशानलाञ्जितान् ।**
**लाजादिहोतृष्वपि लञ्जनप्रदा यस्मिन्विनेशुर्जजनेषु दानवाः ॥ ३२ ॥**

**विस्फूर्जदिति विस्फूर्जदक्षीणघनाघनोपमक्ष्वीजाः** विस्फूर्जद्भिः स्तनयद्भिः शब्दायमानैः अक्षीणैः पूर्णैः घनाघनैः वार्षुकमेघैः "वार्षुकाब्दो घनाघनः" इत्यमरः । उपमा सादृश्यं यस्य तादृशः क्ष्वीजोऽव्यक्तशब्दो येषां ते **अलाञ्जितान्** कैरप्यभर्त्सितान् **त्रिदशान्** सुरान् "त्रिदशा विबुधाः सुराः" इत्यमरः । **लजन्तः** भर्त्सयन्तः **लाजादिहोतृषु** लाजादीनां भृष्टव्रीह्यादीनां "लाजाः पुंभूम्नि चाक्षताः[1]" इत्यमरः । **होतृषु** हवनकर्तृषु **अपि लञ्जनप्रदाः** भर्त्सनप्रदातारः **दानवाः** असुराः **यस्मिन्** वृन्दावने **जजनेषु** युद्धेषु **विनेशुः** मृताः ॥ ३२ ॥

**विस्फूर्जदिति** । २३६ टु ओ स्फूर्जा-वज्रनिर्घोषे । शता । **अक्षीणेति** । २३७ क्षि-क्षये । कर्तरि क्तः । 'निष्ठायामण्यदर्थे' (६।४।६०) इति दीर्घे 'क्षियो दीर्घात्' (८।२।४६) इति निष्ठानत्वम् । **क्ष्वीजेति** । २३८ क्ष्वीज-अव्यक्ते शब्दे । घञ् । **लजन्त** इति । २३९ लज-२४० लजि-भर्त्सने ।—२४१ लाज-२४२-लाजि भर्त्सने । भर्जने चेति लीलाशुकः । लजेः शता । **अलाञ्जितान्** । लाजेः कर्मणि क्तः । **लाजेति** । लाजेः कर्मणि घञ् । **लञ्जनेति** । लञ्जेर्ल्युट् । **जजनेषु** । २४३ जज-२४४ जजि-युद्धे । जजेर्ल्युट् ॥ ३२ ॥

**जहर्ष जञ्जातुजितस्थलैरसौ वृषैरतुञ्जैर्गजगञ्जिभिर्वृतम् ।**
**गर्जत्खरं गृञ्जितधेनुमोमुजद्वत्सोत्करं मुञ्जदजं वजन्व्रजम् ॥ ३३ ॥**

**जहर्षेति असौ** अक्रूरः **जञ्जातुजितस्थलैः** जञ्जया परस्परयुद्धेन तुजि-

(टि०) १ द्वे भृष्टव्रीह्यादेरिति भानुदीक्षितः ॥

तानि पीडितानि स्थलानि उन्नतप्रदेशा यैस्तैः **अतुञ्जैः** नराणामहिंसकैः **गजगञ्जिभिः** गजा हस्तिन इव गञ्जिभिः शब्दायमानैः **वृषैः** बलीवर्दैः **वृतं** सर्वतो वेष्टितं। **गर्जत्खरं** गर्जन्तः नदन्तः खरा यस्मिंस्तम् **गृञ्जितधेनु–मोमुजद्वत्सोत्करं** गृञ्जिताः हुंकारवं कुर्वाणाः धेनवो नवप्रसूताः गावो यस्मिंस्तथा मोमुजत् पुनः २ शब्दायमानो वत्सोत्करः तर्णकसमूहो यस्मिंस्तं **मुञ्जदजं** नदन्तः छागा यस्मिंस्तं मुञ्जन् सखिभिर्विविधवार्ताः कुर्वन् अजो हरिः यस्मिन्निति वा एवंभूतं **व्रजं** नन्दग्रामं **वजन्** गच्छन् सन् **जहर्ष** मुमुदे॥ ३३॥

**जञ्जेति**। जञ्जेः 'गुरोश्च'–(३।३।१०३) इत्यकारः। **तुजितेति**। २४५ तुज-हिंसायाम्। कर्मणि क्तः। **अतुञ्जैः**। २४६ तुजि–पालने च। प्राणने व द्रुमे। अच्। **गर्जेति**। २४७ गज-२३८ गजि-२४९ गृज-२५० गृजि-२५१ मुज-२५२ मुजि-शब्दार्थाः। गज-मदने च। मज-मजि इत्यप्येके। शब्दायते माद्यति वेत्यर्थे गजेरच्। **गञ्जीति**। गञ्जेः कर्तर्युपमाने' (३।२।७९) इति णिनिः। **गर्जदिति**। गृजेः शता। **गृञ्जितेति**। गृञ्जेः कर्तरि क्तः। **मोमुजदिति**। मुजेर्यङ्लुकि शता। **मुञ्जदिति** मुञ्जेः शता। **वजन्**। २५३ वज-२५४ व्रज-गतौ। वजेः शता। **व्रजमिति** व्रजेः 'गोचरसंचर' (३।३।११९) इत्यादिना घः॥३३॥

**मार्गात्स दृष्ट्वा हरिपादलाञ्छनं व्यवेष्टतोर्व्यां महनीयचेष्टितः।**
**तत्केलिसंगोष्टितलोष्टमानमद्वने मरुद्घट्टितपोस्फुटद्द्रुमे॥ ३४॥**

**मार्गादिति महनीयचेष्टितः** महनीयं पूजनीयं चेष्टितं व्यापारो यस्यसः **मार्गात्** मार्गं पन्थानम् अर्द्धते अतिक्रामतीति इति मार्गात् **सः** अक्रूरः **हरिपादलाञ्छनं** श्रीकृष्णचरणकमलचिन्हं **दृष्ट्वा** विलोक्य **उर्व्यां** पृथिव्यां "वसुधोर्वी वसुन्धरा गोत्रा कुः पृथिवी" इत्यमरः। **व्यवेष्टत** विलुठितवान् **मरुद्घट्टितपोस्फुटद्द्रुमे** मरुद्भिः वायुभिः घट्टिता चालिताः (कम्पिताः) अत एव पोस्फुटतः भृशं दलन्तः द्रुमा वृक्षा यस्मिन् तस्मिन् **वने तत्केलिसंगोष्टितलोष्टं** तस्य श्रीकृष्णचन्द्रस्य केल्या क्रीडया संगोष्टितं संघातीकृतं लोष्टं मृदादिखण्डं (जातावेकवचनम्) **आनमत्** प्रणतवान्॥ ३४॥

**मार्गादिति**। २५५ अर्द्द गतियाचनयोः। ... उदात्ता अनुदात्तेतः।

द्पधस्तोपधो वायम्। टोपधोऽपि द्रमे। अस्मात् क्विपि संयोगान्तलोपः। व्यवेष्टतेति। २५६ वेष्ट विलुठने। अकर्मकः। लङ्। चेष्टित इति। २५७ चेष्ट-चेष्टायाम्। अस्मात् सिद्धभावे क्तः। गोष्टितेति। २५८ गोष्ट-२५९ लोष्ट-संघाते। गोष्टोर्णि-जन्तात् कर्मणि क्तः। लोष्टमिति। पचाद्यच्। घाट्टितेति। २६० घट्ट-चलने। कर्तरि क्तः। पोस्फुटादिति। २६१ स्फुट-विकसने। यङ्लुगन्तच् शता॥ ३४॥

**अनन्कुमार्गेषु शुभाध्वनैव वन्प्रमन्भृशोत्काण्ठितगोपिके हरौ।**
**स पापमुन्भिर्बुधहेड्भिरुन्मदैरनेठितां क्ष्मां पुनरप्यहिण्डत॥ ३५॥**

**अनन्निति सः** अक्रूरः **कुमार्गेषु** कुत्सितेषु पथिषु दुराचारेषु इत्यर्थः **अनन्** (न अणठते इति सः) अगच्छन् सन् किन्तु **शुभाध्वना** सुपद्धत्या सदाचारेणेति यावत् **एव वन्** (वणठते इति सः) एक एव (वि)चरन् **भृशोत्काण्ठितगोपिके** भृशमत्यर्थम् उत्काण्ठिता उत्का गोपिका अल्पवयस्का गोपयोषितो यस्मिन् तस्मिन् **हरौ** श्रीकृष्णे **प्रमन्** (प्रकर्षेण मणठते इति सः) भृशमुत्कण्ठितः सन् **पापमुन्भिः** पापं दुष्कृतं मुणठन्ते पालयन्तीति ते तैः **बुधहेड्भिः** पण्डितानां बाधकैः **उन्मदैः** उन्मत्ती भूतैः जनैः **अनेठिताम्** अबाधिताम् अपीडितां **क्ष्मां** पृथिवीं "पृथिवी पृथ्वी क्ष्माऽवनिरित्यमरः। **पुनः** प्रणम्योत्थितः **अपि अहिण्डत** अगच्छत्॥ ३५॥

**अनन्निति** २६२ अठि-गतौ। अस्मात् क्विपि संयोगान्तलोपे अन्। तस्मान्नञ्समासे नुट्। **वन्निति**। २६३ वठि-एकचर्यायाम्। सा चासहायगमनम्। प्राग्वत्। क्विप्। **प्रमन्निति**। २६४ मठि-२६५ कठि—शोके। अत्र शोकः सोत्कण्ठस्मरणम्। उत्कण्ठामात्रे त्वकर्मकः। मण्ठेः प्राग्वत् क्विप्। संयोगान्तलोपश्च। **उत्काण्ठितेति**। कण्ठेः कर्तरि क्तः। **पापमुन्भिः**। २६६ मुठि-पालने। क्विप्। **बुधहेड्भिः**। २६७ हेठ-विबाधायाम्। २६८ एठ-च। हेठेः क्विप्। **अनेठिताम्**। एठेः कर्मणि क्तः। **अहिण्डत**। २६९ हिडि-गत्यनादरयोः। लङ्॥ ३५॥

**प्रद्युण्डितानैक्षत चारुकुण्डलान्प्रवाण्डितार्थानविमाणि तताशयान्।**
**स भाण्डिलो भोजनृपालपिण्डभुक्प्रमुण्डितांस्तत्र जनानतुण्डकान्॥ ३६॥**

**प्रद्युण्डितानिति भोजनृपालपिण्डभुक्** भोजनृपालस्य भोजाख्यदेशराजस्य कंसस्य पिण्डं संघातीकृतमन्नं भुङ्क्ते अत्तीति सः **भाण्डिलः** परिभाषकः दूतः इति यावत् सः अक्रूरः तत्र व्रजे **प्रद्युण्डितान्** संघातीभूतान् **चारुकुण्डलान** चारूणि शोभना-

नि कुण्डलानि कर्णभूषणानि येषां तान् **प्रवण्डितार्थान्** प्रकर्षेण वण्डिताः विभक्ता अर्थाः पुरुषार्था धनानि वा येषां तान् **अविमण्डिताशयान्** न विमण्डित आशयो ऽभिप्रायो येषां तान् एकचित्तानिति यावत् **प्रमुण्डितान्** प्रकर्षेण मुण्डितान् शुद्धानित्यर्थः **अतुण्डकान्** अहिंसकान् **जनान्** गोपलोकान् **ऐक्षत** अपश्यत् ॥ ३६ ॥

**प्रहुण्डतानि**ति २७० हुडि-संघाते । कर्तरि क्तः । **कुण्डले**ति । २७१ कुडि–दाहे । 'मृदिमण्डिकुण्डिकान्दिभ्योऽलच्' (उ०) इत्यलच् । **प्रवण्डिते**ति । २७२ वडि विभाजने । २७३ मडि–च । द्वौ वेष्टनेऽपीत्येके । वण्डेः कर्मणि क्तः । **अविमण्डिते**ति । मण्डेः कर्मणि क्तः । **भण्डिल** इति । २७४ भडि-परिभाषणे । तच्च परितो भाषणम् । सनिन्दवचनं वा परिहास इत्येके । अस्मात् 'सलिकल्यनिभाटिभण्डिताण्डिभ्य इलच्' (उ०) इतीलच् । **पिण्डे**ति । २७५ पिडि-संघाते । पचाद्यच् । **प्रमुण्डितान्** । २७६ मुडि-मार्जने । शुद्धिन्यग्भावौ तत् कर्तरि क्तः । **अतुण्डकान्** । २७७ तुडि–तोडने । दारणं हिंसनं वा तत् । अस्माण्ण्वुल् ॥ ३६ ॥

**अभुण्डितोच्चण्डगतीनशण्डनान्कुमार्गवैताण्डिकपण्डितावृतान् ।**
**स तानकण्डान्दधिखण्डनादिकस्वधर्मसक्तान्गतहेडमानमत् ॥ ३७ ॥**

**अभुण्डिते**ति **सः** अक्रूरः **अभुण्डितोच्चण्डगतीन्** न भुण्डिता स्वीकृता उच्चण्डा अत्यन्तकोपयुक्ता गतिः व्यापारो यैस्तान् **अशण्डनान्** न शण्डनं पीडा येषु तान् अपीडकान् वा **कुमार्गवैताण्डिकपण्डितावृतान्** असत्पथस्य वैताण्डिका खण्डनैकपराः ये पण्डितास्तैरावृतान् परितो मिलितान् **अकण्डान्** मदरहितान् **दधिखण्डनादिकस्वधर्मसक्तान्** दधिखण्डनादिके दधिमन्थनगोसेवादिके स्वधर्मे निजकर्तव्ये सक्तान् लग्नान् **तान्** व्रजवासिनो जनान् **गतहेडम्** अवज्ञारहितं यथा स्यात्तथा **आनमत्** प्रणतवान् ॥ ३७ ॥

**अभुण्डिते**ति । २७८ भुडि-वरणे । स्वीकारस्तत् । हरण इत्येके । कर्मणि क्तः । **उच्चण्डे**ति । २७९ चडि-कोपे । पचाद्यच् क्रूरत्वार्थो लक्षणया । **अशण्डने**ति । २८० शडि–रुजायां संघाते च । ल्युट् । **वैताण्डिके**ति । २८१ तडि-ताडने अस्माद् 'गुरोश्च' (३।३।१०३) इत्यकारे वितण्डा परपक्षस्य ताडनं निरसनं तया दीव्यति व्यवहरतीति वैतण्डिकः । **पण्डिते**ति । २८२ पडि-गतौ । प्राग्वदकारे पण्डा ज्ञानं गत्यर्थानां ज्ञानार्थत्वात् । अस्मात् तारकादित्वादितचि पण्डितः । **अकण्डान्** । २८३

कडि–मदे । घञ् । खण्डनेति । २८४ खडि मन्थे । ल्युट् । हेडेति । २८५ हेडृ-२८६ होडृ-अनादरे । हेडेर्घञ् ॥३७॥

**अह्लोडनीयान्पशुपालयानसावपश्यदानन्दपयोधिवाडितः ।**
**सुपाकविद्रालिफलालिभिर्द्रुमैः स्निग्धानविभ्राडितचारुशालिकान् ॥३८॥**

**अह्लोडनीयानिति आनन्दपयोधिवाडितः** प्रमादसमुद्रे आप्लुतः **असौ** अक्रूरः **अह्लोडनीयान्** अनादर्त्तुमयोग्यान् **सुपाकविद्रालिफलालिभिः** सुपाकेनाऽतिपचनेन विद्रालयः विशरणशीलाः फलालयः दाडिमादिफलपङ्क्तयः येषां ते तैः **द्रुमैः** वृक्षैः **स्निग्धान्** सघनान् **अविभ्राडितचारुशालिकान्** अविभ्राडिता अविशीर्णा अत एव चारवः शोभनाः शालयः कलमाद्याः येषु तान् ('शेषाद्विभाषा' (५।४।१५४) इति कप्) **पशुपालयान्** गोपगृहान् **अपश्यत्** प्रेक्षितवान् । ३८ ॥

**अह्लोडनीयानिति** । होडेरनीयर् । **वाडितेति** । २८७ वाडृ-आप्लाव्ये । आप्लवनं तत् । कर्तरि क्तः । **विद्रालि-** । २८८ द्राडृ--२८९ ध्राडृ-विशरणे । द्राडेर्णिनिः 'डलयोरुक्तिभेदस्तु डकारो नाक्षरान्तरम्' इत्युक्त्या डस्य लः । **अविभ्राडितेति** । भ्राडेः कर्तरि क्तः । **शालीति** । २९० शाडृ-श्लाघायाम् । डलयोरभेदाल्लकारः । अस्मादौणादिक इन् । अट्टादय उदात्ता अनुदात्तेतः । ३८॥

पशुपालयानेव वर्णयति (त्र्यष्टभिः पञ्चदशभिः --

**प्रशौटदुस्त्रागणयौटितान्तिकान्मेटद्वृषाम्रेडितघोषमेदुरान् ।**
**अम्लेटकैश्चाकटुचाटुभाषितैरटैः पटत्संरटिताञ्जनोत्करैः ॥ ३९ ॥**

**प्रशौटदिति** कथम्भूतान् पशुपालयान् **प्रशौटदुस्त्रागणयौटितान्तिकान्** प्रशौटद्भिः गर्ववद्भिः उस्त्रागणैः गोवृन्दैः "माहेयी सौरभेयी गौरुस्त्रा माता च शृङ्गिणी" इत्यमरः। यौटितं सम्बद्धमान्तिकं समीपं येषां तान् **मेटद्वृषाम्रेडितघोषमेदुरान्** मेटताम् उन्माद्यताम् वृषाणां बलीवर्दानाम् आम्रेडितेन पुनः२कृतेन घोषेण नदनेन मेदुरान् पूर्णान् । **अम्लेटकैः** अमाद्यद्भिः **अकटुचाटुभाषितैः** अकटु मधुरं चाटु प्रियं भाषितं वचनं येषां तैः तथा **अटैः** सञ्चरद्भिः **जनोत्करैः** लोकसमूहैः **पटत्संरटितान्** पटत् परितो गच्छत् संरटितं परिभाषितं शब्दो येषां तान् पशुपालयानपश्यदिति पूर्वेणान्वयः । एवमुत्तरत्र ॥३९॥

**प्रशौटदिति** । २९१ शौटृ-गर्वे । अयमन्त उदात्ता उदात्तेतः । अस्मा-

च्छता। **यौटितेति**। २०२ यौटृ—बन्धे। कर्मणि क्तः। **मेटदिति**। २९३ मेटृ—२९४ म्रेटृ—२९५ म्लेटृ—उन्मादे। मेटेः शता। म्रेडेः कर्मणि क्तः। आङ्पूर्वत्वादुक्त्यर्थः। **अम्लेटकैः**। म्लेटेर्ण्वुल्। **अकटु** इति। २९६ कटे—वर्षावरणयोः। चटे इत्येके। कटेः 'कटिबन्ध्यान्धिभ्यश्च' (उ०) इत्युत्प्रत्ययः। **चाटूविति**। 'दृसनिजनिचरिचटिरहिभ्यो ञुण्' (उ०) **अटैः**। २९७ अट—२९८पट—गतौ। अटेः पचाद्यच्। **पटदिति** पटेः शता। **संरटितेति**। २९९ रट—परिभाषणे। 'नपुंसके भावे क्तः' (३।३।११४)

**लाटार्हशाटीवटितैर्वटुव्रजैर्वृतान्खलैश्चाकिटितान्प्रखेटकैः।**
**अशेटनीयैः सुधियामसेटकैर्युताञ्जटाझाटधरैश्च कैश्चन ॥ ४० ॥**

**लाटार्हे**ति पुनः कथम्भूतान् पशुपालयान् **लाटार्हशाटीवटितैः** लाटार्हाभिः बाल्यार्हाभिः शाटीभिः कटीवस्त्रैः वटितैः वेष्टितैः **वटुव्रजैः** ब्रह्मचारिगणैः **वृतान्** व्याप्तान्। **खलैः** दुष्टजनैः **प्रखेटकैः** जीवानां त्रासकैः **च अकिटितान्** अत्रासितान् **सुधियां** पण्डितानाम् **अशेटनीयैः** न अनादर्तव्यैः अत्यन्तमादर्तुं योग्यैरित्यर्थः (नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात्) **असेटकैः** स्वयं कस्याप्यनादरमकुर्वद्भिः **कैश्चन** कैरपि **जटाझाटधरैः** जटाझाटस्य जटासंघातस्य धरैः धारकैः (पृथक्पृथग् बद्धाः केशा जटाः)। **च युतान्** अन्वितान् ॥ ४० ॥

**लाटेति**। ३०० लट—बाल्ये। घञ्। **शाटीति**। ३०१ शट—रुजाविशरणगत्यवसादनेषु। घञन्तात् 'जातेरस्त्रीविषयाद्' (४।१।६३) इति ङीष्। **वटितैः**। ३०२ वट—वेष्टने। कर्मणि क्तः। **वटूविति** 'वटिचटिचाश्विभ्यश्च' (उ०) इति भोजोक्त्या तस्मादेव उन्। **अकिटितान्—प्रखेटकैरिति**। ३०२ किट—३०४ खिट—त्रासे। त्रासनायामित्यर्थः। भीमार्थे च द्रुमे। कर्मणि क्तः। ण्वुल् च। **अशेटनीयैः**। ३०५ शिट—३०६ षिट—अनादरे। शिटेरनीयर्। **असेटकैः**। षिटेर्ण्वुल्। **जटाझाटेति**। ३०७ जट—३०८ झट—संघाते। जटेरच्। झटेर्घञ् ॥ ४० ॥

**क्वचिद्भटाधिष्ठितवेदिकातटान्क्वचिच्च खट्वाविहरन्नटीजनान्।**
**क्वचिच्च पेटीशतपूर्णहट्टाकान्क्वचित्सटालोटनलोलघोटकान् ॥४१॥**

**क्वचिदि**ति पुनः कथंभूतान् पशुपालयान् **क्वचित्** कस्मिंश्चित्स्थाने **भटाधिष्ठितवेदिकातटान्** भटैः शूरैः अधिष्ठिता आश्रिताः वेदिकानां प्राङ्गणादिस्थोपवेशनस्थानानां तटाः उन्नतप्रदेशा येषु तान्। **क्वचित्** कुत्रचित् **च खट्वाविहरन्नटीजनान्** खट्वासु पर्यङ्किकासु विहरन्तः क्रीडन्तः नटीजनाः

शैलूषस्त्रीसमूहा येषु तान् । क्वचिच्च **पेटीशतपूर्णहाटकान्** पेटीशतेषु मञ्जूषा समूहेषु पूर्णानि भृतानि हाटकानि हिरण्यानि येषु तान् "हिरण्यं हेम हाटकम्" इत्यमरः । **क्वचित्** च **सटालोटनलोलघोटकान्** सटानां ग्रीवारोम्णां लोटने विलोटने इतस्ततोभ्रामणे लोलाः चञ्चलाः घोटका अश्वा येषु तान् पशुपालयान् ॥४१॥

**भटे**ति । ३०९ भट—भृतौ । भृतिर्वेतनप्राप्तिः । अस्मात्पचाद्यच् । **तटे**ति । ३१० तट—उच्छ्राये । अच् । **खट्वे**ति । ३११ खट—काङ्क्षायाम् । 'अशिप्रुषिलटिकणिखटिविशिभ्यः क्वन्' (उ०) इति क्वन् । **नटी**ति ३१२ णट-नृत्तौ । हिंसायां च क्रमे नृत्तिर्नर्तनम् । तच्चात्र नटव्यापारः । अस्मादचि जातिङीष् । **पेटी**ति । ३१३ पिट—शब्दसंघातयोः । घञन्ताद् गौरादिङीष् । **हाटकानी**ति । ३१४ हट—दीप्तौ । संज्ञायां ण्वुल् । बाहुलकात् स्त्रीत्वाभावः । **सटे**ति । ३१५ षट—अवयवे । अजन्ताट्टाप् । **लोटने**ति ३१६ लुट—विलोटने । 'लुल' इत्यन्ये । लुटेर्ल्युट् । **लोले**ति । लुलेरच् ॥ ४१ ॥

**चेटैर्विटैश्चानुगतानवेटकैरेटत्पशूत्कोटिरजःकटन्मलान् ।**
**प्रकण्टिताशोदयदंशुमण्डितैरकुण्डरत्नैर्मुडितार्कदीधितीन् ॥ ४२ ॥**

**चेटै**रिति **अवेटकैः** कस्याप्यनाक्रोशकैः **चेटैः** परप्रेष्यैः **विटैः** शृङ्गारसहायैः **अनुगतान्** सङ्कुलान् **एटत्पशूत्कोटिरजःकटन्मलान्** एटद्भ्यः गच्छद्भ्यः पशुभ्यः गवादिभ्यः उत्कोटिभिः उद्गच्छद्भिः रजोभिः धूलिभिः कटत् अपगच्छत् मलं पापं येभ्यः तान् । **प्रकण्टिताशोदयदंशुमण्डितैः** प्रकण्डिताशं व्याप्तादिकं यथा तथा उदयद्भिः उद्गच्छद्भिः अंशुभिः किरणैः मण्डितैः भूषितैः **अकुण्डरत्नैः** अकुण्डैः अविकलैः सर्वाङ्गसुन्दरैः रत्नैः पद्मरागादिमणिभिः **मुडितार्कदीधितीन्** मुडिता मर्द्दिताः अर्कदीधितयः सूर्यमरीचयो येषु तान् "विकर्तनार्कमार्तण्ड" इति "भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्" इति च सूर्य—किरणनामस्वमरः ॥४०॥

**चेटै**रिति । ३१७ चिट—परप्रेष्ये । अच् । **विटैः** ३१८ विट—शब्दे । इगुपधत्वात् कः । **अवेटकैः** । ३१९ विट—आक्रोशे । ण्वुल् । **एटद्**िति । ३२० इट—३२१ किट—३२२ कटी—गतौ । इटेः शता । **पशूत्कोटी**ति । 'बहुलमाभीक्ष्ण्ये' (३।२।८१) इति णिनिः । **कटद्**िति । कटेः शता । **प्रकण्टिते**ति । 'इदितं कटिमिच्छन्ति केचिदन्ये तमीदितम् । इधातुमत्र प्रश्लिष्टमीधातुं वा परे जगुः ॥' इत्युक्तेः

कोटेरिदित्वपक्षे कर्मणि क्तः। **उदयदिति**। इधातुप्रश्लेषपक्षे शता। **मण्डितैः**। ३२३ मडि–भूषायाम्। कर्मणि क्तः। **अकुण्डेति**। ३२४ कुडि–वैकल्ये। अच्। **मुडितेति**। ३२५ मुड–३२६ पुड–मर्दने। कर्मणि क्तः॥ ४२॥

**अचुन्ननुन्मुण्डितपुण्डरीकभृत्सरःश्रियो रुण्डकलुण्डनोज्झितान्।**
**अस्फोटदग्र्यस्फटिकादिभाजनान्पाठोत्सुकैश्चावठरैर्लसन्मठान्॥ ४३॥**

**अचुन्निति** पुनः कथंभूतान् पशुपालयान् **अचुन्ननुन्मुण्डितपुण्डरीकभृत्सरःश्रियः** अचुण्डि न चुण्डन्तीति तानि) अनल्पीभवन्ति तथा अनुन्मुण्डितानि अखण्डितानि अक्षतानीति यावत् पुण्डरीकाणि सिताम्भोजानि "पुण्डरीकं सिताम्भोजम्" इत्यमरः। बिभ्रतीति तानि यानि सरांसि तडागानि तैः श्रीः शोभा येषां तान्। तथा **रुण्डकलुण्डनोज्झितान्** रुण्डकानां चौराणां लुण्डनेन चौर्य्येण उज्झितान् विरहितान् **अस्फोटदग्र्यस्फटिकादिभाजनान्** अस्फोटन्ति अविशीर्णानि अखण्डितानि अग्र्याणि श्रेष्ठानि स्फटिकादिभाजनानि श्वतमणिनिर्मितपात्राणि येषु तान्। **अवठरैः** अमूर्खैः **पाठोत्सुकैः** पाठे विद्याभ्यासे उत्सुकैः सोत्साहैः विद्यार्थिभिरिति यावत् **लसन्मठान्** लसन्तः शोभमानाः मठाः छात्रादिनिलया येषु तान् "मठश्छात्रादिनिलयः" इत्यमरः॥ ४३॥

**अचुन्निति**। ३२७ चुडि–अल्पीभावे। क्विप्। **अनुन्मुण्डितेति**। ३२८ मुडि-खण्डने। पुडीत्येके। मुण्डेः कर्मणि क्तः। **पुण्डरीकेति** 'पर्परीकादयश्च'(उ०)इत्यत्र 'मृद्वीक–तिन्तिडीक-वाह्लीक-वलीक-कल्मलीक-पुण्डरीक-चञ्चरीक-प्रतीक-सभीक-पूतिकादयश्च'इत्यत्र (?) (उ०)भोजेन निपातितः। **रुण्डक-लुण्डनेति** ।३२९ रुटि–३३० लुटि-स्तेये 'रुठि--लुठि' इत्येके। 'रुडि--लुडि' इत्यपरे। ण्वुल्ल्युटौ। **अस्फोटदिति**। ३३१ स्फुटिर्–विशरणे। स्फुट--स्फुटि--स्फुटे--इत्येके. स्फुटेः शता। **स्फटिकेति**। 'अलिकलिद्वलिस्फटिभ्यश्च'इति (उ०)भोजोक्त्या स्फटेः किकन्। **पाठेति**। ३३२ पठ--व्यक्तायां वाचि। घञ्। **अवठरैरिति**। ३३३ वठ–स्थौल्ये। अस्मादौणादिकोऽरप्रत्ययः। **मठेति**। ३३४ मठ--३३५ कठ--मदनिवासयोः। मठेः--घञर्थे कः॥ ४३॥

**वनाश्रयत्वेऽपि सकाठपर्यठद्रठन्मृगालीहठकर्मवर्जितान्।**
**रोठन्नृशंसालुठितैरनोठकैर्वृतान्धनाढ्यैर्मणिपीठसंश्रयैः॥ ४४॥**

**वनाश्रयत्वे** इति पुनः कीदृशान् पशुपालयान् **वनाश्रयत्वे** अरण्यवासित्वे **अपि** सति**सकाठपर्यठद्रठन्मृगालीहठकर्मवर्जितान्** सकाठं समदं यथा तथा पर्यठन्त्या

सञ्चरन्त्या मृगाल्याः श्वापदानां पङ्क्त्याः हठकर्मणा क्रौर्येण वार्जितान् रहितान् । तथा **रोठन्नृशंसालुठितैः** रोठद्भिः आहिंसकैः तथा नृशंसैः क्रूरजनैः "नृशंसो घातुकः क्रूरः" इत्यमरः । अलुठितैः अपीडितैः **अनोठकैः** कस्याप्यहिंसकैः **मणिपीठसंश्रयैः** रत्न-निर्मितासनेषु संश्रयः स्थितिर्येषां तैः **धनाढ्यैः** धनिकैः **वृतान्** वेष्टितान् ॥ ४४ ॥

**काठेति** । कठेर्घञ् । **पर्यठदिति** । 'अठ–गतौ' इत्यप्येके । शता । **रठदिति** । ३३६ रठ–परिभाषणे । [रट–इत्येके ।] शता । **हठेति** । ३३७ हठ–प्लुतिशठत्वयोः । बलात्कार इत्येके । पचाद्यच् । **रोठदिति** । ३३८ रुठ-३३६ लुठ–३४० उठ-उपघाते । ऊठेत्येके । रुठेः शता । **अलुठितैरिति** । लुठेः कर्मणि क्तः । **ओठकैरिति** । उठेर्ण्वुल् **पीठेति** । ३४१ पिठ–हिंसासंक्लेशनयोः । घञर्थे कः । 'अन्येषामपि दृश्यते' (६।३।१३७) इति दीर्घः ॥ ४४ ॥

**शठत्वमार्गे शुठितैरकुण्ठितैरलुण्ठिताशुण्ठितसौहृदान्वितैः ।**
**प्ररुण्ठिताघैरनुलुण्ठकैर्हरेः प्रचुड्डबोधाड्डिभिरतीव शोभितान् ॥ ४५ ॥**

**शठत्वेति** पुनः किंभूतान् पशुपालयान् **शठत्वमार्गे** कैतवतापद्धतौ **शुठितैः** प्रतिहतगतिभिः **अकुण्ठितैः** स्वकृत्येषु अप्रतिहतमतिभिः **अलुण्ठिताशुण्ठितसौहृदान्वितैः** अलुण्ठितेन अनालस्येन अप्रतिहतेन वा अशुण्ठेन अशुष्केण सौहृदेन सुहृद्भावेन अन्वितैः युक्तैः । **प्ररुण्ठिताघैः** प्ररुण्ठितं प्रगतम् अघं पापं दुःखं वा येषां तैः **प्रचुड्डबोधाड्डिभिः** प्रचुड्डस्य अभिप्रायाविष्करणस्य बोधे ज्ञाने आड्डिः (अड्डन्तीति अड्डस्तैः) अभियुक्तैः । **हरेः** श्रीकृष्णस्य **अनुलुण्ठकैः** अनुचरैः **अतीव** सर्वोत्कर्षेण **शोभितान्** अलङ्कृतान् ॥ ४५ ॥

**शठत्वेति** । ३४२ शठ–कैतवे च । अस्मात्पचाद्यजन्तात् त्वप्रत्ययः । **शुठितैः** ३४३ शुठ–गतिप्रतिघाते । ३४४ कुठि–च । अयं प्रतिघातमात्र एवेति माधवः । आलस्ये गतिप्रतिघाते वास्ति द्रुमे । शुठेः कर्मणि क्तः । **अकुण्ठितैः** कुठेः कर्तरि क्तः । **अलुठितेति** । ३४५ लुठि–आलस्ये प्रतिघाते च । कर्तरि क्तः । **अशुण्ठितेति** । ३४६ शुठि–शोषणे । प्राग्वत् क्तः । **प्ररुण्ठितेति** । ३४७ रुठि–३४८ लुठि–गतौ । रुण्ठेः कर्तरि क्तः । **अनुलुण्ठकैरिति** लुण्ठेर्ण्वुल् । **प्रचुड्डेति** । ३४६ चुड्ड–भावकरणे । अभिप्रायाविष्करणं तत् । अस्माद् घञ् । **अड्डिरिति** । ३५० अड्ड–अभियोगे । दोपधादस्मात् क्विपि संयोगान्तलोपः ॥ ४५ ॥

**अकड्डरिक्रीडनधूततोडकान्प्रहूडितान्होडदरौड्यभिक्षुकैः ।**
**प्ररोडकानङ्गविलोलितैर्वृतान्रतावडद्भिर्ललनाजनैः कलैः ॥ ४६ ॥**

**अकद्धरीति** पुनः कीदृशान् पशुपालयान् **अकद्धारिक्रीडनधूततोडकान्** अकड्डा ( न कड्डतीति अकत् तेन ) अकर्कशेन हरिक्रीडनेन श्रीकृष्णखेलनेन धूता निरस्ताः तोडकाः पीडका येषु तान् **होडदरौड्यभिक्षुकैः** होडद्भिः संचरद्भिः अरौड्यैः अनादरणीयैः भिक्षुकैः संन्यासिभिः **प्रहूडितान्** प्राप्तान् **प्ररोडकानङ्गविलोलितैः** प्ररोडकेन उन्मादकेन अनङ्गेन कामदेवेन "कन्दर्पो दर्पकोऽनङ्गः कामः" इत्यमरः । विलोलितैः चञ्चलीकृतैः **रतौ** मैथुने **अडद्भिः** (अडन्तीति अडन्तः तैः) उद्यच्छद्भिः **कलैः** मधुरैः **ललनाजनैः** (स्त्री)प्रमदागणैः " प्रमदा मानिनी कान्ता ललना च नितम्बिनी" इत्यमरः । **वृतान्** व्याप्तान् ॥ ४६ ॥

**अकादिति** । ३५१ कड्ड--कार्कश्ये । चुड्डादयस्त्रयो दोपधाः । डोपधाश्च द्रुमे । कड्डः प्राग्वत् क्विप् । **क्रीडनेति** । ३५२ क्रीडृ--विहारे । ल्युट् । **तोडकानिति** । ३५३ तुडृ--तोडने । 'तूडृ' इत्येके । तोडनमुक्तम् । तुडेर्ण्वुल् । **प्रहूडितान्** । ३५४ हूडृ-३५५ होडृ--गतौ । हुडृ इत्येके । हूडेः कर्मणि क्तः । **होडदिति** । होडेः शता । **अरौड्येति** । ३५६ रौडृ--अनादरे । ण्यत् । **प्ररोडकेति** । ३५७ रोडृ--३५८ लोडृ उन्मादे । रोडेर्णिजन्ताद् ण्वुल् । विलोलितैः लोडेर्णिजन्तात् कर्मणि क्तः । **अडद्भिः** । ३५९ अड-उद्यमे । शता । **ललनेति** । ३६० लल--विलासे।लडेर्युच् । **कलैः** । ३६१ कड--मदे । कडि--इत्येके । कडेरच् । शौटादय उदात्ता अयातिवर्ज ( ? ) उदात्तेतः ॥ ४६ ॥

अथ गोपगृहान् पश्यतोऽक्रूरस्य हर्षातिशयमाह—

**अतिप्त हर्षाश्रु धृतिश्च तेपिता गृहानिमान्प्रस्तिपितार्ति पश्यतः ।**
**अस्तेपितानन्दरसस्य तस्य न व्यग्लेपि चाङ्गैर्विपिनाध्वकेपनात् ॥ ४७ ॥**

**अतिप्तेति** **अस्तेपितानन्दरसस्य** न स्तेपितः क्षारितः गतः आनन्दरसो हर्षानुभवो यस्य स तस्य **प्रस्तिपितार्ति** प्रस्तिपिता क्षरिता आर्तिः पीडा यस्मिन् कर्मणि तद्यथा स्यात्तथा **इमान्** वर्णितान् **गृहान्** गोपालयान् **पश्यतः** वीक्षमाणस्य **तस्य** अक्रूरस्य **हर्षाश्रु** आनन्दजन्यं नेत्रजलम् **अतिप्त** अक्षरत् । **धृतिः** धैर्यं **च** **तेपिता** क्षरिता प्रणष्टेत्यर्थः **विपिनाध्वकेपनात्** विपिनाध्वनोऽरण्यमार्गस्य केपनात्

चलनात् **अङ्गैः** शरीरावयवैः **च न व्यग्लेपि** कम्पितं श्रान्तम् इत्यर्थः ॥ ४७ ॥

**अतिप्तेति**। ३६२ तिपृ--३६३ तेपृ--३६४ ष्टिपृ--३६५--ष्टेपृ--क्षरणार्थाः। 'धिपृ-धेपृ' इत्यके। तेपृ-कम्पने च। स्तुभान्ता अनुदात्तेतः उदात्तास्तिपिवर्जम्। तिपेर्लुङ्। **तेपितेति**। **प्रस्तिपितेति**। **अस्तिपतेति**। तेप्यादिनां त्रयाणां कर्तरि क्तः। **व्यग्लेपि**। ३६६ ग्लेपृ-दैन्ये। भावे लुङि चिण्। **विपिनेति**। ३६७ टुवेपृ-कम्पने। 'वेपितुह्योर्ह्रस्वश्च'(उ०) तीनच्। **केपनात्**। ३६८ केपृ--३६९ गेपृ--३७० ग्लेपृ-च। चकारात् कम्पने गतौ च। केपेर्ल्युट् ॥ ४७ ॥

**अगेपनोऽग्लेपत स व्रजं यदा रविस्तदामेपत पश्चिमां दिशम्।**
**प्ररेपितात्कोरकतां सरोरुहादलेपि भृङ्गैः कुमुदं त्रपान्वितैः ॥ ४८ ॥**

**अगेपन** इति **अगेपनः** अकम्पनः निश्चलः **सः** अक्रूरः **यदा** यस्मिन्काले **व्रजं** नन्दग्रामम् **अग्लेपत** गतवान्। **तदा** तस्मिन्काले **रविः** सूर्यः **पश्चिमां** प्रतीचीं **दिशम्** आशाम् **अमेपत** अगच्छत्। **भृङ्गैः** भ्रमरैः **त्रपान्वितैः** लज्जितैः सद्भिः (यथा कश्चिदतिथिः आह्वयन्तमपि कंचिदनादृत्यातिप्रियस्य गृहं गच्छेत् स तु कपाटपिधानं कुर्यात् तदा सोऽन्यस्यानादृतस्य गृहं गच्छेत्तद्वदिति ध्वनिः) **कोरकतां** कुड्मलत्वं **प्ररेपितात्** प्राप्तात् **सरोरुहात्** कमलात् उड्डीय **कुमुदं** श्वेतोत्पलं "सिते कुमुदकैरवे" इत्यमरः। **अलेपि** प्राप्तम् ॥ ४८ ॥

**अगेपनेति**। गेपेः 'अनुदात्तेतश्च' (३।२।१४९) इति युच्। **अग्लेपत**। ग्लेपेर्लङ्। **अमेपतेति**। ३७१ मेपृ--३७२ रेपृ--३७३ लेपृ--गतौ। मेपेर्लङ्। **प्ररेपितात्**। रेपेः कर्तरि क्तः। **अलेपि**। लेपेः कर्मणि लुङि चिण्। **त्रपेति**। ३७४ त्रपूष्--लज्जायाम्। 'षिद्भिदादिभ्योऽङ्' (३।३।१०४) इत्यङि त्रपा ॥ ४८ ॥

संध्यां वर्णयत्यष्टभिः—

**सकम्पहेरम्बसमानलम्बनाः समाव्रजन्नम्बितघण्टिकास्तदा।**
**प्रलम्बसास्नाः कबरत्विषो वृषा अक्लीविताः क्षीवतयातिशीभराः॥४९॥**

**सकम्पेति तदा** अक्रूरप्राप्तिसमये **सकम्पहेरम्बसमानलम्बनाः** सकम्पं वेपथुसहितं यथा तथा हेरम्बेण गणेशेन समानं तुल्यं लम्बनं शब्दो येषां ते **अम्बितघण्टिकाः** अम्बिताः शब्दिताः घण्टिकाः किङ्किण्यो येषां ते। **प्रलम्बसास्नाः** प्रलम्बा अवस्रस्ताः दीर्घाः सास्नाः येषां ते "सास्ना तु गलकम्बलः" इत्यमरः। **कबरत्विषः** कबरा नानावर्णा त्विट् कान्तिः येषां ते **अक्लीविताः** न अधृष्टाः

अतिप्रगल्भा इति भावः । **क्षीबतया** मत्तत्वेन **अतिशीभराः** नितराम् नर्दनेन आत्मश्लाघनपरा इव प्रतीयमाना **वृषाः** बलीवर्दाः **समाव्रजन्** व्रजमागच्छन् ॥४९॥

**सकम्पेति** । ३७५ कपि--चलने । घञ् । **हेरम्बेति** । ३७६ रबि--३७७ लबि--३७८ अबि-शब्दे । ३७९ लवि--अवस्रंसने च । हे इत्येवं रम्बते इति हेरम्बः । रम्बेः कर्मण्यण् । **लम्बनेति** । लम्बेर्ल्युः । **अम्बितेति** । अम्बेः कर्तरि क्तः । **प्रलम्बेति** । अवस्रंसनार्थाल् लम्बेः पचाद्यच् । **कबरेति** । ३८० कबृ--वर्णे । बाहुलकादरप्रत्ययः । **अक्लीविताः** । ३८१ क्लीवृ--अधाष्टर्ये । कर्तरि क्त । **क्षीबतयेति** । ३८२ क्षीवृ--मदे । 'अनुपसर्गात्फुल्लक्षीव–' (८।२।५५) इति निष्ठायामिडभावो लोपश्च निपातितः । **शीभराः** । ३८३ शीभृ--कत्थने । ३८४ चीभृ–च । पूर्ववदरप्रत्ययः ॥ ४९ ॥

**प्रचीभ्यरेभैः पशवोऽम्भसांनिधिप्ररम्भणास्तम्भिभिरागता व्रजम् ।**
**अस्कम्भिताः प्राप्य शिशून्सजम्भनानुज्जृम्भहर्षा लिलिहुः सशल्भनम् ॥५०॥**

**प्रचीभ्यरेभैरिति अम्भसांनिधिप्ररम्भणस्तम्भिभिः** अम्भसांनिधेः समुद्रस्य प्ररम्भणं शब्दं स्तम्भयितुं रोद्धुं शीलं येषां तैः **प्रचीभ्यरेभैः** प्रचीभ्यैः प्रशंनायैः रेभैः शब्दैः सह **व्रजं** नन्दगोष्ठम् **आगताः** प्राप्ताः **अस्कम्भिता** अप्रतिहताः **पशवः** गवादयः **सजम्भनान्** जम्भनं जृम्भा मातृविरहेणास्यविनामः तेन सहितान् **शिशून्** वत्सान् **प्राप्य** उपगम्य **उज्जृम्भहर्षाः** प्रवृद्धामोदाः सन्तः **सशल्भनं** शल्भनेन श्लाघया इव सह यथा स्यात्तथा **लिलिहुः** जिह्वया वत्सदेहेलेहनं चक्रुः ॥ ५० ॥

**प्रचीभ्येति** । चीभेर्ण्यत् । **रेभैः** ३८५ रेभृ-शब्दे ! अभि-रभि इत्येके । रेभेर्घञ् । **अम्भसामिति** । अम्भेरसुन् । **अम्भसांनिधिरिति** तत्पुरुषे कृति बहुलम्'(६।३।१४) इत्यलुक् । **प्ररम्भणेति** । रम्भेर्ल्युट् । **स्तम्भिभिरिति** । ३८६ ष्टभि--३८७ स्कभि--प्रतिबन्धे । स्तम्भेर्णिजन्ताणिनिः । **अस्कम्भिताः** । स्कम्भेः कर्तरि क्तः । **सजम्भनान्** । ३८८ जभि--३८९ जृभि--गात्रविनामे । आद्य ईदिदित्येके । जम्भेर्ल्युट् । 'रधिजभोरचि' (७।१।६१) इति नुम् । **उज्जृम्भेति** । जृम्भेः पचाद्यच् । **सशल्भनम्** ३९० शल्भ-कत्थने । ल्युट् ॥ ५० ॥

**वल्भप्रगल्भाः पथिकाश्च तत्क्षणं सुश्रम्भणस्तोभयुतानगुर्गृहान् ।**
**गोपायतां धर्ममधूपितात्मनां जल्पान्विमुच्याभवदुद्यमो जपे ॥ ५१ ॥**

**वल्भेति** तत्क्षणं तस्मिन् समये सायङ्काले **वल्भप्रगल्भा** वल्भ भोजने प्रगल्भाः समर्थाः **पथिका** अध्वगाश्च ( चकारो गवां समुच्चयार्थः ) **शुश्रम्भण-स्तोभयुतान्** शुश्रम्भणं शोभनपाकस्तस्य स्तोभो व्यापारः तेन युतान् युक्तान् **गृहान्** निजालयान् **अगुः** अगच्छन् । तथा **अधूपितात्मनाम्** अधूपितः । असन्तप्त आत्मा मनो येषां तेषां "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च" इति धरणिः । **धर्मं** सुकृतं **गोपायतां** धर्मात्मनामित्यर्थः । **जल्पान्** सांसारिकवार्तालापान् **विमुच्य** त्यक्त्वा **जपे** मानसिकमन्त्राद्युच्चारणे **उद्यमः** उद्योगः **अभवत्** सञ्जातः ॥ ५१ ॥

**वल्भेति** । ३९१ वल्भ भोजने । घञ् । **प्रगल्भाः** । ३९२ गल्भ–धाष्ट्र्ये । पचाद्यच् । **शुश्रम्भणेति** । ३९३ श्रन्भु–पाके । ल्युट् । **स्तोभेति** । ३९४ ष्टुभु-स्तम्भे । अयं व्यापारार्थे प्रसिद्धः । अस्मात् घञ् । तिपादयोऽनुदात्तेतः । तिथिवर्जमुदात्तः । **गोपायतामिति** । ३९५ गुपू–रक्षणे । स्तम्भान्ता उदात्तेतः । अस्मात् 'गुपूधूपविच्छिपणिपनिभ्य आयः' (३।१।२८) इत्यायप्रत्ययान्ताच्छता । **अधूपितेति** ३९६ धूप–संतापे । कर्तरि क्तः । **जल्पान्** । ३९७ जल्प--३९८ जप–व्यक्तायां वाचि । जप–मानसे च । जल्पेर्घञ् । **जप** इति । 'व्यधजपोरनुपसर्गे' (३।३।६१) इत्यप् ॥ ५१ ॥

**चेपुः सपन्तोऽसचितां प्रियां प्रियाः संख्येति रेपुः कललापिनः शुकाः ।**
**श्येनाश्चुपित्वा तुतुपुः कपोतकान्काकानतुम्पन्नभितुत्रुपुः शशान् ॥५२॥**

**चेपुरिति** किञ्च **प्रियाः** वल्लभाः **असचिताम्** असमवेतां रोषादिनाऽमिलितां **प्रियां** कान्तां **सपन्तः** प्रणामादिना मिलिताः सन्तः **चेपुः** सान्त्वयामासुः । **कललापिनः** मधुरभाषिणः **शुकाः** कीराः **सम्ख्या इति** शब्दं **रेपुः** स्पष्टमुक्तवन्तः **श्येनाः** (बाज) इति प्रसिद्धाः पक्षिणः च **चुपित्वा** मन्दं गत्वा **कपोतान्** पारावतान् । **तुतुपुः** जिहिंसुः **काकान्** वायसान् **अतुम्पन्** अघ्नन् **शशान्** तदाख्यक्षुद्रमृगविशेषान् **अभितुत्रुपुः** हतवन्तः ॥ ५२ ॥

**चेपुरिति** । ३९९ चाय–सान्त्वने । लिट् । **सपन्तः** । ४०० षप–समवाये । षचेत्येके । समवायः संबन्धः सम्यगवबोधो वा । सपेः शता । **असचिताम्** । सचेः कर्तरि क्तः । **रेपु** । ४०१ रप–४०२ लप-व्यक्तायां वाचि । रपेर्लिट् । **कललापिनः** लपेर्णिनिः । **चुपित्वा** । ४०३ चुप–मन्दायां गतौ । अस्मात् 'समानकर्तृकयोः पूर्वे

काले' ( ३।४।२१ ) इति क्त्वा । तुतुपुः । ४०४ तुप-४०५ तुम्प-४०६ त्रुप-४०७ त्रुम्प-४०८ तुफ-४०९ तुम्फ-४१० त्रुफ-४११-त्रुम्फ-हिंसार्थाः । तुपेर्लिट् । अतुम्पन् । तुम्पेर्लङ् । अभितुत्रुपुः । त्रुपेर्लिट् ॥ ५२ ॥

अत्रुम्प्यधामानमिनं प्रतोफितुं प्रतुम्फशीलान्मिलतोऽथ राक्षसान् ।
अत्रोफकास्तुम्फितुमुद्यता जलैर्वापीमपर्पन्नरफन्नदीं द्विजाः ॥ ५३ ॥

अत्रुम्प्येति अथ गवाद्यागमाद्यनन्तरम् अत्रोफकाः अहिंसकाः द्विजाः ब्राह्मणाः त्रैवर्णिका वा प्रतुम्फशीलान् हिंसारतान् अत एव अत्रुम्प्यधामानम् अत्रुम्प्यम् अहिंस्यं धाम तेजो यस्य तम् इनं सूर्यम् "इनः सूर्ये प्रभौ" इत्यमरः । प्रतोफितुं हिंसितुं मिलतः समवेतान् राक्षसान् असुरान् जलैः अर्घ्यैः तुम्फितुं हन्तुम् उद्यताः उद्युक्ताः सन्तः वापीं दीर्घिकाम् अपर्पन् अयासिषुः । केचित् नदीं सरितम् अरफन् गतवन्तः ॥ ५३ ॥

अत्रुम्प्येति । त्रुम्पेर्यत् । प्रतोफितुम् । तुफेस्तुमुन् । प्रतुम्फेति । तुम्फेर्घञ् । अत्रोफकाः त्रुफेर्ण्वुल् । त्रुम्फितुम् । त्रुम्फेस्तुमुन् । अपर्पन्निति । ४१२ पर्प-४१३ रफ-४१४ रफि-४१५ अर्ब-४१६ पर्ब-४१७ लर्ब-४१८ बर्ब-४१९ मर्ब-४२० कर्ब-४२१ खर्ब-४२२ गर्ब-४२३ शर्ब-४२४ षर्ब-४२५ चर्ब-गतौ । अर्बादयो नोपधा इत्येके । पर्पेर्लङ् । अरफन् रफेश्च लङ् ॥ ५३ ॥

हयैः सुरम्फैर्गुतमर्वतो रवेः पर्वद्भिरालर्ब्यत रक्तिमा करैः ।
पूर्वर्ब्य शैलानुपमर्ब्य पद्मिनीं प्रकर्ब्य चाशाः श्रमशोणितैरिव ॥ ५४ ॥

हयैरिति सुरम्फैः सुगमनैः हयैः अश्वैः अर्वतो गच्छतो रवेः सूर्यस्य करैः रश्मिभिः शैलान् पर्वतान् पूर्वर्ब्य आश्रित्य पद्मिनीं कमलिनीम् उपमर्ब्य वियोगकाले उपगम्य आशाः दिशश्च प्रकर्ब्य सम्यग्गत्वा श्रमशोणितैः शैलादिषु संचारेण सञ्जातेन परिश्रमेण जन्यैः शोणितैः रुधिरैः इव रक्तिमा शोणत्वम् आलर्ब्यत प्राप्ता ॥ ५४ ॥

सुरम्फैरिति । रम्फेर्घञ् । अर्वतः-पर्वद्भिः इति अर्वेः शता पर्वेश्च । आलर्ब्यत । कर्मणि लङ् । पूर्वर्ब्य-उपमर्ब्य-प्रकर्ब्य । बर्बिमर्बिकर्बीनां ल्यप् ॥ ५४ ॥

(टि०) १ सिद्धान्तकौमुद्यान्तु एते नोपधा दृश्यन्ते । अन्येपि केचिदेवम् ॥

अखर्वि शैलाग्रमगर्वि सौधभूरशर्वि शाखाशिखरं च रश्मिभिः।
ऊर्ध्वप्रसर्वान्न तु चर्विता मही दिक्कुम्बितेऽर्के परिलुम्बिताम्बुजे ॥ ५५॥

अखर्वीति रश्मिभिः मयूखैः शैलाग्रं पर्वतशिखरम् अखर्वि प्राप्तं। सौधभूः प्रासादभूमिः अगर्वि प्राप्ता। शाखाशिखरं स्कन्धिकोपरिभागः च अशर्वि प्राप्तम्। किन्तु पुनः परिलुम्बिताम्बुजे परिलुम्बितानि विरहव्यथया अर्द्दितानि अम्बुजानि पद्मानि येन एवंभूते अर्के सूर्ये दिक्कुम्बिते आशाभिराच्छादिते सति ऊर्ध्वप्रसर्वात् उपर्युपरिगमनात् हेतोः मही पृथिवी न चर्विता प्राप्ता ॥ ५५ ॥

अखर्वि। अगर्वि। अशर्वि। एषु कर्मणि चिण्। प्रसर्वेति। सर्वेर्घञ्। चर्वितेति। चर्वेः कर्मणि क्तः। कुम्बितेति। ४२६ कुबि-आच्छादने। प्राग्वत् क्तः। परिलुम्बितेति। ४२७ लुबि--४२८ तुबि--अर्दने। लुम्बेः प्राग्वत् क्तः ॥ ५५ ॥

वियोगसंतुम्बितकोकचुम्बिता संतप्य सृब्धापि जगाद तद्वधूः।
मा त्वां स्मरः सृम्भतु शोभनाकृते! चिन्ता न शुम्भेन्न च सुम्भतु व्यथा॥५६॥

वियोगेति वियोगसन्तुम्बितकोकचुम्बिता वियोगेन विरहेण सन्तुम्बितोऽर्दितो यः कोकश्चक्रवाकस्तेन चुम्बिता कृतवक्त्रसंयोगा तद्वधूः कोकस्त्री सन्तप्य स्वयं सन्तापं प्राप्य सृब्धा पीडितापि इति जगाद। यत् हे शोभनाकृते! भासमानस्वरूप! स्मरः कामदेवः "कामः पञ्चशरः स्मरः" इत्यमरः। त्वां मा सृम्भतु न हन्तु पीडयतु। चिन्ता विरहादिविचारः न शुम्भेत् हिनस्तु व्यथा विरहजन्या पीडा च न सुम्भतु हिंस्यात् पीडयेत् ॥ ५६ ॥

संतुम्बितेति। तुबेः कर्मणि क्तः। चुम्बितेति ४२९ चुबि–वक्त्रसंयोगे। प्राग्वत् क्तः। सृब्धा। ४३० षृभु–४३१ षृम्भु–हिंसार्थौ। षिभु–षिम्भु–इत्येके। षृभेः प्राग्वत् क्तः। सृम्भतु सृम्भेर्लोट्। शोभदिति। ४३२ शुभ–४३३ शुम्भ–भाषणे। हिंसायां च। भासन इत्येके। षुम्भेरयन्ये। शुभेः शता। शुम्भेत् शुम्भेर्लिङ्। सुम्भतु सुम्भेर्लोट्। शुभादय उदात्ता उदात्तेतः ॥ ५६ ॥

प्रघिण्णय भूषाः परिघुण्णय मालिकाः प्रघृण्णय घोणापुटघूर्णि चन्दनम्।
पणाय्यरूपाः पनिताकृतीन्ययुर्भामिन्य एवाक्षमया स्वकामुकान् ॥ ५७ ॥

प्रघृण्णयेति भामिन्यः प्रणयकुपिताः स्त्रियः "कोपना सैव भामिनी" इत्यमरः। एव स्वयं विनापि सान्त्वनमित्यर्थः। भूषाः अलङ्कृतीः प्रघिण्णय गृहीत्वा मालिकाः स्रजः परिघुण्णय आदाय घोणापुटघूर्णि घोणापुटं नासान्तर्भागं

घूर्णयति शैत्येन भ्रमयतीति तादृशं **चन्दनं** मलयजं च **प्रघूण्य** गृहीत्वा **पणाय्यरूपाः** पाणाय्यं स्तुत्यं रूपं यासां तादृश्यः सत्यः **अक्षमया** मानं धारयितुमशक्यतया **पनिताकृतीन्** पनिता स्तुता आकृतिः स्वरूपं येषां तान् **स्वकामुकान्** निजप्रियान् **ययुः** गतवत्यः ॥ ५७ ॥

**प्रघिण्य** । **परिघुण्य** । **प्रघूर्णयति** । ४३४ घिणि–४३५ घुणि ४३६ घृणि–ग्रहणे । इदित्वाद् नुमि कृते ल्यप् । **घोणेति** । ४६७ घुण ४३८ घूर्ण भ्रमणे । घुणाचि क्रोडादिनिपातनात् टाप् । **घूर्णीति** । घूर्णेर्णिजन्तात्तिपानिः । **पणाय्येति** ४३९ पण–व्यवहारे स्तुतौ च । ४४७ पन–च । पन–स्तुतावित्र । 'गुपूधूप' (३।१।२८) इत्यायान्तात्ण्यत् । **पनितेति** । पनेः कर्मणि क्तः । **भामिन्यः** । ४४१ भाम क्रोधे । घञन्तान्मत्वर्थीय इनिः । **अक्षमयेति** । ४४२ क्षमूष्–सहने । षित्वादङ् । **कामुकानिति** ४४३ कमु–कान्तौ । कान्तिरिच्छा । 'लषपत' (३।२।१५४)–इत्यादिना उकञ् । घिण्णयादय उदात्ता अनुदात्तेतः ॥ ५७ ॥

**अणद्दिशः केलिरणैर्मनोज्ञया वाण्या भणन्तो मणिभूषणोत्कणाः ।**
**वनात्कुमाराः क्वणिताग्र्यवेणवो व्रणद्विषाणभ्रणिताभ्रमाययुः ॥ १८ ॥**

**अणद्दिश** इति **केलिरणैः** क्रीडाशब्दैः **अणद्दिशः** अणन्त्यः शब्दायमानाः दिश आशा येषां ते **मनोज्ञया** मनोहरया **वाण्या** वाचा **भणन्तः** मधुरं वदन्तः **मणिभूषणोत्कणाः** मणिभूषणैः रत्नखचितालङ्कारैः उत्कणाः सशब्दाः **क्वणिताग्र्यवेणवः** क्वणिताः शब्दिताः अग्र्याः सुन्दरा वेणवः वंशवाद्यविशेषा येषां ते **कुमाराः** गोपालबालादयः तदानीं **वनात्** अरण्यात् **व्रणद्विषाणभ्रणिताभ्रं** व्रणता शब्दायमानेन विषाणेन शृङ्गेण भ्रणितं शब्दितम् अभ्रं यस्मिन्कर्मणि तद्यथा तथा **आययुः** आगतवन्तः ॥ ५९ ॥

**अणद्दिति** । ४४४ अण-४४५ रण–४४६–वण–४४७ भण–४४८ मण–४३९ कण–४५० क्वण–४५१ व्रण-४५२ भ्रण–४५३ ध्वण–शब्दार्थाः । धण–इत्येके **अणेः** शता । **मणीति** । मणेरौणादिक इन् । **उत्कणाः** । कणेरप् । **क्वणितेति** । **क्वणेः** कर्तरि क्तः । **व्रणदिति** । व्रणेः शता । **भ्रणितेति** । भ्रणेः प्रागवत् क्तः ॥ ५९ ॥

**स्वणच्छिशून्धाणसमोणिताशुभान्शोणान्पृथुश्रोणिजनो दुदोह च ।**
**प्रह्रोणितान्प्रेमनदीघ्रणक्षितीनमुख्यकामेघुणाकनःस्तनान् ॥ ५६ ॥**

ध्वणदिति पृथुश्रोणिजनः पृथवः स्थूलाः श्रोणयः कटिभागा यासां तास्तासां जनः समूहः ता एव जन इति वा गोपीजनः इति यावत् । ध्वणच्छिशून् ध्वणन्तः शब्दायमानाः शिशवो वत्सा येषां ते तान् घाणसमोणिताशुभान् घाणेन शब्देन समोणितं सम्यगपनीतम् अशुभं पापं दुःखं वा यैः तान् शोणान् रक्तवर्णान् प्रश्लोणितान् एकस्थाने संघातीभूतान् प्रैणानविध्रणत्क्षितीन् प्रैणनेन गत्या विध्रणन्ती शब्दायमाना क्षितिः पृथिवी येषां तान् अनुल्वणान् अनुद्धतान् सौम्यानिति यावत् । कनत्स्तनान् कनन्तः शोभमानाः स्तना येषां तान् धेनुगणान् नवप्रसूतगोश्रेणीः दुदोह पयः क्षारयामास ॥ ५९ ॥

ध्वणदिति । ध्वणेः शता । घाणेति । घणेर्घञ् । श्रोणितेति । ४५४ श्रोणृ अपनयने । कर्मणि क्तः । शोणान् । ४५५ शोणृ—वर्णगत्योः । पचाद्यच् । श्रोणीति । ४५६ श्रोणृ—संघाते । ४५७ श्लोणृ—च । श्रोणेरिन् । प्रश्लोणितान् श्लोणेः कर्तरि क्तः । प्रैणनेति । ४५८ प्रैणृ—गतिप्रेरणश्लेषणेषु । ( 'पैणृ'—इत्यपि क्वचित्पठ्यते । ) ल्युट् । विध्रणदिति । ४५९ ध्रण शब्दे । वण—इत्येके । ध्रणेः शता । 'रषाभ्याम्' ( ८।४।१ ) इति णः । उल्वणेति । वणेः पचाद्यच् । कनदिति । ४६० कनी—दीप्तिकान्तिगतिषु । शता । स्तनेति । ४६१ ष्टन—४६२ वन—शब्दे । पचाद्यच् ॥ ५९ ॥

वनाद्वनं स द्रुमसानु गृहमन्नृहं व्याधोत्करोऽहंमतिमीमिताशयः ।
चान्तामिषश्छान्तजलः फलावलीं जाग्रया झमज्जेमनमक्रमीद्गुहाम् ॥६०॥

वनादिति अहंमतिमीमिताशयः अहंम्मतया ऽहङ्कारेण मीमितः प्राप्तः आशयोऽभिप्रायो यस्य सः चान्तामिषः चान्तम् भक्षितम् आमिषं मासं येन सः । छान्तजलः छान्तं पीतं जलं येन सः । व्याधोत्करः लुब्धकगणः वनात् अरण्यात् वनं सानुं गिरिशृङ्गं च अमन् गच्छन् गृहं निकायं च द्रमन् प्राप्नुवन् जेमनं लेह्यं झमन् अदन् सन् फलावलीं फलोत्करं जाग्रया संभक्ष्य गुहां गिरिकन्दरम् अक्रमीत् गतवान् ॥ ६० ॥

वनादिति । वनेरच् । वनमिति । ४६३ वन—४६४ षण—संभक्तौ । अर्थभेदमात्रेण पुनःपठितस्य वनेरप्यच् । सानुमिति । 'दृसनि'(उ०)इति सनेः ञुण् । अमन् । ४६५ अम—गत्यादिषु । आयुक्तेः शब्दसंभक्तिरोगेषु । अस्माच्छता । द्रमन् । ४६६ द्रम—४६७ हम्म—४६८ मीमृ—गतौ । मीम—शब्देऽपीत्येके । द्रमेः शता ।



(टि०) १ उत्पूर्वादिति शेषः । पृषोदरादित्वात् दस्य लत्वम् ।

**अहम्मतिः**। हम्मेर्भावे श्तिप् शप् च हम्मतिर्ज्ञानम्। नञ्समासः। **मीमितेति**। मीमेः कर्मणि क्तः। **चान्तेति**। **क्रान्तेति**। ४६९ चमु-४७० छमु-४७१ जमु-४७२ झमु-अदने। जिमेति चैके। चमिक्रम्योः कर्मणि क्तः। **जान्त्वा**। जमेः क्त्वा। **झमन्**। झमेः शता। **जेमनम्**। जिमेर्ल्युट्। **अक्रमीत्**। ४७३ क्रमु-पादविक्षेपे। लुङ्॥ ६०॥

**अन्तःस्थया कौतुकमूर्छया व्रजं तदायतासौ वयमानवात्सकम्।**
**पयःप्रदोहादिरताः प्रमय्य तं प्रैक्षन्त नूतनाचयितं कुतूहलात्॥ ६१॥**

अन्तःस्थयेति असौ अक्रूरः तदा तस्मिन्काले **अन्तःस्थया** मनोनिष्ठया **कौतुकमूर्छया** दर्शनोत्कण्ठया **वयमानवात्सकं** वयमानं इतस्ततो गच्छत् वात्सकं वत्ससमूहो यस्मिन् तं **व्रजं** नन्दग्रामम् **आयत** आगच्छत्। **पयःप्रदोहादिरताः** दुग्धदोहनादिव्यापारेषु प्रसक्ता जनाः **नूतनाचयितं** नवीनागमनकम् अतिथिं **तम्** अक्रूरं **प्रमय्य** प्राप्य **कुतूहलात्** उत्कण्ठया **प्रैक्षन्त** दृष्टवन्तः॥६१॥

**आयतेति**। ४७४ मय-४७५ वय-४७६ पय-४७७ मय-४७८ चय-४७९ तय-४८० णय-गतौ। षय-इत्यप्येके। 'तय-णय-रक्षणे च' इत्येके। अयेर्लङ्। **वयमानेति** वयेः शानच्। **पय** इति पयेरसुन्। **प्रमय्येति** मयेर्ल्यप्। **आचयितं**। चयेः कर्तरि क्तः॥ ६१॥

**प्रतय्य किंचिन्नयितो गृहान्तिकं ददर्श धन्यः स दयालुमीश्वरम्।**
**गोदोहदेशे रयितं सहाग्रजं तमूतसत्कीर्तिमपूतिभिर्गुणैः॥ ६२॥**

प्रतय्येति **धन्यः** सुदैवः **सः** अक्रूरः **किञ्चित्** स्तोकमार्गं **प्रतय्य** गत्वा **गृहान्तिकं** वेश्मसमीपं **नायितः** प्रापितः सन् **गोदोहदेशे** गवां पयःक्षारणस्थाने गोष्ठे **रयितं** गतम् **अपूतीभिः** सुरभिभिः मनोहरैरित्यर्थः **गुणैः** दयादाक्षिण्यादिभिरेव तन्तुभिः **ऊतसत्कीर्तिम्** ऊता सन्तानिता सती प्रशस्ता कीर्तिः समज्ञारूपा पटी येन तं **सहाग्रजं** बलभद्रसहितं **दयालुं** करुणाकरं **तम् ईश्वरं** श्रीकृष्णं **ददर्श** दृष्टवान्। एकदेशविवर्तिरूपकम् अत्रालंकारः॥६२॥

**दयालुमिति**। ४८१ दय-दानगतिरक्षणहिंसादानेषु। 'स्पृहिगृहिपतिदयि-' (३।२।१५७) इत्यादिनाऽऽलुच्। **रयितम्**। ४८२ रय-गतौ। कर्तरि क्तः। **ऊतेति**। ४८३ ऊयी-तन्तुसंताने। कर्मणि क्तः। **अपूतिभिरिति** ४८४ पूयी-विशरणे दुर्गन्धे च। क्तिन्॥ ६२॥

ईश्वरं विशिनष्टि चतुर्दशभिः—

**प्रक्वणयन्तं मुरलीं महीभरक्षमायं बलस्फीतसुपीनदोर्युगम् ।**
**अशेषतां भ्रूशलनैर्वलद्दृशा प्रच्छलमानं प्रियवल्लवीशुचम् ॥ ६३ ॥**

**प्रक्वणयन्तमिति मुरलीं** वंशिकां **प्रक्वणयन्तं** वादयन्तं **महीभरक्षमायं** महीभरस्य भूभारस्य क्षमायं विधूनयितारं नाशयितारं **बलस्फीतसुपीनदोर्युगं** बलेन स्फीतं प्रवृद्धं तथा सुपीनम् अतिस्थूलं दोर्युगं बाहुयुगलं यस्य तम् **अशेषताम्** अशेषस्य समस्तस्य तां तायितारं पालयितारं **भ्रूशलनैः** भ्रुवोश्चलनैः तथा **वलद्दृशा** वलन्त्या सञ्चरन्त्या दृशा दृष्ट्या **प्रियवल्लवीशुचं** प्रियाणां प्रणयिनीनां वल्लवीनां गोपीनां शुचं शोकं **प्रच्छलमानं** छादयन्तं तं श्रीकृष्णं ददर्शेति पूर्वेणान्वयः ॥ ६३ ॥

**प्रक्वणयन्तमिति** । ४८५ क्वण—शब्दे—उन्दे—च । अस्माण्णिचि 'आर्तिह्री'—(१।३।३६) इत्यादिना पुकि शता । **भक्षमायं** । ४८६ क्षमायी—विधूनने । कर्मण्यण् । **स्फीत—सुपीनेति** । ४८७ स्फायी—४८८ ओप्यायी—वृद्धौ । द्वयोः कर्तरि क्तः । **अशेषतां** । ४८९ तायृ—संतानपालनयोः । क्विपि 'लोपे व्योः' (६।१।६६) इति यलोपः । **शलनैरिति** । ४९० शल—चलनसंवरणयोः । ल्युट् । **वलदिति** ४९१ वल—४९२ वल्ल—संवरणे संचरणे च । अनुदात्तेतां तङोऽनित्यत्वाद्वलेः शता । **प्रच्छलमानमिति**—**वल्लवीति** । वल्लेः शानच् । औणादिकोऽवश्च ॥ ६३ ॥

**मामल्यमानं स्मितमल्लिकावलीमभाल्यदैत्याधिपमल्लनोद्धुरम् ।**
**कलोरुकल्लोलकलिन्दजाजले बालैस्तयूभिः सह देवनोत्सुकम् ॥६४॥**

**मामल्यमानमिति स्मितमल्लिकावलीं** स्मितानि ईषद्धासा एव मल्लिकावली भूम्दीश्रेणिः तां "तृणशून्यं तु मल्लिका भूपदी शीतभीरुश्च" इत्यमरः । **मामल्यमानं** पुनः पुनः धारयन्तम् **अभाल्यदैत्याधिपमल्लनोद्धुरम्** अभाल्यानां हन्तुमन्यैरशक्यानां दैत्याधिपानां राक्षसभूपतीनां मल्लने मारणे उद्धुरमुद्युक्तं **कलोरुकल्लोलकलिन्दजाजले** कलाः शब्दायमानाः उरवो महान्तः कल्लोला महोर्मयो यस्मिन् "महत्सूल्लोलकल्लोलौ" इत्यमरः । एवंभूते कालिन्दजाजले यमुनावारिणि "कालिन्दी सूर्यतनया यमुना" इत्यमरः । **तयूभिः** क्रीडकैः **बालैः** वयस्यैः कुमारैः **सह** सार्कं **देवनोत्सुकं** क्रीडने सोत्कण्ठं तं ददर्शेति पूर्वेणान्वयः एवमुत्तरत्रापि ॥ ६४ ॥

मामल्यमानामिति । ४६३ मल-४६४ मल्ल-धारणे । मलेर्यङ् । मल्लिमकेति । मल्लेः 'संज्ञायाम्' (३।३।१०६) इति ण्वुल् । अमालयेति । ४६५ भल-४६६ भल्ल-परिभाषणहिंसादानेषु । भलेर्यत् । भल्लनेति । भल्लेर्ल्युट् । कल्लेति । ४६७ कल-शब्दसंख्यानयोः । पचाद्यच् । कलल्लोलेति । ४६८ कल्ल-अव्यक्ते शब्दे । 'बहुलमन्यत्रापि'(उ०) इत्योलच् प्रत्ययः । तयूभिमिति । ४६६ तेवृ-५०० देवृ-देवने । तेवेः क्विपि 'च्छ्वोः शूड्' (६।४।१९) इत्यूठि अयादेशः । देवनेति देवेर्ल्युट् ॥ ६४ ॥

सेव्यं सतां शंकरगेव्यमब्जभूग्लेव्यं सुरैः पेव्यमसेव्यमुग्रमैः ।
प्रम्लेवितं रेवितवत्समण्डलीं मव्यद्भिराभीरजनैरसूर्क्षकैः ॥ ६५ ॥

सेव्यामिति सतां सुधीनां "सन्सुधिः कोविदो बुधः" इत्यमरः (कृत्यानां कर्तरि वेति षष्ठी) सेव्यं पूजनीयम् शङ्करगेव्यम् शिवेन अर्च्यम् अब्जभूग्लेव्यं ब्रह्मणा सेवनीयं सुरैः देवैः पेव्यं सेवितुं योग्यम् उग्रदैः विक्षिप्तचित्तैः असेव्यं सेवितुमशक्यं रेवितवत्समण्डलीं रेवितानाम् उत्प्लुत्य गच्छतां वत्सानां गोशिशूनां मण्डलीं श्रेणिं मव्यद्भिः बध्नद्भिः असूर्क्षकैः ईर्ष्यामकुर्वद्भिः आभीरजनैः गोपगणैः "गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः" इत्यमरः । प्रम्लेवितं सेवितं श्रीकृष्णं ददर्शेति पूर्वेणान्वयः ॥ ६५ ॥

सेव्यं, गेव्यं, ग्लेव्यं, पेव्यं, असेव्यमिति । ५०१ सेवृ-५०२ गेवृ-५०३ ग्लेवृ-५०४ पेवृ-५०५ मेवृ-५०६ म्लेवृ-सेवने । पञ्चानां ण्यत् । प्रम्लेवितं । म्लेवेः कर्मणि क्तः । रेवितेति । ५०७ रेवृ-प्लवगतौ । प्लवगतिः प्लुतगतिः क्तः । मयादय उदात्ता अनुदात्तेतः । मव्यद्भिः । ५०८ मव्य-बन्धने । अत्रान्ता उदात्ता उदात्तेतः । अस्माच्छता । सूर्क्षकैः।५०९सूर्क्ष-५१०ईर्क्ष-५११ ईर्ष्य ईर्ष्यार्थाः।सूर्क्षेर्ण्वुल् ॥६५॥

राधाकृष्णेर्ष्यिकलहावलोकनादीर्ष्यां ह्वयन्त्या रमया प्रमोदितम् ।
प्रशुच्य सोमं कृतहर्यतैर्नुतं समाश्रितं फुल्लसरोजमालया ॥ ६६ ॥

राधेति राधाकृष्णेर्ष्यिकलहावलोकनात् राधा नाम कृष्णभार्या तत्कृतस्य ईर्ष्यिकलहस्य परोत्कर्षासहिष्णुताजन्यविग्रहस्य अवलोकनात् दर्शनात् ईर्ष्याम् अक्षमां ह्वयन्त्या प्राप्नुवन्त्या रमया लक्ष्म्या प्रमोदितं हर्षितं सोमं सोमाख्यलतां प्रशुच्य अभिषुत्य कृतहर्यतैः सम्पादितयज्ञैः जनैः

**वल्भेति** तत्क्षणं तस्मिन् समये सायङ्काले **वल्भप्रगल्भाः** वल्भे भोजने प्रगल्भाः समर्थाः **पथिकाः** अध्वगाश्च ( चकारो गवां समुच्चयार्थः ) **शुश्रम्भण-स्तोभयुतान्** शुश्रम्भणं शोभनपाकस्तस्य स्तोभो व्यापारः तेन युतान् युक्तान् **गृहान्** निजालयान् **अगुः** अगच्छन्। तया **अधूपितात्मनाम्** अधूपितः। असन्तप्त आत्मा मनो येषां तेषां "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च" इति धरणिः। **धर्मं** सुकृतं **गोपायतां** धर्मात्मनामित्यर्थः। **जल्पान्** सांसारिकवार्तालापान् **विमुच्य** त्यक्त्वा **जपे** मानसिकमन्त्राद्युच्चारणे **उद्यमः** उद्योगः **अभवत्** सञ्जातः॥ ५१॥

**वल्भेति**। ३९१ वल्भ भोजने। घञ्। **प्रगल्भाः**। ३९२ गल्भ-धाष्ट्र्ये। पचाद्यच्। **शुश्रम्भणेति**। ३९३ श्रम्भु-पाके। ल्युट्। **स्तोभेति**। ३९४ ष्टुभु-स्तम्भे। अयं व्यापारार्थे प्रसिद्धः। अस्मात् घञ्। तिपादयोऽनुदात्तेतः। तिथिवर्जमुदात्तः। **गोपायतामिति**। ३९५ गुपू-रक्षणे। स्तम्भान्ता उदात्तेतः। अस्मात् 'गुपूधूपविच्छिपणिपनिभ्य आयः' (३।१।२८) इत्यायप्रत्ययान्ताच्छता। **अधूपितेति** ३९६ धूप-संतापे। कर्तरि क्तः। **जल्पान्**। ३९७ जल्प--३९८ जप-व्यक्तायां वाचि। जप-मानसे च। जल्पेर्घञ्। **जप इति**। 'व्यधजपोरनुपसर्गे' (३।३।६१) इत्यप्॥ ५१॥

**चेपुः सप तोऽसचितां प्रियां प्रियाः संध्येति रेपुः कलल पिनः शुकाः।**
**श्येनाश्चुपित्वा तुतुपुः कपोतकान्काकानतुम्पन्नभितुस्तुपुः शशान्॥५२॥**

**चेपुरिति** किञ्च **प्रियाः** बल्लभाः **असचिताम्** असमवेतां रोषादिनाऽमिलितां **प्रियां** कान्तां **सपन्तः** प्रणामादिना मिलिताः सन्तः **चेपुः** सान्त्वयामासुः। **कललापिनः** मधुरभाषिणः **शुकाः** कीराः **सन्ध्या इति** शब्दं **रेपुः** स्पष्टमुक्तवन्तः **श्येनाः** (बाज) इति प्रसिद्धाः पक्षिणः च **चुपित्वा** मन्दं गत्वा **कपोतान्** पारावतान्। **तुतुपुः** जिहिंसुः **काकान्** वायसान् **अतुम्पन्** अघ्नन् **शशान्** तदाख्यक्षुद्रमृगविशेषान् **अभितुस्तुपुः** हतवन्तः॥ ५२॥

**चेपुरिति**। ३९९ चप-सान्त्वने। लिट्। **सपन्तः**। ४०० षप-समवाये। षचेत्येके। समवायः संबन्धः सम्यगवबोधो वा। सपेः शता। **असचिताम्**। सचेः कर्तरि क्तः। **रेपुः**। ४०१ रप-४०२ लप-व्यक्तायां वाचि। रपेर्लिट्। **कललापिनः**। लपेर्णिनिः। **चुपित्वा**। ४०३ चुप-मन्दायां गतौ। अस्मात् 'समानकर्तृकयोः पूर्व-

काले' ( ३।४।२१ ) इति क्त्वा । तुतुपुः । ४०४ तुप--४०५ तुम्प-४०६ त्रुप-४०७ त्रुम्प--४०८ तुफ-४०९ तुम्फ-४१० त्रुफ-४११-त्रुम्फ-हिंसार्थाः । तुपेर्लिट् । अतुम्पन् । तुम्पेर्लङ् । अभितुत्रुपुः । त्रुपेर्लिट् ॥ ५२ ॥

अत्रुम्प्यधामानमिनं प्रतोफितुं प्रतुम्फशीलान्मिलतोऽथ राक्षसान् ।
अत्रोफकास्तुम्फितुमुद्यता जलैर्वापीमपर्पन्नरफन्नदीं द्विजाः ॥ ५३ ॥

अत्रुम्प्येति अथ गवाद्यागमाद्यनन्तरम् अत्रोफकाः अहिंसकाः द्विजाः ब्राह्मणाः त्रैवर्णिका वा प्रतुम्फशीलान् हिंसारतान् अत एव अत्रुम्प्यधामानम् अत्रुम्प्यम् अहिंस्यं धाम तेजो यस्य तम् इनं सूर्य्यम् "इनः सूर्ये प्रभौ" इत्यमरः । प्रतोफितुं हिंसितुं मिलतः समवेतान् राक्षसान् असुरान् जलैः अर्घ्यैः तुम्फितुं हन्तुम् उद्यताः उद्युक्ताः सन्तः वापीं दीर्घिकाम् अपर्पन् प्रयासिषुः । केचित् नदीं सरितम् अरफन् गतवन्तः ॥ ५३ ॥

अत्रुम्प्येति । त्रुम्पेर्ण्यत् । प्रतोफितुम् । तुफेस्तुमुन् । प्रतुम्फेति । तुम्फेर्घञ् । अत्रोफकाः त्रुफेर्ण्वुल् । त्रुम्फितुम् । त्रुम्फेस्तुमुन् । अपर्पन्निति । ४१२ पर्प--४१३ रफ-४१४ रफि-४१५ अर्ब-४१६ पर्व--४१७ लर्ब-४१८ बर्ब-४१९ मर्व-४२० कर्व-४२१ खर्व-४२२ गर्व-४२३ शर्व-४२४ षर्व--४२५ चर्व-गतौ । अर्बादयो नोपधा इत्येके । पर्पेर्लङ् । अरफन् रफेश्च लङ् ॥ ५३ ॥

हयैः सुरम्फैर्द्रुतमर्वतो रवेः पर्वद्भिरालर्व्यत रक्तिमा करैः ।
प्रबर्व्य शैलानुपमर्व्य पद्मिनीं प्रकर्व्य चाशाः श्रमशोणितैरिव ॥ ५४ ॥

हयैरिति सुरम्फैः सुगमनैः हयैः अश्वैः अर्वतो गच्छतो रवेः सूर्यस्य करैः रश्मिभिः शैलान् पर्वतान् प्रबर्व्य आश्रित्य पद्मिनीं कमलिनीम् उपमर्व्य वियोगकाले उपगम्य आशाः दिशश्च प्रकर्व्य सम्यग्गत्वा श्रमशोणितैः शैलादिषु संचारेण सञ्जातेन परिश्रमेण जन्यैः शोणितैः रुधिरैः इव रक्तिमा शोणतम् आलर्व्यत प्राप्ता ॥ ५४ ॥

सुरम्फैरिति । रम्फेर्घञ् । अर्वतः-पर्वद्भिः इति अर्वेः शता पर्वेश्च । आलर्व्यत । कर्मणि लङ् । प्रबर्व्य-उपमर्व्य-प्रकर्व्य । बर्विमर्विकर्वीनां ल्यप् ॥ ५४ ॥

(टि०) १ सिद्धान्तकौमुद्यान्तु एते सोपधा दृश्यन्ते । अन्येपि केचिदेवम् ॥

अखर्वि शैलाग्रमगर्वि सौधभूरशर्वि शाखाशिखरं च रश्मिभिः ।
ऊर्ध्वप्रसर्वान्न तु चर्विता मही दिक्कुम्बितेऽर्के परिलुम्बिताम्बुजे ॥ ५५ ॥

अखर्वीति रश्मिभिः मयूखैः शैलाग्रं पर्वतशिखरम् अखर्वि प्रापि । सौधभूः प्रासादभूमिः अगर्वि प्राप्ता । शाखाशिखरं स्कन्धिकोपरिभागः च अशर्वि प्राप्तम् । किन्तु पुनः परिलुम्बिताम्बुजे परिलुम्बितानि विरहव्यथया मर्दितानि अम्बुजानि पद्मानि येन एवंभूते अर्के सूर्ये दिक्कुम्बिते आशाभिराच्छादिते सति ऊर्ध्वप्रसर्वात् उर्ध्वपरिगमनात् हेतोः मही पृथिवी न चर्विता प्राप्ता ॥ ५५ ॥

अखर्वि । अगर्वि । अशर्वि । एषु कर्मणि चिण् । प्रसर्वेति । सर्वेर्घञ् । चर्वितेति । चर्वेः कर्मणि क्तः । कुम्बितेति । ४२६ कुबि-आच्छादने । प्राग्वत् क्तः । परिलुम्बितेति । ४२७ लुबि--४२८ तुबि--अर्दने । लुम्बेः प्राग्वत् क्तः ॥ ५५ ॥

वियोगसंतुम्बितकोकचुम्बिता संतप्य सृम्धापि जगाद तद्वधूः ।
मा त्वां स्मरः सृम्भतु शोभनाकृते! चिन्ता न शुम्भेन्न च सुम्भतु व्यथा॥५६॥

वियोगेति वियोगसन्तुम्बितकोकचुम्बिता वियोगेन विरहेण सन्तुम्बितोऽर्दितो यः कोकश्चक्रवाकस्तेन चुम्बिता कृतवक्त्रसंयोगा तद्वधूः कोकस्त्री सन्तप्य स्वयं सन्तापं प्राप्य सृब्धा पीडितापि इति जगाद । यत् हे शोभनाकृते! भासमानस्वरूप! स्मरः कामदेवः "कामः पञ्चशरः स्मरः" इत्यमरः । त्वां मा सृम्भतु न हन्तु पीडयतु । चिन्ता विरहादिविचारः न शुम्भेत् हिनस्तु व्यथा विरहजन्या पीडा च न सुम्भतु हिंस्यात् पीडयेत् ॥ ५६ ॥

संतुम्बितेति । तुबेः कर्मणि क्तः । चुम्बितेति ४२९ चुबि-वक्त्रसंयोगे । प्राग्वत् क्तः । सृब्धा । ४३० सृभु-४३१ सृम्भु-हिंसार्थौ । षिभु-षिम्भु-इत्येके । सृभेः प्राग्वत् क्तः । सृम्भतु सृम्भेर्लोट् । शोभदिति । ४३२ शुभ-४३३ शुम्भ-भाषणे । हिंसायां च । भासन इत्येके । षुम्भेत्यन्ये । शुभेः शता । शुम्भेत् शुम्भेर्लिङ् । सुम्भतु सुम्भेर्लोट् । शुभादय उदात्ता उदात्तेतः ॥ ५६ ॥

प्रघिण्णय भूषाः परिघुण्णय मालिकाः प्रघृण्णय घोणापुटघूर्णि चन्दनम् ।
पणायरूपाः वनिताकृतीन्ययुर्भामिन्य एवाक्षमया स्वकामुकान् ॥ ५७ ॥

प्रघृण्णयेति भामिन्यः प्रणयकुपिताः स्त्रियः "कोपना सैव भामिनी" इत्यमरः । एव स्वयं विनापि सान्त्वनमित्यर्थः । भूषाः अलङ्कृतीः प्रघिण्णय गृहीत्वा मालिकाः सृजः परिघुण्णय आदाय घोणापुटघूर्णि घोणापुटं नासान्तर्भागं

घूर्णयति शैत्येन भ्रमयतीति तादृशं चन्दनं मलयजं च प्रघृण्य गृहीत्वा पणाय्यरूपाः पाणाय्यं स्तुत्यं रूपं यासां तादृश्य: सत्यः अक्षमया मानं पारयितुमशक्यतया पनिताकृतीन् पनिता स्तुता आकृतिः स्वरूपं येषां तान् स्वकामुकान् निजप्रियान् ययुः गतवत्यः ॥ ५७ ॥

प्रघिण्ण्य । परिघुण्य । प्रघूर्णयति । ४३४ घिणि—४३५ घुणि ४३६ घृणि—ग्रहणे । इदित्वाद् नुमि लघुत्वं ल्यप् । घोणेति । ४३७ घुण ४३८ घूर्ण भ्रमणे । घुणरचि क्रोडादिनिपातनात् टाप् । घूर्णीति । घूर्णेणिजन्ताण्णिनिः । पणाय्येति ४३९ पण—व्यवहारे स्तुतौ च । ४४० पन—च । पन—स्तुतावेव । 'गुपूधूप'(३।१।२८) इत्यायान्तावण्यत् । पनितेति । पनेः कर्मणि क्तः । भामिन्यः । ४४१ भाम क्रोधे । घञन्तान्मत्वर्थीय इनिः । अक्षमयेति । ४४२ क्षमूष्—सहने । षित्वादङ् । कामुकानिति ४४३ कमु—कान्तौ । कान्तिरिच्छा । 'लषपत' (३।२।१५४)—इत्यादिना उकञ् । घिण्णयाद्य उदात्ता अनुदात्तेतः ॥ ५७ ॥

अणाद्दिशः केलिरणैर्मनोज्ञया वाणया भणन्तो मणिभूषणोत्कणाः ।
वनात्कुमाराः क्वणिताभ्रचेणवो व्रणाद्विषाणभ्रणिताभ्रमाययुः ॥ ५८ ॥

अणाद्दिश इति केलिरणैः क्रीडाशब्दैः अणाद्दिशः अणन्त्यः शब्दायमानाः दिश आशा येषां ते मनोज्ञया मनोहरया वाणया वाचा भणन्तः मधुरं वदन्तः मणिभूषणोत्कणाः मणिभूषणैः रत्नखचितालङ्कारैः उत्कणाः सशब्दाः क्वणिताभ्रवेणवः क्वणिताः शब्दिताः अभ्रयाः सुन्दरा वेणवः वंशवाद्यविशेषा येषां ते कुमाराः गोपालबालादयः तदानीं वनात् अरण्यात व्रणाद्विषाणभ्रणिताभ्रं व्रणता शब्दायमानेन विषाणेन शृङ्गेण भ्रणितं शब्दितम् अभ्रं यस्मिन्कर्मणि तद्यथा तथा आययुः आगतवन्तः ॥ ५९ ॥

अणाद्दिति । ४४४ अण-४४५ रण--४४६-वण–४४७ भण–४४८ मण–४३९ कण--४५० क्वण–४५१ व्रण-४५२ भ्रण–५५३ ध्वण–शब्दार्थाः । धण–इत्येके अणेः शता । मणीति । मणेरौणादिक इन् । उत्कणाः । कणेरप् । क्वणितेति । क्वणेः कर्तरि क्तः । व्रणदिति । व्रणेः शता । भ्रणितेति । भ्रणेः प्राग्वत् क्तः ॥ ५९ ॥

स्वणाञ्चिशुन्धाणसमोणिताशुभान्शोणान्पृथुश्रोणिजनो ददोहृ च ।
प्रह्ज्ञोणितान्प्रेण... हैनुकलाक्षेनुगणान्कनस्तनान् ॥ ६० ॥

**पृथ्वादिति** **पृथुश्रोणिजनः** पृथवः स्थूलाः श्रोणयः कटिभागा यासां तास्तासां जनः समूहः ता एव जन इति वा गोपीजनः इति यावत् । **ध्वणच्छिशून्** ध्वणन्तः शब्दायमानाः शिशवो वत्सा येषां ते तान् **घाणसमोषिताशुभान्** घाणेन शब्देन समोषितं सम्यगपनीतम् अशुभं पापं दुःखं वा यैः तान् **शोणान्** रक्तवर्णान् **प्रश्लोषितान्** एकस्थाने संघातीभूतान् **प्रैणनविध्रणत्क्षितीन्** प्रैणनेन गत्या विध्रणन्ती शब्दायमाना क्षितिः पृथिवी येषां तान् **अनुल्वणान्** अनुद्धतान् सौम्यानिति यावत् । **कनत्स्तनान्** कनन्तः शोभमानाः स्तना येषां तान् **धेनुगणान्** नवप्रसूतगोश्रेणीः **दुदोह** पयः क्षारयामास ॥ ५९ ॥

**ध्वणादिति** । ध्वणेः शता । **घाणेति** । घणेर्घञ् । **ओषितेति** । ४५४ श्रापृ अपनयने । कर्मणि क्तः । **शोणान्** । ४५५ शोणृ–वर्णगत्योः । पचाद्यच् । **श्रोणीति** । ४५६ श्रोणृ–संघाते । ४५७ श्लोणृ–च । श्रोणेरिन् । **प्रश्लोषितान्** श्लोणेः कर्तरि क्तः । **प्रैणनेति** । ४५८ प्रैणृ–गतिप्रेरणश्लेषणेषु । ( 'पैणृ'–इत्यपि क्वचित्पठ्यते । ) ल्युट् । **विध्रणदिति** । ४५९ ध्रण शब्दे । वण–इत्येके । ध्रणेः शता । 'रषाभ्याम्' ( ८।४।१ ) इति णः । **उल्वणेति** । वणेः पचाद्यच् । **कनदिति** । ४६० कनी–दीप्तिकान्तिगतिषु । शता । **स्तनेति** । ४६१ ष्टन–४६२ वन–शब्दे । पचाद्यच् ॥ ५९ ॥

**वनाद्वनं स सानुमभ्रमन्द्रमन्गृहं व्याघोत्करोऽहंमतिमीमिताशयः ।**
**चान्तामिषश्छान्तजलः फलावलीं जाम्रशा झमज्जेमनमक्रमीद्गुहाम् ॥ ६० ॥**

**वनादिति** **अहंमतिमीमिताशयः** अहम्मत्या ऽहङ्कारेण मीमितः प्राप्तः आशयोऽभिप्रायो यस्य सः **चान्तामिषः** चान्तम् भक्षितम् आमिषं मांसं येन सः । **छान्तजलः** छान्तं पीतं जलं येन सः । **व्याघोत्करः** लुब्धकगणः **वनात्** अरण्यात् **वनं** **सानुं** गिरिशृङ्गं च **अभ्रमन्** गच्छन् **गृहं** निकायं च **द्रमन्** प्राप्नुवन् **जेमनं** लेह्यं **झमन्** अदन् सन् **फलावलीं** फलोत्करं **जाम्रशा** संभक्ष्य **गुहां** गिरिकन्दरम् **अक्रमीत्** गतवान् ॥ ६० ॥

**वनादिति** । वनेरच् । **वनमिति** । ४६३ वन–४६४ षण–संभक्तौ । अर्थभेदमात्रेण पुनःपठितस्य वनेरप्यच् । **सानुमिति** । 'दसनि'(उ०)इति सनेः ञुण् । **अभ्रमन्** । ४६५ अम–गत्यादिषु । आद्युक्तेः शब्दसंभक्तिरोगेषु । अस्माच्छता । **द्रमन्** । ४६६ द्रम–४६७ हम्म–४६८ मीमृ–गतौ । मीम–शब्देऽपीत्येके । द्रमेः शता ।



(टि०) १ उत्पूर्वादिति शेषः । पृषोदरादित्वात् दस्य लत्वम् ।

**अहम्मतिः** । हम्मेर्भावे श्तिप् शप् च हम्मतिर्ज्ञानम् । नञ्समासः । **मीमितेति** । मीमेः कर्मणि क्तः । **चान्तेति** । **छान्तेति** । ४६९ चमु—४७० छमु—४७१ जमु—४७२ झमु—अदने । जिमिति चैके । चमिछम्योः कर्मणि क्तः । **जान्त्वा** । जमेः क्त्वा । **झमन्** । झमेः शता । **जेमनम्** । जिमेर्ल्युट् । **अक्रमीत्** । ४७३ क्रमु—पादविक्षेपे । लुङ् ॥ ६० ॥

**अन्तस्थया कौतुकमूर्च्छया व्रजं तदायतासौ वयमानवात्सकम् ।**
**पयःप्रदोहादिरताः प्रमय्य तं प्रैक्षन्त नूत्नाचयितं कुतूहलात् ॥ ६१ ॥**

अन्तःस्थयेति **असौ** अक्रूरः **तदा** तास्मिन्काले **अन्तःस्थया** मनोनिष्ठया **कौतुकमूर्च्छया** दर्शनोत्कण्ठया **वयमानवात्सकं** वयमानम् इतस्ततो गच्छत् वात्सकं वत्ससमूहो यस्मिन् तं **व्रजं** नन्दग्रामम् **आयत** आगच्छत् । **पयःप्रदोहादिरताः** दुग्धदोहनादिव्यापारेषु प्रसक्ता जनाः **नूत्नाचयितं** नवीनागमनकम् अतिथिं **तम्** अक्रूरं **प्रमय्य** प्राप्य **कुतूहलात्** उत्कण्ठया **प्रैक्षन्त** दृष्टवन्तः ॥६१॥

**आयतेति** । ४७४ अय—४७५ वय—४७६ पय—४७७ मय—४७८ चय—४७९ तय—४८० णय—गतौ । पय—इत्यप्येके । 'तय—णय—रक्षणे च' इत्येके । अयेर्लङ् । **वयमानेति** वयेः शानच् । **पय** इति पयेरसुन् । **प्रमय्येति** मयेर्ल्यप् । **आचयितं** । चयेः कर्तरि क्तः ॥ ६१ ॥

**प्रतय्य किंचिन्नयितो गृहान्तिकं ददर्श धन्यः स दयालुमीश्वरम् ।**
**गोदोहदेशे रयितं सहाग्रजं तमूतसत्कीर्तिमपूतिभिर्गुणैः ॥ ६२ ॥**

प्रतय्येति **धन्यः** सुदैवः **सः** अक्रूरः **किञ्चित्** स्तोकमार्गं **प्रतय्य** गत्वा **गृहान्तिकं** वेश्मसमीपं **नयितः** प्रापितः सन् **गोदोहदेशे** गवां पयःक्षारणस्थाने गोष्ठे **रयितं** गतम् **अपूतिभिः** सुरभिभिः मनोहरैरित्यर्थः **गुणैः** दयादाक्षिण्यादिभिरेव तन्तुभिः **ऊतसत्कीर्तिम्** ऊता सन्तानिता सती प्रशस्ता कीर्तिः समज्ञारूपा पटी येन तं **सहाग्रजं** बलभद्रसहितं **दयालुं** करुणाकरं **तम् ईश्वरं** श्रीकृष्णं **ददर्श** दृष्टवान् । एकदेशविवर्तिरूपकम् अत्रालंकारः ॥६२॥

**दयालुमिति** । ४८१ दय—दानगतिरक्षणहिंसादानेषु । 'स्पृहिगृहिपतिदयि—' (३।२।१५८) इत्यादिनाऽऽलुच् । **रयितम्** । ४८२ रय—गतौ । कर्तरि क्तः । **ऊतेति** । ४८३ ऊयी—तन्तुसंताने । कर्मणि क्तः । **अपूतिभिरिति** ४८४ पूयी—विशरणे दुर्गन्धे च । क्तिन् ॥ ६२ ॥

ईश्वरं विशिनष्टि चतुर्दशभिः—

**प्रक्ष्वेपयन्तं मुरलीं महीभरक्षमायं बलस्फीतसुपीनदोर्युगम् ।**
**अशेषतां भ्रूशलनैर्वलद्दृशा प्रवल्लमानं प्रियवल्लवीशुचम् ॥ ६३ ॥**

**प्रक्ष्वेपयन्तमिति** मुरलीं वंशिकां **प्रक्ष्वेपयन्तं** वादयन्तं **महीभरक्षमायं** महीभरस्य भूभारस्य क्षमायं विधूनयितारं नाशयितारं **बलस्फीतसुपीनदोर्युगं** बलेन स्फीतं प्रवृद्धं तथा सुपीनम् अतिस्थूलं दोर्युगं बाहुयुगलं यस्य तम् **अशेषताम्** अशेषस्य समस्तस्य तां तायितारं पालयितारं **भ्रूशलनैः** भ्रुवोश्चलनैः तथा **वलद्दृशा** वलन्त्या सञ्चरन्त्या दृशा दृष्ट्या **प्रियवल्लवीशुचं** प्रियाणां प्रणयिनीनां बल्लवीनां गोपीनां शुचं शोकं **प्रवल्लमानं** छादयन्तं तं श्रीकृष्णं ददर्शेति पूर्वेणान्वयः ॥ ६३ ॥

प्रक्ष्वेपयन्तमिति । ४८५ क्ष्वीड़-शब्दे-उन्दे-च । अस्माणिणचि 'अर्तिह्री'-(७।३।३६) इत्यादिना पुकि शता । भरक्षमायं । ४८६ क्षमायी-विधूनने । कर्मण्यण् । स्फीत-सुपीनेति । ४८७ स्फायी-४८८ ओप्यायी-वृद्धौ । द्वयोः कर्तरि क्तः । अशेषतां । ४८९ तायृ-संतानपालनयोः । क्विपि 'लोपे व्योः' (६।१।६६) इति यलोपः । शलनैरिति । ४९० शल-चलनसंवरणयोः । ल्युट् । वलदिति ४९१ वल-४९२ वल्ल-संवरणे संचरणे च । अनुदात्तेतां तङोऽनित्यत्वाद्धेतेः शता । प्रवल्लमानमिति-वल्लवीति । वल्लेः शानच् । औणादिकोऽवक्च ॥ ६३ ॥

**मामल्यमानं स्मितमल्लिकावलीमभाल्यदैत्याधिपमल्लनोद्धुरम् ।**
**कलोरुकल्लोलकलिन्दजाजले बालैस्तयूभिः सह देवनोत्सुकम् ॥६४॥**

**मामल्यमानमिति** स्मितमल्लिकावलीं स्मितानि ईषद्धासा एव मल्लिकावली भूपदीश्रेणिः तां "तृणशून्यं तु मल्लिका भूपदी शीतभीरुश्च" इत्यमरः । **मामल्यमानं** पुनः पुनः धारयन्तम् **अभाल्यदैत्याधिपमल्लनोद्धुरम्** अभाल्यानां हन्तुमन्यैरशक्यानां दैत्याधिपानां राक्षसभूपतीनां मल्लने मारणे उद्धुरमुद्युक्तं **कलोरुकल्लोलकलिन्दजाजले** कलाः शब्दायमानाः उरवो महान्तः कल्लोला महोर्मयो यस्मिन् "महत्सूल्लोलकल्लोलौ" इत्यमरः । एवंभूते कालिन्दजाजले यमुनावारिणि "कालिन्दी सूर्यतनया यमुना" इत्यमरः । **तयूभिः** क्रीडकैः **बालैः** वयस्यैः कुमारैः सह सार्कं **देवनोत्सुकं** क्रीडने सोत्कण्ठं तं ददर्शेति पूर्वेणान्वयः एवमुत्तरत्रापि ॥ ६४ ॥

मामल्यमानामिति । ४९३ मल-४९४ मल्ल-धारणे । मलेर्यङ् । मल्लिकेति । मल्लेः 'संज्ञायाम्' (३।३।१०९) इति ण्वुल् । अभाल्यतेति । ४९५ भल-४९६ भल्ल-परिभाषणहिंसादानेषु । भलेर्यत् । भल्लनेति । भल्लेर्ल्युट् । कल्लेति । ४९७ कल्ल-शब्दसंख्यानयोः । पचाद्यच् । कल्लोलेति । ४९८ कल्ल-अव्यक्ते शब्दे । 'बहुलमन्यत्रापि'(उ०) इत्योलच् प्रत्ययः । तयूभिरिति । ४९९ तेवृ-५०० देवृ-देवने । तवेः क्विपि 'च्छ्वोः शूडू' (६।४।१९।) इत्यूठि अयादेशः । देवनेति देवेर्ल्युट् ॥ ६४ ॥

सेव्यं सतां शंकरगेव्यमञ्जभुग्लेव्यं सुरैः पेव्यममेव्यमुन्मदैः ।
प्रम्लेवितं रेवितवत्समण्डलीं मव्यद्भिराभीरजनैरसूर्क्ष्यकैः ॥ ६५ ॥

सेव्यमिति सतां सुधीनां "सन्सुधिः कोविदो बुधः" इत्यमरः (कृत्यानां कर्तरि वेति षष्ठी) सेव्यं पूजनीयम् शङ्करगेव्यम् शिवेन अर्च्यम् अब्जभूग्लेव्यं ब्रह्मणा सेवनीयं सुरैः देवैः पेव्यं सेवितुं योग्यम् उन्मदैः विक्षिप्तचित्तैः अमेव्यं सेवितुमशक्यं रेवितवत्सरण्डलीं रेवितानाम् उत्प्लुत्य गच्छतां वत्सानां गोशिशूनां मण्डलीं श्रेणिं मव्यद्भिः बध्नद्भिः असूर्क्ष्यकैः ईर्ष्यामकुर्वद्भिः आभीरजनैः गोपगणैः "गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः" इत्यमरः । प्रम्लेवितं सेवितं श्रीकृष्णं ददर्शेति पूर्वेणान्वयः ॥ ६५ ॥

सेव्यं, गेव्यं, ग्लेव्यं, पेव्यं, अमेव्यमिति । ५०१ षेवृ-५०२ गेवृ-५०३ ग्लेवृ-५०४ पेवृ-५०५ मेवृ-५०६ म्लेवृ-सेवने । पञ्चानां ण्यत् । प्रम्लेवितं । म्लेवेः कर्मणि क्तः । रेवितेति । ५०७ रेवृ-प्लवगतौ । प्लवगतिः प्लुतगतिः क्तः । अयादय उदात्ता अनुदात्तेतः । मव्यद्भिः । ५०८ मव्य-बन्धने । अतान्ता उदात्ता उदात्तेतः । अस्माच्छता । सूर्क्ष्यकैः।५०९सूर्क्ष्य-५१०ईर्क्ष्य-५११ ईर्ष्य ईर्ष्यार्थाः। सूर्क्ष्येर्ण्वुल् ॥६५॥

राधाकृतेर्ष्याकलहावलोकनादीर्ष्यां ह्ययन्त्या रमया प्रमोदितम् ।
प्रभुच्य सोमं कृतहर्यतैर्नुतं समाजितं फुल्लसरोजमालया ॥ ६६ ॥

राधेति राधाकृतेर्ष्याकलहावलोकनात् राधा नाम कृष्णभार्या तत्कृतस्य ईर्ष्याकलहस्य परोत्कर्षासहिष्णुताजन्यविग्रहस्य अवलोकनात् दर्शनात् ईर्ष्याम् अक्षमां ह्ययन्त्या प्राप्नुवन्त्या रमया लक्ष्म्या प्रमोदितं हर्षितं सोमं सोमाख्यलतां प्रभुत्य अभिषुत्य कृतहर्यतैः सम्पादितयज्ञैः जनैः

(कर्तृभिः) **फुल्लसरोजमालया** फुल्लया विकसितया पद्मस्रजा (करणभूतया) **समालितं** भूषितं श्रीकृष्णं ददर्श ॥ ६६ ॥

**ईर्ष्या।** **ईर्ष्या** इति। 'गुरोश्च हलः' (३।३।१०३) इत्यकारः **ह्यन्त्य**[1] ५१२ ह्य-गतौ। 'भाक्तिशब्दयोः' इत्येके। शत्रन्तान्ङीप्। **प्रशुच्येति**। ५१३ शुच्य-अभिषवे। अभिषवो निष्पीडनस्नपनसुरासन्धानस्नानादिः। ल्यप्। **हर्येतेति**। ५१४ हर्य-गतिकान्त्योः। अस्मात् 'भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच्'(उ०) इत्यतच्। समालितं। ५१५ अल-भूषणपर्याप्तिवारणेषु। कर्मणि क्तः। **फुल्लेति**। ५१६ञिफला-विशरणे। तच्च विशीर्णत्वम्। विकसनम्। 'अनुपसर्गात्फुल्ल—' (८।२।५५) इत्यादिना निपातितः॥ ६६ ॥

**उन्मीलनश्मीलनलीलया दृशोरुत्स्मीलितक्ष्मीलितविश्वविष्टपम्।**
**पिच्छस्रजा पीलितनीलकुन्तलं शीलेन संकीलितलोकमानसम् ॥६७॥**

**उन्मीलनेति दृशोः** नेत्रयोः **उन्मीलनश्मीलनलीलया** उद्घाटनसंकोचनरूपया क्रीडया **उत्स्मीलितक्ष्मीलितविश्वविष्टपम्** उत्स्मीलितानि प्रकाशितानि क्ष्मीलितानि तिरोधापितानि विश्वानि सर्वाणि विष्टपानि भुवनानि येन तं "विष्टपं भुवनं जगत्" इत्यमरः। **पिच्छस्रजा** मयूरबर्हनिर्मितमालया **पीलितनीलकुन्तलं** पीलितो बद्धो नीलकुन्तलो कृष्णकचो येन तं "कुन्तलो वालकचः" इत्यमरः। **शीलेन** मनोज्ञस्वभावेन **संकीलितलोकमानसं** संकीलितं बद्धं वशीकृतमिति यावत् लोकमानसं जनमनो येन तं श्रीकृष्णं ददर्शेति ॥ ६७ ॥

**उन्मीलनश्मीलनेति** ५१७ मील-५१८ श्मील-५१९ स्मील-५२० क्ष्मील-निमेषणे। संकोचनं तत्। मीलश्मीलाभ्यां ल्युट्। **उत्स्मीलितक्ष्मीलितेति**॥ स्मीलक्ष्मीलाभ्यां णिजन्ताभ्यां कर्मणि क्तः। **पीलितेति**। ५२१ पील-प्रतिष्टम्भे। रोधनं तत्। कर्मणि क्तः। **नीलेति**। ५२२ णील-वर्णे। इगुपधत्वात् कः। **शीलेनेति**। ५२३ शील-समाधौ। समाधिर्निष्ठाकरणम्। घञ्। **संकीलितेति**। ५२४ कील-बन्धने। कर्मणि क्तः॥ ६७ ॥

**सन्मार्गसंकूलिषु शूलदायिनं दहन्तमेनांसि च तूलपूलवत्।**
**मूलं फलं वाप्यददतामचुल्लतां प्रफुल्लभक्त्युल्लतिचिल्लचेतसाम् ॥ ६८ ॥**
**अवेलितानां प्रतिचेलधारिणामकेलिलोले हृदि बद्धखेलनम्।**
**फणीश्वरक्ष्वेलरुधं प्रवेल्लितस्रजं मुहुः पेलवव्रातफेलनात् ॥ ६९ ॥**

सन्मार्गेति **सन्मार्गसंकूलिषु** सन्मार्गस्य सदाचारस्य संकूलिषु निरोधशीलेषु दुष्टेषु **शूलदायिनं** शूलं पीडां दत्ते करोति तच्छीलस्तम् **एनांसि** दुरितानि च "कलुषं वृजिनैनौघमंहोदुरितदुष्कृतम्" इत्यमरः । **तूलपूलवत्** कार्पाससमूहवत् **दहन्तं** नाशयन्तमित्यर्थः **मूलं** कन्दादि **फलम्** आम्रादि **वाऽपि अदतां** भक्षयताम् **अचुल्लताम्** अनाविष्कृताभिप्रायाणां **प्रफुल्लभक्त्युन्नतिचिल्लचेतसां** प्रफुल्लया विकासितया प्रविस्तृतया भक्त्युन्नत्या पूज्यानुरागाधिक्येन चिल्लचेतसाम् आर्द्रीभवन्मनसाम् **अवेलितानां** केनाप्यचलितानां **प्रतिचेलधारिणां** कुत्सितानि चेलानि प्रति चेलानि वल्कादिवासांसि तद्धारिणां परिधानशीलानां तपस्विनाम् **अकेलिलोले** न केल्या विक्षेपक्रीडया लोले, अचञ्चले शान्ते इति यावत् **हृदि** चित्ते **वद्धखेलनं** कृतक्रीडं विराजमानमित्यर्थः । **फणीश्वरक्ष्वेलरुधं** फणीश्वरस्य कालियाख्यसर्पराजस्य क्ष्वेलं विषं 'क्ष्वेडो ध्वनौ कर्णामये विषे" इति मेदिनी । ( रलयोर्डलयोरभेदः ) रुणद्धि प्रतिहतशक्तीकरोतीति तादृशं तथा **पेलववात-फेलनात्** पेलवस्य मृदोः "पेलवं विरलं तनु" इत्यमरः । वातस्य वायोः फेलनात् चलनात् हेतोः मुहुः वारं वारं **प्रवेल्लितस्रजं** दोलायमानवनमालं तं हरिं ददर्शेति॥६९॥

सन्मार्गसंकूलिष्विति । ५२५ कूल–आवरणे । णिनिः । शूलेति । ५२६ शूल-रुजायां संघाते च । **तूलपूलवत्** । ५२७ तूल–निष्कर्षे । निष्कोषणं तत् । ५२८ पूल-संघाते । द्वयोर्घञ् । **मूलं–फलम्** । ५२९ मूल–प्रतिष्ठायाम् । ५३० फल–निष्पत्तौ । द्वयोः पचाद्यच् । **अचुल्लताम्** । ५३१ चुल्ल--भावकरणे । शता । **प्रफुल्लेति** । ५३२ फुल्ल--विकसने । पचाद्यच् । **चिल्लेति** । ५३३ चिल्ल–शैथिल्ये भावकरणे च । अच् । **अवेलितानाम्** । ५३४ वेल्ल--५३५ चेल्ल–५३६ केल्ल–५३७ खेल्ल ५३८ क्ष्वेल्ल–५३९ वेल्ल–चलने । वेलेः कर्मणि क्तः । **चेलेति** । चेलेरच् । **केलीति** केलेरिन् । **खेलनमिति** । खेलेर्ल्युट् । द्वयोः क्रीडार्थत्वं धातूनामनेकार्थत्वात् । **क्ष्वेलेति** क्ष्वेलेर्घञ् । **प्रवेल्लितेति** । वेल्लेः कर्तरि क्तः । **पेलवेति** । ५४० पेल्ल–५४१ फेल्ल–५४२ शेल्ल–गतौ । 'कुडिकितिपणिपेलपल्लिवल्लिगालिभ्योऽवक्' (उ०) इति पेलेरवक् । **फेलनात्** फेलेर्ल्युट् ॥ ६८ ॥ ६९ ॥

**सुमार्गशीलास्खलतां खलात्मनां गलच्छिदार्थं सलितं महीतलम् ।**
**दलत्तनुप्रश्वसितामयाख्याति प्रस्खलिताम्बोऽस्तु दर्शनायुष्मम् ॥ ७० ॥**

सुमार्गेति **सुमार्गशैलात्** सदाचारपथानुसरणात् **स्खलतां** पततां **खलात्मनां** दुष्टचेतसां **गलच्छिदार्थं** शिरोधिपृथक्करणार्थं **मही तलं** भूपृष्ठं **सलितं** प्राप्तं **दलत्तनुप्रश्वलितान्** दलत्तनु भयेन विदीर्यमाणदेहं यथा स्यात्तथा प्रश्वल्लितान् माशुगतान् **परान्** शत्रून् **प्रति** लक्ष्यीकृत्य **प्रश्वल्लिताखोडसुदर्शनायुधं** प्रश्वाल्लित-माशुगमितम् (वधार्थम्) अखोडम् अप्रतिहतगति सुदर्शनाभिधं निजम युधं चक्रं येन तं "चक्रं सुदर्शनम्"इत्यमरः। श्रीकृष्णं ददर्शेति ॥ अत्र पादत्रये वंशस्थं तुर्ये तु इन्द्रवंशेति तयोरुपजातिः ॥ ७० ॥

शैलादिति । शैलेर्घञ् । **स्खलताम्** । ५४३ स्खल—संचलने । प्रतिघातेऽप्यस्ति । शता । **खलेति** । ५४४ खल-संचये । पचाद्यच् । **गलेति** । ५४५ गल—अदने । अच् । **सलितम्** ५४६ षल—गतौ । कर्तरि क्तः । **दलदिति** । ५४७ दल—विदारणे । शता । **प्रश्वलितान्** । ५४८ श्वल—५४९ श्वल्ल—आशुगमने । श्वलेः कर्तरि क्तः । **प्रश्वाल्लितेति** । श्वल्लेर्णिजन्तात् कर्मणि क्तः । **अखोडेति** । ५५० खोलृ—५५१ खोर्ऋ—गतिप्रतिघाते खोलेरच् । डलयोरभेदाड्डः ॥ ७० ॥

**अखोरधौरत्पतगेन्द्रवाहनं स्वसेविनां तित्सरिषां निराडिनम् ।**
**क्मरन्मनोदुर्गममभ्रमेचकं वभ्रद्वधूविभ्रमवृष्टिमभ्रितम् ॥ ७१ ॥**

अखोरेति **अखोरधौरत्पतगेन्द्रवाहनम्** अखोरमप्रतिहतगति यथा तथा धौरन् चतुरं गच्छन् पतगेन्द्रः गरुडो वाहनं यस्य तं **स्वसेविनां** निजभक्तानां **तित्सरिषां** व्याजकरणेच्छां **निराडिनं** निरसनशीलं **क्मरन्मनोदुर्गमं** क्मरतां कुटिलानां मनसः चेतसो दुर्गमं दुष्प्रापम् **अभ्रमेचकं** मेघश्यामं "कालश्यामलमेचकाः" इत्यमरः। **वभ्रद्वधूविभ्रमवृष्टिमभ्रितं** वभ्रन्तीनां चलन्तीनां वधूनां युवतीनां विभ्रमवृष्टि शृङ्गारजन्यक्रियाविशेषवर्षम् मभ्रितं प्राप्तं श्रीकृष्णं ददर्शेति। तथा **उपजातिः**॥७१॥

**अखोरेति** । खोरेः पचाद्यच् । **धौरदिति** । ५५२ धौर्ऋ—गतिचातुर्ये । शता **तित्सरिषेति** । ५५३ त्सर—छद्मगतौ । सन्नन्तादकारः । **क्मरादिति** । ५५४ क्मर-हूर्च्छने । कौटिल्यं तत् । शता । **अभ्रेति** । ५५५ अभ्र—५५६ वभ्र—५५७—मभ्र—५५८ चर—गत्यर्थाः । अभ्रेः पचाद्यच् । **वभ्रदित्यादि** । वभ्रेः शता । **मभ्रितं** मभ्रेः कर्मणि क्तः ॥ ७२ ॥

**संचारनिष्ठ्यूतनखेन्दुचन्द्रिकं लोके जयन्तं सकलैकजीवनम् ।**
**अपीवितां नाप्यतिमीवितां श्रितं तनुं सुतीवोरुमनीवमध्यमाम् ॥७२॥**

**सञ्चारेति** सञ्चारनिष्ठ्यूतनखेन्दुचन्द्रिकं सञ्चाराय विस्तृत्यै संचारेण वा निष्ठ्यूता: निरसिता नखेन्दूनां नखरूपचन्द्राणां ( रूपकं ) चन्द्रिका कौमुदी येन तं **लोके** संसारे **जयन्तं** सर्वोत्कर्षेण वर्तमानं **सकलैकजीवनं** सकलानां समस्त जनानाम् एकं मुख्यं जीवनं प्राणधारणकारणम् नापि **अपीविताम्** अस्थूलाम् अति कृशामिति भावः। नापि **अतिमीविताम्** अतिस्थूलां,समानामित्यर्थः **सुतीवोरुं** सुतीवौ सम्यक्पीनौ ऊरू जानूपरिभागौ यस्याः ताम् **अनीवमध्यमाम्** अनीवम् अस्थूलं कृशं मध्यमं कटिभागो यस्याः तां **तनुं** शरीरं **श्रितं** प्राप्तं श्रीकृष्णं ददर्शेति । आद्ये पादद्वये इन्द्रवंशा अन्त्ये पादद्वये वंशस्थमिति तयोः **उपजातिः** ॥७२॥

**संचारेति** । चारेर्घञ् । **निष्ठ्यूतेति** । ५५६ ष्ठिवु-निरसने । आस्यान्निःसारणं तत् । 'सुब्धातुष्ठिवुष्वष्कतीनां न' इति सत्वाभावः । कर्मणि क्तः । **जयन्तम्** ५६० जि-जये । जय उत्कर्षप्राप्तिः । **जीवनम्** । ५६१ जीव-प्राणधारणे । ल्युट् । **अपीविताम्-अतिमीविताम्** । ५६२ पीव-५६३ मीव-५६४ तीव-५६५ णीव-स्थौल्ये । पीविमीव्योः कर्तरि क्तः । **सुतीवोरुमनीवेति** तीविनीव्योरिगुपधत्वात्कः॥७२॥

**प्रक्ष्यूतगोपीशुचमूर्णपूतनं तूर्णानसं थूर्णबकादिदानवम् ।**
**दुर्दूर्विषून् धूर्वितुमेव गूर्णं मूर्वन्तमापूर्वितपर्वताध्वरम् ॥ ७३ ॥**

**प्रक्ष्यूतेति** **प्रक्ष्यूतगोपीशुचं** प्रक्ष्यूता निरस्ता गोपीनां बल्लवीनां शुक् पापादिमलजन्या पीडा येन तम् **ऊर्णपूतनम्** ऊर्णा हिंसिता पूतना नाम राक्षसी येन तं **तूर्णानसं** तूर्णं चूर्णीकृतम् अनः शकटं तदाख्योसुरो वा येन तं ' क्लीबेऽनः शकटोऽस्त्री स्यात्''इत्यमरः । **थूर्णबकादिदानवं** थूर्णा हता बकादयो दानवा असुरा येन तं **दुर्दूर्विषून्** हन्तुमिच्छन् दुष्टान् **धूर्वितुमेव** हिंसितुमेव **गूर्णम्** उद्यमं **मूर्वन्तं** बध्नन्तम् **आपूर्वितपर्वताध्वरम्** आपूर्वितः पूरितः पर्वताध्वरो गोवर्धनगिरियज्ञो येन तं श्रीकृष्णं ददर्शेति इन्द्राभिमाननिरासार्थं श्रीकृष्णेन तद्यज्ञविध्वंसं कृत्वा गोवर्धनयज्ञो विधापितः ततः कुपितेन्द्रप्रहितसंवर्तमेघवर्षात् गिरिराजमुत्थाप्य व्रजरक्षा कृतेति पौराणिकी कथा ॥७३॥

**प्रक्ष्यूतेति** । ५६६ क्षिवु-५६७ क्षेवु-निरसने । कर्मणि क्तः (क्ष्यूतगोपीति

पाठे च्छेत्तु—धातुर्बोध्यः) ऊर्णोति। ५६८ उर्वी-५६९ तुर्वी-५७० थुर्वी-५७१ दुर्वि-५७२ धुर्वि-हिंसार्थाः। ऊर्वेः कर्मणि क्तः। "लोपोव्योर्वलि"(६।१।६६) इति वलोपे। (प्राप्ते तं बाधित्वा 'च्छ्वोः'(६।४।१९) इत्यूठि प्राप्ते तद्बाधित्वा राल्लोपः'(६।४।२१) इति वलोपे) 'रदाभ्याम्' (८।२।४२) इति नत्वम् 'र्वोरुपधाया दीर्घइकः'(८।२।७६) तूर्ण-थूर्णेति। तूर्वीथूर्व्योः प्राग्वत् क्तः। दुर्दूर्विषून् दूर्वेः सन्युप्रत्ययः। धूर्वितुं। धुर्वेस्तुमुन्। गूर्वणम्। ५७३ गुर्वी—उद्यमने। ल्युट्। मूर्वन्तम्। ५७४ मुर्वी—बन्धने। शता। अपूर्वितेति। ५७५ पुर्व-५७६ पर्व-५७७ फर्व-५७८ मर्व-पूरणे। अन्त्यो गतौ च भ्रुमे। पूर्वेः कर्मणि क्तः। पर्वतेति। भृमृद्दशि' (उ०) इत्यादिना पर्वेरतच्। ७३॥

अफर्विताकाङ्क्षितमर्वकं सतां मांसादिसंचर्वकदुष्टभर्वकम्।
कर्वद्वधूकेलिरसेन खर्वितं गर्वार्वकं शर्वपरेण सर्वताम्॥ ७४॥

अफर्वतेति सतां सज्जनानाम् अफर्विताकाङ्क्षितमर्वकम् अफर्वितस्यापूर्णस्य आकाङ्क्षितस्य अभिलषितस्य मर्वकं पूरकं मांसादिसंचर्वकदुष्टभर्वकं मंसादेः आमिषमद्यादेः संचर्वकानां भक्षकाणां दुष्टानां दुराचाराणां भर्वकं हिंसकं कर्वद्वधूकेलिरसेन कर्वन्तीनां दृप्यन्तीनां वधूनां नवोढानां केलिरसेन क्रीडानुरागेण खर्वितं दृप्तं मायन्तं शर्वपरेण हिंसातत्परेण चेतसेति शेषः सर्वतां हिंसतां गर्वार्वकम् आभिमानस्य हिंसकं तं श्रीकृष्णं ददर्शेति०॥ आद्ये वंशस्थं ततः पादत्रये इन्द्रवंशेति उपजातिः॥ ७४॥

अफर्वितेति। फर्वेः कर्तरि क्तः। मर्वकम्। मर्वेर्ण्वुल्। संचर्वकम्। ५७९ चर्व-अदने। ण्वुल्। भर्वकम्। ५८० भर्व—हिंसायाम्। ण्वुल्। कर्वदिति। ५८१ कर्व-५८२ खर्व-५८३ गर्व-दर्पे। आद्य ईदिदित्येके। तस्माच्छता। खर्वितम् खर्वेः कर्तरि क्तः। गर्वेति। गर्वेर्घञ्। अर्वकमिति। ५८४ अर्व-५८५ शर्व-५८६ षर्व-हिंसायाम्। अर्वेर्ण्वुल्। शर्वेति। शर्वेर्घञ्। सर्वताम्। सर्वेः शता॥ ७४॥

विश्वेन्वितं सृङ्मधुपिन्वितांङ्गकं मिन्वन्तमुच्चैः कृपयैव निन्वकान्।
हिन्वन्तमाभीरकुलं विलासिनीर्दिन्वन्तमाधिन्वितदेवमण्डलम्॥ ७५॥

विश्वेन्वितमिति विश्वेन्वितं विश्वस्मिन् सर्वस्मिन् इन्वितं व्याप्तं सर्वैः प्रीणितं वा सृङ्मधुपिन्विताङ्गकं स्रङ्मधुना वनमालामाक्षिकेन पिन्वितानि सिक्तानि अङ्गानि अवयवा यस्य तं कृपया दयारसेन एव निन्वकान् सेवकान्

**उच्चैः** श्रेष्ठतया **मिन्वन्तं** सिचन्तम् **आभीरकुलं** गोपगणं "गोपे गोपाल गोसंख्यगोधुगाभीरवल्लवाः" इत्यमरः । **ह्विन्वन्तं** प्रीणयन्तं **विलासिनीः** वेश्याः **दिन्वन्तं** तोषयन्तम् **आधिन्वितदेवमण्डलम्** आधिन्वितं समन्तात् प्रीणितं देवमण्डलं गीर्वाणगणो येन तं श्रीकृष्णं ददर्शेति ॥ **इन्द्रवंशा** "स्यादिन्द्रवंशा ततजैरसंयुतैः" इति लक्षणात् ॥ ७५ ॥

**इन्वितामिति** । ५८७ इवि–व्याप्तौ । प्रीणने–चैके । इदित्वान्नुम् । कर्तरि क्तः । **पिन्वितामिति** । ५८८ पिवि ५८९–मिवि–५९०–णिवि–सेचने । सेवन इत्येके । पिन्वेः कर्मणि क्तः । **मिन्वितम्** । मिन्वेः शता । **निन्वकान्** । निन्वेर्ण्वुल् । **ह्विन्वन्तम्** । **दिन्वन्तम्** । ५९१ ह्विवि-५९२ दिवि-५९३ धिवि-५९४ जिवि-प्रीणनार्थाः । ह्विन्विदिन्व्योः शता । **आधिन्वितेति** । धिन्वेः कर्मणि क्तः ॥ ७५ ॥

**जिन्वन्तमुर्वीं निजरिण्वनैः सतां रण्वन्तमन्तर्भवधन्वपादपम् ।**
**कृण्वन्तमाश्चर्यगतीरमूतिदं जगन्त्यवन्तं त्रिदशोपधावितम् ॥७६॥**

**जिन्वन्तामिति** **निजरिण्वनैः** आत्मीयसंचारैः **उर्वीं** भूमिं "वसुधोर्वी वसुन्धरा" इति भूमिनामस्वमरः । **जिन्वन्तं** प्रीणयन्तं **सतां** सत्पुरुषाणां सुधीनां वा **अन्तः** मनः **रण्वतं** प्राप्नुवन्तं **भवधन्वपादपं** भवधन्वनि संसाररूपमरु(निर्जल)भूमौ "समानौ मरुधन्वानौ" इत्यमरः । पादपं छायाकरं वृक्षम् । **आश्चर्यगतीः** अलौकिक व्यापारान् **कृण्वन्तं** कुर्वन्तम् **अमूतिदम्** अमूतेः बन्धाभावस्य मोक्षस्य दातारं **जगन्ति** भुवनानि "विष्टपं भुवनं जगत्" इत्यमरः **अवन्तं** रक्षन्तं । **त्रिदशोपधावितं** त्रिदशैः सुरैः "त्रिदशा विबुधाः सुराः" इत्यमरः । उपधावितं स्तुतम् सेवार्थम् अहमहमिकयोपगतं वा तं श्रीकृष्णं ददर्शेति । अन्त्ये वंशस्थत्वात् **उपजातिः** ॥ ७६ ॥

**जिन्वन्तम्** । जिन्वेः शता । **रिण्वनैः** । ५९५ रिवि-५९६ रवि-५९७ धवि–गत्यर्थाः । रिण्वेर्ल्युट् । **रण्वन्तम्** । रण्वेः शता । **धन्वेति** । 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः ( उ० ) इति धन्वेः कनिन् । **कृण्वन्तम्** । ५९८ कृवि–हिंसाकरणयोश्च । चाद् गतौ । शता । **अमूतीति** । ५९९ मव बन्धने । क्तिनि 'ज्वरत्वर' ( ६।४।२० ) इत्यूठ् । **अवन्तामिति** । ६०० अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादहनभाववृद्धिषु । 'दानभागवृद्धिषु' इति वा पाठः । अस्माच्छता । मव्यादय उदात्ता जयतिवर्जमुदात्तेतः । **उपधावितम्** ।

६०१ धावु—गतिशुद्ध्योः । शुद्धिः शोधना । जवे च द्रुमे । उपपूर्वत्वात् स्तुत्यर्थता । उदात्तः स्वरितेत् । अस्मात् कर्मणि क्तः ॥ ७६ ॥

ईदृशं भगवन्तं दृष्टवतोऽक्रूरस्य भाग्यमभिनन्दति—

**संधुक्षमाणमरिधिक्षकमूष्मजालं**
**संवृत्यवेदमताशिक्षकभिक्षुगम्यम् ।**
**संक्लेशितस्वकथदक्षणदीक्षितं तं**
**प्रेक्ष्यैष जन्मफलमीषितवान्महात्मा ॥ ७७ ॥**

**संधुक्षमाण**मिति **एष महात्मा** उदारचेताः अक्रूरः **अरिधिक्षकं** शत्रुक्लेशकम् **ऊष्मजालं** प्रतापराशिं **संधुक्षमाणं** संदीपयन्तं **संवृत्यवेदमताशिक्षकभिक्षुगम्यं** संवृत्यं सम्यग्वरणीयं परिग्राह्यमित्यर्थः यत् वेदमतं वैदिकमार्गः तस्य शिक्षकैः उपदेशकैः अभ्यासिभिर्वा भिक्षुकैः गम्यं प्राप्यं **संक्लेशितस्वकथदक्षणदीक्षितं** संक्लेशिता सम्यग्बाधिता स्वकथा निजसुखदुःखादिवार्ता यैः तेषां दक्षणे वर्धनायां दीक्षितं संप्राप्तव्रतं **तं** श्रीकृष्णं **प्रेक्ष्य** दृष्ट्वा **जन्मफलं** जनिकर्तव्यम् **ईषितवान्** संप्राप्तवान् **वसन्ततिलकं** वृत्तम् । "उक्तं वसन्ततिलकं तभजा जगौ गः" इति लक्षणात् ॥ ७७ ॥

**संधुक्षमाण**मिति । ६०२ धुक्ष—६०३ धिक्ष—संदीपनक्लेशनजीवनेषु । घोषान्ता उदात्ता अनुदात्तेतः । धुक्षेः शानच् **धिक्षका**मिति । धिक्षेर्ण्वुल् । **संवृत्ये**ति ... ... त । ६०४ वृक्ष-वरणे । ण्यत् । **शिक्षके**ति । ६०५ शिक्ष—विद्योपादाने ... । ण्वुल् । **भिक्षु** इति । ६०६ भिक्ष—याच्ञायामलाभे लाभे च । क्लेशे व्यक्ता... ... वाचि चेत्येके । 'सनाशंसभिक्ष उः' ३।२।१६८) इति उः । **संक्लेशिते**ति[1] ६०७ क्लेश—अव्यक्तायां वाचि । बाधन इत्येके । उपतापे च द्रुमे । कर्मणि क्त... । **दक्षणे**ति । ६०८ दक्ष—वृद्धौ शीघ्रार्थे च । ल्युट् । **दीक्षिता**मिति । ६०९ ...क्ष—मौण्ड्येज्योपनयननियमव्रतादेशेषु ।

'अस्यार्थो ...संप्राप्तिस्तद्भेदाः कथिता इमे ।
... ... च मौण्ड्यात् क्वचित् क्वापि दीक्षणीयादिकेज्यया ॥ १ ॥
उपनीत्या क्वचित् क्वापि नियमग्रहमात्रतः ।
क्वचिद् गुर्वादिनन्दे ते व्रतमस्त्विति शासनात् ॥ २ ॥
[2]
... ...दीक्षते वाग्मी यजमानस्तु माणवः ।

(टि०)—१ अधः पङ्क्तिस्थोऽयं पाठो नास्ति । २ 'आचार्यो' इति पाठस्त्वाटितो भवेत् ।

तपसे च महानाम्न्यै तत्र ह्यादेशना व्रतम्' ॥ ३ ॥

अस्मादीत्तेः कर्तरि क्तः । प्रेक्ष्येति । ६१० ईक्ष—दर्शने । ल्यप् । ईषितवानिति ६११ ईष—गतिहिंसादर्शनेषु । क्तवतुः ॥ ७७ ॥

**भाषितुं स खलु हर्षवर्षितो गेषितुं समुचितं च नाशकत् ।**
**येषणाप्तहरिजेषसंभ्रमान्नेषितस्मृतिरपेषितो रथात् ॥ ७८ ॥**

**भाषितुमिति हर्षवर्षितः** हर्षेण आनन्दरसेन वर्षितः स्निग्धीभूतः **रथात्** स्यन्दनात् **अपेषितः** अवतीर्णः **सः** अक्रूरः **खलु** ( इति वाक्यालङ्कारे ) **येषणाप्तहरिजेषसंभ्रमात्** येषणाप्तेन प्रयत्नलब्धेन हरिजेषेण श्रीकृष्णप्राप्त्या जातात् संभ्रमात् हर्षविक्षेपात् हेतोः **नेषितस्मृतिः** विगतज्ञानः सन् । **समुचितं** तत्कालोचितं **भाषितुं** वक्तुं **गेषितुम्** अन्वेष्टुं **च न अशकत्** समर्थोऽभूत् **रथोद्धता-** वृत्तम् "रान्नराविह रथोद्धता लगौ" इति लक्षणात् ॥ ७८ ॥

**भषितुम्** । ६१२ भाष—व्यक्तायां वाचि । तुमुन् । **वर्षितः** । ६१३ वर्ष—स्नेहने । स्नेहनं स्निग्धीभावः । कर्तरि क्तः । **गेषितुम्** ६१४ गेषृ—अन्विच्छायाम् । ग्लेषृ—इत्येके । गेषेस्तुमुन् । **येषणेति** ६१५ येषृ—प्रयत्ने । ल्युट् । **जेषेति** । ६१६ जेषृ—६१७ णेषृ—६१८ पेषृ—६१९ प्रेषृ—गतौ । जेषेर्घञ् । **नेषितस्मृतिः** । **अपेषितः** नेष्पेष्योः कर्तरि क्तः ॥ ७८ ॥

**सुप्रेषितान्पथि सरेषवृके सहेषं**
**हेषास्तकासरमदान्द्युतिभासुराङ्गान् ।**
**नासीत्थरासलसितान्नसितेन दाम्ना**
**सूतो ययाम समराभ्यसितान्तुरंगान् ॥ ७९ ॥**

**सुप्रेषितानिति सूतः** सारथिः **सरेषवृके** सरेषाःशब्दाः वृकाः यत्र तस्मिन् "कोक ईहामृगो वृकः" इत्यमरः । **पथि** मार्गे **सहेषं** साश्वशब्दं यथा **सुप्रेषितान्** सम्यक् चरित्वा गतान् **हेषास्तकासरमदान्** हेषयाऽऽत्मशब्देन अस्तो निरस्तः कासराणां महिषाणां "लुलायो महिषो वाहद्विषत्कासरसैरिभाः" इत्यमरः । मदः मत्तता यैस्तान् **नासीत्थरासलसितान्** नासोत्थेन घोणापुटनिर्गतेन रासेनाश्वस्वभावजेन शब्देन लसितान् शोभितान् **तुरंगान्** रथाश्वान् **नसितेन** आवर्तनात्कुटिलेन **दाम्ना** रज्जुमुखेन **ययाम** बबन्ध । **वसन्ततिलकम्** ॥ ७९ ॥

**सुप्रेषितानिति** । प्रेषेः कर्तरि क्तः । **रेषेति** । ६२० रेषृ–६२१ हेषृ–६२२ ह्रेषृ–अव्यक्ते शब्दे । अत्र रेषिर्वृकशब्दे हेषिरश्वशब्दे ह्रेषेति चाश्वशब्दे पठितव्यम् । रेषेर्घञ् । **सह्रेषं–ह्रेषा** हेषेरकारः ह्रेषेश्च । **कासरेति** । ६२३ कासृ–शब्दकुत्सायाम् । रोगजे कुत्सितशब्देऽयं प्रसिद्धः । शब्दमात्रे शोभार्थेऽप्याह भट्टिः । 'मुन्दिकन्दिमन्दिमन्थिमाञ्जिपाञ्जिपिञ्जिपिटिकासिकुटिकुशिकदिवेदिभ्योऽरन्' (उ०) इति भोज्नोक्त्या कासेररन् । **भासुरेति** । ६२४ भासृ–दीप्तौ । 'भञ्जभासमिदो घुरच्' (३।२।१६१) इति भासेर्घुरच् **नासेति** । ६२५ णासृ–६२६ रासृ–शब्दे । नासेरकारः । रासेर्घञ् । **नसितेति** । ६२७ णस कौटिल्ये । कर्तरि क्तः । **अभ्यसितान्** । ६२८ भ्यस–भये । प्राग्वत् क्तः ॥ ७६ ॥

आशंसिताप्तिमुदितो भुवनग्रसिष्णुं
विष्णुं तमेनमसतां ग्लसमानमीहाम् ।
अक्रूर एत्य बहुधागतमंहितांहा
गर्होज्झितोऽपतदगल्ह्यतमे पदाब्जे ॥ ८० ॥

आशंसितेति **गर्होज्झितः** निन्दारहितः **भुवनग्रसिष्णुं** जगददनशीलम् **असतां** दुर्जनानाम् मूर्खाणां वा **ईहां** चेष्टामिच्छां वा **ग्लसमानम्** अदन्तं नाशयन्तमित्यर्थः **तं विष्णुं** श्रीकृष्णम् **एत्य** प्राप्य **बहुधागतमंहितांहाः** बहुधा नानाप्रकारैः गतं नष्टं मंहितं वृद्धम् अंहो दुरितं यस्य सः । "अंहो दुरितदुष्कृतम्" इत्यमरः । **अक्रूरः** दूतः **आशंसिताप्तिमुदितः** आशंसितस्य अभिलषितस्य आप्त्या लाभेन मुदितः हृष्टः सन् **अगल्ह्यतमे** अत्यन्तमगर्हणीये **पदाब्जे** भगवच्चरणारविन्दे **अपतत्** प्रणतोऽभवत् ॥ ८० ॥

**आशंसितेति** । ६२९ आङः शासि–इच्छायाम् नोपधोऽयमित्येके । कर्मणि क्तः । **ग्रसिष्णुः** । ६३० ग्रसु–६३१ ग्लसु–अदने । 'भुवश्च' (३।२।१३८) इति चकारादिष्णुच् । **ग्लसमानमिति** ग्लसेः शानच् । **ईहाम्** । ६३२ ईह–चेष्टायाम् । **बहुधेति** । ६३३ वाहि-६३४ महि–वृद्धौ । 'बंहेर्नलोपश्च' (उ० इत्युप्रत्ययः । 'संख्याया विधार्थे धा' (५।३।४२) इति धाप्रत्ययः । मंहेः कर्तरि क्तः । **अंह** इति । ६३५ अहि–गतौ । औणादिकोऽसुन् । **गर्हेति** । ६३६ गर्ह–६३७ गल्ह–कुत्सायाम् । गर्हेरकारः । **अगल्ह्येति** गल्हेर्ण्यत् ॥ ८० ॥

बर्हप्रबल्हसमलंकृतिरालिलिङ्ग
प्रोत्थाप्य बर्हकनिबल्हद्रुतं तमीशः ।

**प्लीहायितासुरभरक्षतिवेहितोर्वी-**
**भैषज्यजेहपरया निजबाह्ययैव ॥ ८१ ॥**

**बर्ह-प्रबल्हेति बर्हप्रबल्हसमलङ्कृतिः** बर्हप्रबल्हेन मयूरपिच्छप्रधानेन समलङ्कृतिः भूषणं यस्य सः **ईशः** श्रीकृष्णः **बर्हकनिबल्हद्रुतं** बर्हकाणां हिंसकानां निबल्हेन हिंसया द्रुतम् उपतप्तम् **तम्** अक्रूरं **प्रोत्थाप्य** ऊर्ध्वावस्थितं कृत्वा **प्लीहायितासुरभरक्षतिवेहितोर्वी–भैषज्यजेहपरया** प्लीहायितानाम् उदरगुल्मरोगवदाचरताम् असुराणां भरक्षतौ भारनाशे वेहितायाः सप्रयत्नाया उर्व्याः क्षितेः "वसुधोर्वी वसुन्धरा" इति भूमिनामस्वमरः । भैषज्यजेहे चिकित्सारूपप्रयत्ने परया तत्परया **निजबाह्या** स्वभुजेन **एव आलिलिङ्ग** आश्लेषमकरोत् । **वसन्ततिलकम्** ॥ ८१ ॥

**बर्ह-प्रबल्हेति**।६३८बर्ह-६३९बल्ह-प्राधान्ये। द्वयोः पचाद्यच् । **बर्हक-निबल्हेति** । ६४० बर्ह–६४१ बल्ह–परिभाषणहिंसाच्छादनेषु दाने च द्रुमे । परिभाषणमत्र वञ्चनवादः । बर्हेर्ण्वुल् । बल्हेर्घञ् । **प्लीहायितेति** । ६४२ प्लिह–गतौ । 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्' ( उ० ) इति प्लिहेः कनिनि दीर्घो निपातितः । **वेहितेति** । ६४३ वेह–६४४ जेह–६४५ वाह–प्रयत्ने । वेह–इत्येके । जेहिर्गतौ च । वेहेः कर्तरि क्तः । **जेहेति** जेहेर्घञ् । **बाह्ययेति** बाहेरचि टाप् ॥ ८१ ॥

**द्राहितः शुभपथप्रकाशने सस्वजेऽथ तमनूह्यवैभवः ।**
**गाढमैत्ररसगृह्यमाणधीर्भूषणग्लहनघुंषितो बलः ॥ ८२ ॥**

**द्राहित** इति **शुभपथप्रकाशने** शुभपथस्य सदाचारसरण्याः प्रकाशने प्रवर्तने **द्राहितः** क्षीणनिद्रः उद्बुद्धः **अनूह्यवैभवः** अनूह्यमप्रतर्क्यं वैभवमैश्वर्यं यस्य सः । **गाढमैत्ररसगृह्यमाणधीः** गाढेन अतिविलोडितेन स्निग्धेनेति यावत् मैत्ररसेन सौहार्दरूपजलाऽऽल्हादेन गृह्यमाणा वशीक्रियमाणा धीः बुद्धिर्यस्य सः । **भूषणग्लहनघुंषितः** भूषणानाम् अलङ्काराणां ग्लहनेन धारणेन घुंषितः कृतकान्तिः **बलः** बलभद्रः (कृष्णज्येष्ठभ्राता रोहिणीपुत्रः) **तम्** अक्रूरं **सस्वजे** आलिङ्गितवान् । **रथोद्धता** छन्दः ॥ ८२ ॥

**द्राहितेति** । ६४६ द्राह–निद्राक्षये । निक्षेपे–चेत्येके । कर्तरि क्तः । **प्रकाशनेति**

(टि०)—१ जन्येत्यादिः ।

६४७ काशृ—दीप्तौ। ल्युट्। **ऊहेति**। ६४८ ऊह—वितर्के। ण्यत्। **गाढेति**। ६४९ गाहू—विलोडने। चोभणं तत्। लक्षणया जलाद्यवतरणेऽपि भावे क्तः। **गृह्यमाणेति**। ६५० गृहू—ग्रहणे। ६५१ ग्लहू—च। गृहेः कर्मणि शानच्। **ग्लहनेति**। ग्लहेर्ल्युट्। **घुंषितेति**। ६५२ घुषि—कान्तिकरणे। घर्षी—इत्येके। घषेत्यन्ये। घुक्षादय उदात्ता अनुदात्तेतः। कर्तरि क्तः॥ ८२॥

**घोषद्भूषः पङ्कजाक्षस्ततक्षे पापश्रेणीतक्षणे त्वष्टृधर्मा।**
**उक्षन्नेनं मन्दहासेन रक्षन्विश्वन्निक्षन्वल्लवीस्तृक्षिताघाः॥ ८३॥**

**घोषद्भूष इति घोषद्भूषः** घोषन्त्यः शब्दायमाना भूषा यस्य सः। **पापश्रेणीतक्षणे** पापश्रेण्या अघपङ्क्तयाः तक्षणे तनूकरणे **त्वष्टृधर्मा** त्वष्टारिव देवतक्ष इव धर्मो व्यापारो यस्य सः। **पङ्कजाक्षः** कमललोचनो भगवान् **एनम्** अक्रूरं **मन्दहासेन** स्मितरसेन **उक्षन्** सिञ्चन् **विश्वं** जगत् **रक्षन्** पालयन् **तृक्षिताघाः** विगतपापाः **वल्लवीः निक्षन्** चुम्बन् **तम्** अक्रूरम् **ऊचे** बभाषे वक्ष्यमाणं वचः इति शेषः **शालिनी** छन्दः "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति लक्षणात्॥ ८३॥

**घोषदिति**। ६५३ घुषिर्—अविशब्दने। ऋदित्येके। अर्हान्ता उदात्तेतः शंषिवर्जमनुदात्ताः। आविष्कृताभिप्रायं वचनं विशब्दनम्। तद्व्यतिरिक्तेऽर्थेऽयं धातुः। स चार्थः शब्दमात्रं वा यथाप्रयोगमन्यो वा। अस्माच्छता। **पङ्कजाक्षः**। ६५४ अक्षू-व्याप्तौ। संघाते च द्रुमे। अस्मादौणादिकेनन्तादक्षिशब्दात् समासान्तः षच्। **तक्षणे**। ६५५ तक्षू-६५६ त्वक्षू—तनूकरणे। तक्षेर्ल्युट्। **त्वष्टृ**। 'नप्तृनेष्टृत्वष्टृ–' इत्यादिना तृन्नन्तो निपातितः। **उक्षन्**। ६५७ उक्ष—सेचने। **रक्षन्**। ६५८ रक्ष—पालने। **निक्षन्**। ६५९ णिक्ष—चुम्बने। त्रिभ्यः शता। **तृक्षितेति**। ६६० तृक्ष—६६१ ष्टृक्ष—६६२ णक्ष—गतौ। तृक्षेः कर्तरि क्तः॥ ८३॥

**आस्तृक्षितोऽद्य वितनोषि महत्सुखं नो**
**नक्षत्रराडिव परं विकलङ्कवक्षाः।**
**संमृक्षितोरुगुलमाक्षिकहृद्यवाच-**
**स्तक्षन्ति नाम शुचमिष्टकराः सपक्षाः॥ ८४॥**

**आस्तृक्षित** इति हे अक्रूर! **विकलङ्कवक्षाः** विकलङ्कं निर्दोषं वक्षो हृदयं यस्य सः **आस्तृ**

**क्षितः** आगतस्त्वं **परं** केवलं सः **अद्य नक्षत्रराट्** चन्द्र **इव नो**ऽस्माकं **महत्** वृहत् **सुखम्** आनन्दं **वितनोषि** करोषि ( त्वं विकलङ्कवक्षाः चन्द्रस्तु सकलङ्कवक्षाः इति व्यतिरेकः उपमा चादौ ) युक्तमयमर्थः **संमृक्षितोरुगुलमाक्षिकहृद्यवाचः** संमृक्षितः सङ्घातीकृतो य उरुः श्रेष्ठः शोधित इति यावत् गुलो ( रलयोर्डलयोरभेदात् ) गुडोऽर्थात् सितोपलः माक्षिकं मधु च तद्वत् हृद्या मधुरा वाचो गिरो येषां ते **इष्टकराः** प्रियङ्कराः **सपक्षाः** समानाः पक्षाः सहाया येषां ते बन्धव इत्यर्थः **शुचं** शोकं **तक्षन्ति** तनूकुर्वन्ति **नाम हि** ( इत्यर्थान्तरन्यासः व्यतिरेकोपमाभ्यां संकरितः ) **वसन्ततिलकम्** ॥ ८४ ॥

**आस्तृक्षित** इति । स्तृक्षेः कर्तरि क्तः । **नक्षत्रेति** । 'अमिनक्षियजि-(उ०)' इत्यादिना नक्षेरत्रन् । **वक्ष** इति । ६६३ वक्ष-रोषे । संघात इत्येके । संघातीभवन्त्यस्थीन्यत्रेति असुन् । **संमृक्षेति** । ६६४ मृक्ष-संघाते । म्रक्ष-इत्येके । मृक्षेः कर्मणि क्तः । **माक्षिकेति** । 'पिपीलिकेतिकहादिकमक्षिकाद्यप् ( उ० ) इति भोजेन[1] निपातिता मक्षिका तस्मात् 'तेन कृतम्' इत्यर्थे अण् । **तक्षन्ति** । ६६५ तक्ष-त्वचने । तच्च संवरणं त्वचो ग्रहणं वा । ग्रहणमात्रे च क्रमे । पक्षेत्यप्येके । तक्षेर्लट् । **पक्षेति** । पक्षेरच् ॥ ८४ ॥

**सूर्क्ष्य ! त्वदीक्षा चिरकाङ्क्षिता नो वाङ्क्षाम्यमाङ्क्ष्यान्न तु नीचलोकान् ।**
**द्राक्षां जनो वाञ्छति नो फलानि ध्राङ्क्षद्ध्वाङ्क्षविचूषितानि ॥ ८५ ॥**

**सूर्क्ष्येति** हे **सूर्क्ष्य !** आदरणीय ! अक्रूर ! **त्वदीक्षा** भवद्दर्शनं **नः** अस्माकं **चिरकाङ्क्षिता** बहुकालतः वाञ्छिताऽऽसीत् । अहम् **अमाङ्क्ष्यान्** काङ्क्षितुमयोग्यान् **नीचलोकान्** कुपुरुषान् **नतु** पुनः **वाङ्क्षामि** न इच्छामि द्रष्टुमपीति शेषः । यतः **जनः** लोकोऽपि **द्राक्षां** मृद्वीकां "मृद्वीका गोस्तनी द्राक्षा" इत्यमरः । **वाञ्छति** ईहते प्राप्तुम् । **ध्राङ्क्षद्ध्वाङ्क्षविचूषितानि** ध्राङ्क्षद्भिः घोरं वाशमानैः शब्दायमानैः ध्वाङ्क्षैः वायसैः " ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि " इत्यमरः । विचूषितानि पीतरसानि **फलानि** आम्रादीनि तु **नो** नैव वाञ्छति ॥ **इन्द्रवज्रा** वृत्तम् । "स्यादिन्द्रवज्रा यदि तौ जगौ गः इति लक्षणात् ॥ ८५ ॥

**सूर्क्ष्येति** । ६६६ सूर्क्ष्य-आदरणे । ण्यत् **काङ्क्षितेति** । ६६७ काक्षि-६६८ वाक्षि-६६९ माक्षि-काङ्क्षायाम् । काङ्क्षेः कर्मणि क्तः । वाङ्क्षेर्लट् । माङ्क्षेर्ण्यत् । **द्राक्षामिति** । ६७० द्राक्षि-६७१ ध्राक्षि-६७२ ध्वाक्षि-घोरवाशिते च । चात्

(टि०) १ 'मक्ष—रोषे सेवने च' इत्यतः क्वुनि-ण्वुलि वेति भानुदीक्षितः ।

काङ्क्षायाम् । ध्राङ्क्षेराकारे ध्राक्षा । यवादौ निपातनान्नलोपः । ध्राङ्क्षदिति । ध्राङ्क्षेः शता । ध्वाङ्क्षेति । ध्वाङ्क्षेरच् । विचूषितानि । ६७३ चूष—पाने । कर्मणि क्तः ॥ ८५ ॥

**तूषं तनोषि कमलस्य यथैव पूषा**
**खेदं च मूषसि कृपारसरूषितात्मन् ! ।**
**शूषन्दृशोरमृतयूषमजूषकस्त्वं**
**भूषस्यनूषमतिरीषभुजां प्रियः क्ष्माम् ॥ ८६ ॥**

तूषमिति हे **कृपारसरूषितात्मन्** ! कृपातिशयेन रूषितो भूषित आत्मा मनो यस्य तादृश ! अक्रूर ! **अयूषकः** अहिंसकः **अनूषमतिः** अनूषाऽन्येषामपीडा करा मतिः बुद्धिर्यस्य सः **ईषभुजाम्** उञ्छवृत्तीनां तपस्विनां **प्रियः त्वं दृशोः** नेत्रयोः पात्रभूतयोः **अमृतयूषं** घनीभूतामृतरसं **शूषन्** उत्पादयन् सन् **यथा** येन प्रकारेण **एव कमलस्य** पद्मस्य **पूषा** सूर्यः " मिहिरारुणपूषणः " इति सूर्यनामस्वमरः । तथा **तूषं** सन्तोषं **तनोषि** जनस्य हृदि विस्तारयासि । **खेदं** क्लेशं **मूषसि** हरसि । **क्ष्मां** पृथिवीं "पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही" इत्यमरः । **भूषसि** अलङ्करोषि **च** । **वसन्ततिलकम्** ॥ ८६ ॥

**तूषमिति** । ६७४ तूष—तुष्टौ । घञ् । **पूषेति** । ६७५ पूष—वृद्धौ । 'श्वन्नुक्षन्—' (उ०) इत्यादिना कनिनि निपातितः । **मूषसि** । ६७६ मूष—स्तेये लट् । **रूषितेति** । ६७७ रूष—६७८ लूख—भूषायाम् । रूष—आलेपन इत्येके । रूषेः कर्मणि क्तः । **शूषन्निति** । ६७९ शूष—प्रसवे । स चाभ्यनुज्ञा । 'या पीडां श्रवसापि सौति महतीमौत्सुक्यपीडासिकाम्' इत्यत्र सौतेरुपादानार्थप्रयोगात् उपादानमपि प्रसवः अस्माच्छता । **यूषमिति** ६८० यूष—हिंसायाम् । ६८१ जूष च । यूष्यते हिंस्यते पाकेनेति घञि यूषो घनीभूतः क्षीरादिः । **अजूषकः** । जूषेर्ण्वुल् । **भूषसि** । ६८२ भूष—अलंकारे । लट् । **अनूषेति** । ६८३ ऊष—रुजायाम् । पचाद्यचि नञ्समासः । **ईषेति** । ६८४ ईष—उञ्छे । घञ् ॥ ८६ ॥

**इत्युक्तः सुरकाषिखाषिणमसावूचे जगच्छेषका-**
**न्नित्यं ते जषते झषादिवपुषे रक्षश्चमूशाषिणे ।**

(टि०)—१ षु—प्रसवैश्वर्ययोः (अ० प० अ०) इत्यस्य रूपम् ।

**केश्यादीन्वषणोत्सुकान्प्रमषते भूयोऽपि रोषिष्यते**
**रेषोऽन्यान्भषतो नमोऽस्तु कमलाकोष्णस्तनं जोषते ॥ ८७ ॥**

**इत्युक्त** इति इति एवम् **उक्तः** कथितः **असौ** अक्रूरः **सुरकाषिखाषिणं** सुरकाषिणः देवहिंसाशीलान् असुरान् खषितुं शीलं यस्य तं श्रीकृष्णम् **ऊचे** उक्तवान् । यत् **जगच्छेषकान्** विश्वस्य हिंसकान् राक्षसान् **नित्यं** सदा **जषते** हिंसते **रक्षश्चमूशाषिणे** रक्षश्चम्वा दैत्यसेनायाः शाषिणे हननशीलाय तया **वषणोत्सुकान्** वषणे हिंसने उत्सुकान् सोत्साहान् **केश्यादीन्** केशिमुखान् राक्षसान् **प्रमखते** हिंसते **अन्यान्** परान् सज्जनान् **भषतः** श्ववत् शब्दं कुर्वतः पिशुनोक्तिं वा कुर्वतः **रेषो** रेषन्ति हिंसतीति ते तान् कंसादीन् **भूयोऽपि** पुनरपि **रोषिष्यते** हनिष्यते **कमलाकोष्णस्तनं** कमलायाः श्रियाः "कमला श्रीर्हरिप्रिया" इत्यमरः । कोष्णस्तनम् ईषदुष्णं कुचं **जोषते** सेवमानाय **झषादिवपुषे** मत्स्यकच्छपादिशरीरधारिणे **ते** तुभ्यं **नमः** प्रणामः **अस्तु** इति॥**शार्दूलविक्रीडितं** छन्दः "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" इति लक्षणात् ॥ ८७ ॥

**सुरकाषिखाषिणमिति** । ६८५ कष--६८६ खष-६८७--शिष-६८८ जष-६८९ झष--६९० शष--६९१-वष-६९२ मष-६९३ रुष-६९४ रिष--हिंसार्थाः । काषिखष्योर्णिनिः । **शेषकान्** शिषेर्ण्वुल् । **जषते** जषेः शता । **झषेति** झषधन्वर्थे कः । **शाषिणे** शाषेर्णिनिः । **वषणेति** वषेर्ल्युट् । **प्रमषते** मषेः शता । **रोषिष्यते** रुषेर्लृटि शता । **रेषः** रिषेः 'अन्येभ्योऽपि दृश्यते' ( ३।३।१३० ) इति विच् । **भषतः** । ६९५ भष-भर्त्सने । तच्चेह श्वरवः । पिशुनोक्तौ च द्रष्टे । शता । **उष्णेति** । ६९६ उष--दाहे । 'इणसिञ्जिदीङुष्यविभ्यो नक्' (उ०) इति नक् । **जेषते** । ६९७ जिषु--६९८ विषु--६९९ मिषु--सेवने । जिषेः शता ॥ ८७ ॥

**वेषैर्मेष्यतमैः प्रपोषदशुभप्रश्लेषिभिः श्लेषति**
**प्रोष्यान्दुष्टजनान्कृपामृतपृषद्वर्षी भवान्दानवान् ।**
**सामर्षं परधर्षिणोऽपि हृषितास्त्वां नोपयान्त्याहवे**
**तोसहासविहीनशङ्कजनितह्रासाद्रसाद्विक्तदम् ॥ ८८ ॥**

**वेषैरिति कृपामृतपृषद्वर्षी** कृपा दयैव अमृतं पीयूषं तस्य पृषन्ति बिन्दून् वर्षति तच्छीलः "पृषन्ति बिन्दुपृषताः" इत्यमरः । **भवान् प्रोष्यान्** दग्धव्यान् **दुष्टजनान्** खलान्

दग्धाः जना यैस्तान् **दानवान्** असुरान् **प्रपोषदशुभप्रश्रेषिभिः** प्रपोषत् वर्द्धमानम् अशुभं दुष्कृतं प्रश्रेषन्ति दहन्ति तच्छीलाः तैः **मेप्यतमैः** सर्वेरुत्कर्षेणोपास्यैः **वेषैः** मत्स्यादिस्वरूपैः **श्लेषति** भस्मीकरोति ( शेषत्वात्प्रथमपुरुषः ) **सामर्षं** सक्रोधं यथा तथा **परघर्षिणोऽपि** परानरीन् घर्षितुं शीलं येषां तेऽपि **हृषिताः** अलीकबुद्धयः सन्तः **आहवे** संग्रामे " संग्रामा यागमाहवाः " इत्यमरः । **तोसह्रासविहीनशङ्खजनितह्रासात्** तोसस्य शब्दस्य ह्रसेनाल्पतया विहीनो विरहितः ( अर्थान्महाशब्दयुतः यः शङ्खः कम्बुः तेन जनितात् उत्पादितात् ह्रासात् शब्दात् हेतोः **रसद्दिक्तटं** रसन्तः शब्दायमानाः दिक्तटाः आशाप्रान्ता यस्य तं तादृशं **त्वां न** उपयान्ति **प्रप्नुवन्ति** ॥ **शार्दूलविक्रीडितम्** ॥ ८८ ॥

**वेषैरि**ति । विषेर्घञ् । **मेप्येति** । मिषेर्ण्यत् । **प्रपोषदि**ति ७०० पृष--पुष्टौ शता । **प्रश्रेषिभिः** । ७०१ श्रिषु—७०२ श्लिषु—७०३ प्रुषु- ७०४ प्लुषु—दाहे ! श्रिषेर्णिनिः । **श्लेषति** श्लिषः लट् । **प्रोष्यान्** प्रुषेर्ण्यत् । प्लुष्टेति प्लुषः कर्मणि क्तः । **पृषदि**ति । ७०५ पृषु—७०६ वृषु—७०७ मृषु—सेचने । आद्यौ हिंसाक्लेशयोश्च । मृषु—सहने च । मृषु--हिंसाक्लेशदैन्येष्वित्येके । पृषेः 'वर्तमाने पृषद्बृहत्' ( उ० ) इत्यतो निपातितः । **वर्षी** वृषर्णिनिः । **सामर्षं** मृषेर्घञ् । **परघर्षिणः** । ७०८ घृषु-संघर्षे । णिनिः । **हृषिता** । ७०९ हृषु—अलीके । तुष्टौ च द्रुमे । कर्तरि क्तः । 'हृषेर्लोमसु' ७।२।२९) इतीड्विकल्पः । **तोस-ह्रासे**ति । ७१० तुस-७११ ह्रस—७१२ ह्लस—७१३ रस—शब्दे । ह्रसिरल्पीभावेऽपि । तुसिह्रस्योर्घञ् । **ह्रासादि**ति ह्लासेरपि घञ् । **रसदि**ति रसेः शता ॥

**इत्यादिवादिनमजो लसितस्मितस्तं,**
**संवार्य धर्मपथघस्मरदुर्जनोज्जः ।**
**जीमूतचर्चिरवझर्झरवाद्यहृद्यं,**
**तेनैव चानुपिसितो निलयं पिपेस ॥ ८९ ॥**

**इत्यादीति** **धर्मपथघस्मरदुर्जनोज्जः** धर्मपथस्य सुकृतमार्गस्य घस्मराः नाशकाः ये दुर्जनाः वृथाजल्पहासपूज्यनिन्दापैशुन्यादिपराः पुरुषाः तानुज्जसति नाशयतीति सः **अजः** श्रीकृष्णः **लसितस्मितः** लसितं प्रकाशितं स्मितं मन्दहासो येन स तादृशः सन् **इत्यादिवादिनं** जगच्छ्रेषकानित्यादि ( स० ४ श्लो० ८७ )

स्तुतिवाक्यानि पठन्तं **तम् अक्रूरं संवार्य** महात्मन् ! अलं स्तुत्या वृथेति निवर्त्य **तेन अक्रूरेण सह एव अनुपिसितः** अनुगतश्च सन् **जीमूतचर्चिरवझर्झरवाद्यहृद्यं** जीमूतान् घनान् "घनजीमूत-" इत्यमरः चर्चितुं नाशयितुं शीलं यस्य स जीमूतचर्ची तादृशः रवः शब्दः यस्य तेन झर्झरवाद्येन हृद्यं मनोहरं **निलयं** स्वगृहं **पिपेस** गतवान । अत्राग्रिमे च **वसन्ततिलकम्** ॥ ८९ ॥

**लसितेति** । ७१४ लस–श्लेषणक्रीडनयोः । शोभायां प्रसिद्धः । कर्तरि क्तः । **घस्मरेति** । ७१५ घस्लृ–अदने । 'सृघस्यदः क्मरच्' (३।२।१६०) इति क्मरच् । **उज्जः** । ७१६ जर्स–७१७ चर्च–७१८ झर्झ–परिभाषणहिंसातर्जनेषु । जर्सेः क्विपि 'रात्सस्य' (८।२।२४) इति संयोगान्तलापः । अत्वसन्तस्य' (६।४ १४) इति दीर्घस्तु धातुत्वान्न । **जीमूतचर्चि**। चर्चेः णिनिः । **झर्झरेति** झर्झेररः । **अनुपिसितः** ७१९ पिसृ-७२० पेसृ-गतौ । पिशृ-पेशृ-इत्येके । पिसेः कर्मणि क्तः । **पिपेस** पेसेर्लिट् । ८९॥

भूषापिशङ्गरुचिपेशलमात्ममित्र-,
मक्रूरमागतमवेक्ष्य हसन्न नन्दः ।
संभाव्य साधु ससुतो निशि पर्यपृच्छ-
न्मेशोद्धुतारिमशकस्य नृपस्य वृत्तम् ॥ ९० ॥

**भूषेति ससुतः** पुत्रसहितः **स नन्दः** तदाख्यो गोपग्रामणीः **हसन्** आनन्दहास युक्तः सन् **भूषापिशङ्गरुचिपेशलं** भूषाणाम् अलङ्काराणां पिशङ्गया कपिलया "कपिलः पिङ्ग पिशङ्गौ" इत्यमरः । रुच्या प्रभया "रुग्ः प्रभा रुग्रुचिस्त्वड्भा" इत्यमरः । पेशलं मनोहरं **आगतं** समेतम् **अक्रूरं** तदाख्यम् **आत्ममित्रं** निजसुहृदम् **अवेक्ष्य** विलोक्य । **साधु** श्रेष्ठतया **सम्भाव्य** सत्कृत्य **निशि** रात्रौ **मेशोद्धुतारिमशकस्य** मेशेन कोपेन शब्देन च उद्धुताः त्यक्ता भस्मीकृतावा अरयः शत्रवः एव मशकाः क्षुद्रजन्तुकीटाः येन तस्य **नृपस्य** राज्ञः कंसस्य **वृत्तम्** उदन्तं **पर्यपृच्छत्** पृष्टवान् ॥ ९० ॥

**पिशङ्गेति** 'पतेरङ्गच् पक्षिणि' 'विड ड्रादिभ्यः कित्' (उ०) इत्यत्र 'कुडिपि-डिमृदिपिशिभ्यः कित्' (उ०) इति भोजोक्तः पिशेरङ्गच् । **पेशलमिति** औणादिक कलप्रत्यये वाहुलकादुणः **हसन्निति** ७२१ हसे-हसने शता । **निशीति** ७२२ णिश–समाधौ । अधिकरणे संपदादि क्विप् । **मेशेति** ७२३ मिश--७२४ मश शब्दे रोषकृते च

शब्दकोपयोरिति द्रुमोक्त्या रोषकृतं रोष एव। मिशेश्रेणु। मशकस्य 'क्वुन्शिल्पिसंज्ञयोः' इति इति क्वुन् ॥ ६० ॥

**सोऽप्यूचे शवतां गतस्य शशिवंशोत्थस्य भोजेशितु-**
**र्वृत्तं प्रस्तुतमत्र शस्त्रनिलये शस्तं च चापोत्सवम् ।**
**चाहेनामहितस्य चास्य निधनोद्योगं रहस्यूचिवा-**
**न्गन्तव्यं खलु रंहसेति च दृढामाज्ञां प्रभोरभ्यधात् ॥ ६१ ॥**

**सोपीति सः** नन्देन पृष्टः अक्रूरः **अपि शवतां** प्राणवियुक्तशरीरत्वं **गतस्य** प्राप्तस्य मृतप्रायस्येति भावः **शशिवंशोत्थस्य** शशिनश्चन्द्रस्य वंशे उत्तिष्ठेत उत्पद्यते इति सः तस्य **भोजेशितुः** भोजान् ईष्टे इति स तस्य भोजराजस्य कंसस्य **वृत्तं** तत्तदुराचरितम् **अत्र** अस्मिन्नेव वृत्ते **प्रस्तुतं** प्रसक्तं **शस्तं** श्रेयांसं **चापोत्सवं** धनुरुत्थापनपारितोषिकप्रदानोद्भवं **च** ऊचे उक्तवान् । **चाहेन** दम्भेन **अमहितस्य** अपूजितस्य निन्दितस्येति यावत् । तथा **रहसि** एकान्ते **अस्य** कंसस्य राज्ञः **निधनोद्योग** निधने मरणे "मृत्युर्मरणं निधनोऽस्त्रियाम्" इत्यमरः। उद्योगम् उद्यमं **च ऊचिवान्** अकथयत् । **रंहसा** वेगेन अतिशीघ्रमित्यर्थः **गन्तव्यं** प्रस्थातव्यम् । **खलु**(इति वाक्यालङ्कारे)**इति** एवंरूपां **दृढाम्** अविचाल्यां **प्रभोः** कंसस्य राज्ञः **आज्ञाम्** आदेशं **च अभ्यधात्** कथितवान् ॥ अत्राग्रिमे च **शार्दूलविक्रीडितम्** ॥६१॥

**शवतामिति** । ७२५ शव–गतौ । अजन्तात्तल् । **शशीति** । ७२६ शश–प्लुतगतौ । अजन्तान्मत्वर्थीय इनिः । **शस्त्रेति** । ७२७ शसु–हिंसायाम् । 'सर्वधातुभ्यः ष्ट्रन्' इत्यौणादिकः ष्ट्रन् । **शस्तम्** । ७२८ शंसु–स्तुतौ । हिंसायामित्येके । कर्मणि क्तः । 'अनिदिताम्' (६।४।२४) इति नलोपः । **चाहेन** । ७२९ चह–परिकल्कने । घञ् । **अमहितः** । ७३० मह–पूजायाम् । कर्मणि क्तः । **रहसि** । ७३१ रह–त्यागे । **रंहसा** । ७३२ रहि-गतौ । द्वयोरसुन् । **दृढाम्** । ७३३ दृह–७३४ दृहि–७३५ वृह–७३६ वृहि–वृद्धौ । वृहिर्–इत्येके वृहि–शब्दे च । स च गजशब्दः । दृहेः 'दृढः स्थूलबलयोः' ( ७।२।२० ) इति निपातितः क्तः ।

**तच्छ्रुत्वा परिबृंहितादरमसौ नन्दो वृहद्भोजनै-**
**र्यानैरप्युपबृंहितो विहितवान्प्रातः प्रयातुं मनः ।**
**गोविन्दस्तुहिनांशुरम्यवदनः कंसं जगद्दोहिनं**
**प्रोहिष्यञ्जगदर्हणीयमहिमा मोदेन निन्ये निशाम् ॥ ६२ ॥**

तदिति **असौ** सः **नन्दो** व्रजग्रामणीः **परिदृंहितादरं** परिदृंहितो वृद्धः आदरो यस्मिन्कर्मणि तद्यथा तथा **तत्** अक्रूरद्वाराप्राप्तमाज्ञावचः **श्रुत्वा** निशम्य **बृहद्भोजनैः** महद्भिर्भोज्यद्रव्यैः **यानैः** शकटाश्वतरादिभिः वाहनैः **अपि उपबृंहितः** वृद्धः परिपूर्णः इत्यर्थः सन् **प्रातः** काले उषसि **मनः** चित्तं **प्रयातुं** मधुरापुरीं गन्तुं सज्जमिति शेषः **विहितवान्** कृतवान्। **तुहिनांशुरम्यवदनः** तुहिनांशुश्चन्द्रस्तद्वत् रम्यं कान्तं वदनं मुखं यस्य सः **जगदर्हणीयमहिमा** जगताम् अर्हणीया पूज्या श्लाघ्या वा महिमा महत्त्वं यस्य स **गोविन्दः** श्रीकृष्णो **जगद्दोहिनं** जगत् विश्वं दोहितुं मर्दयितुं शीलं यस्य तं **कंसं प्रोहिष्यन्** व्यापादयिष्यन् सन् **मोदेन** हर्षेण **निशां** रात्रीं **निन्ये** निर्गमयामास॥६२॥

**परिदृंहिते**ति। दृंहेः कर्तरि क्तः। **बृहदि**ति। बृहेः 'वर्तमाने पृषद्बृहद्'(उ०) इति बृहेरतिर्निपातितः। **उपबृंहित** इति। बृहेः कर्तरि क्तः। **तुहिने**ति। ७३७ तुहिर्-७३८ दुहिर्-७३९ उहिर्-अर्दने। 'वेपितुह्योः' (उ०) इति तुहेरिनच्। **जगद्दोहिनमि**ति। दुहिरो णिनिः। **प्रोहिष्यन्नि**ति। उहिरो लृटः शता। **अर्हणीये**ति। ७४० अर्ह-पूजायाम्। योग्यत्वेऽपि। अनीयर्। घुषादय उदात्तेतः शिषिवर्जमुदात्ताः॥ ६२॥

**इति** श्रीवासुदेवपरिशिष्टीभूते **धातुकाव्ये** अभिधेयोक्ति-कंसाज्ञाप्तिहृष्टाक्रूरकर्तृककंसाज्ञादिकर्मविमर्श-यमुनोत्तरण-वृन्दावनवर्णन-कृष्णपादाङ्कपात-वर्णितगोपगृहेक्षण-सन्ध्याकालिकनन्दग्रामप्रवेश-गोपेक्षिताऽक्रूरकर्तृकश्रीकृष्णेक्षण-स्तब्धता-ऽश्वबन्धन-कृष्णाङ्घ्रिप्रणति-बलभद्रालिङ्गन-श्रीकृष्णपृष्टस्तुताक्रूरकर्तृकस्तुत्युत्तरगृहप्राप्ति-नन्दसङ्गम-कंसाज्ञाश्रावण-यानोद्योग-कंसवधोद्यतश्रीकृष्णीयमोदपूर्वकनिशानयनं नाम **प्रथमः सर्गः**



एवमक्रूरस्य व्रजप्राप्तिरूपं पूर्वदिनवृत्तान्तमुक्त्वा द्वितियदिनवृत्तान्तं वक्तुमारभते—

**प्रद्योतनस्योदयमाप्य गोपाः श्वेतांशुकोन्मेदुरचारुवेषाः ।**
**अस्विन्नरुग्घोटकरुट्यमान-मार्गा जवेनालुटिता निरीयुः ॥ १ ॥**

**प्रद्योतनस्ये**ति **श्वेतांशुकोन्मेदुरचारुवेषाः** श्वेतवर्णैः वस्त्रैः उन्मेदुरः स्निग्धः "सान्द्रस्निग्धस्तु मेदुरः" इत्यमरः। चारुः शोभनः वेष आकल्पो येषान्ते। **अस्विन्नरुग्घोटकरुट्यमानमार्गाः** अस्विन्ना अमुक्ता न गता रुक् भा "रुग्रुचिस्त्विड्भाः। भाच्छविद्युतिदीप्तयः" इत्यमरः। येषां तैः। घोटकैः अश्वैः "घोटके वीतितुरगतुरंगाश्च तुरंगमाः" इत्यमरः। रुट्यमानः प्रतिहन्यमानो भिद्यमानो मार्गः पन्था येषां ते **गोपाः** गोपालकाः **जवेन** वेगेन **अलुटिता** अप्रतिहताः सन्तः **प्रद्योतनस्य** सूर्यस्य "प्रद्योतनो दिनमणिः" इति सूर्यनामस्वमरः। **उदयम्** आलोकम् **आप्य** प्राप्य **निरीयुः** निर्गतवन्तः। अत्र सर्गे प्रायः इन्द्रवज्रोपेन्द्रवज्रोपजातयश्छन्दांसि तल्लक्षणानि यथा "स्यादिन्द्रवज्रा यदि तौ जगौ गः उपेन्द्रवज्रा जतजास्ततो गौ॥ अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" तत्राद्यक्षरे गुरुणि इन्द्रवज्रा लघुनि उपेन्द्रवज्रा क्वचिद्गुरुणि क्वचिल्लघुनि चोपजातिरिति ज्ञेयम् इयं च **इन्द्रवज्रा** ॥ १ ॥

**प्रद्योतनस्ये**ति। ७४१ द्युत-दीप्तौ। क्रुपूपर्यन्ता उदात्ता उनुदात्तेतः। अस्माद्युच्। **श्वेते**ति ७४२ श्विता—वर्णे। पचाद्यच्। **उन्मेदुरे**ति। ७४३ ञिमिदा-स्नेहने। 'भञ्जासमिदो घुरच्' (३।२।१६१) **अस्विन्ने**ति। ७४४ ञिष्विदा-स्नेहनमोचनयोः। मोहनयोरित्येके। स्विदेः कर्तरि क्तः। **रुगि**ति। ७४५ रुच-दीप्तावभिप्रीत्यां च। भावे संपदादिक्विप्। **घोटके**ति। ७४६ घुट-परिवर्तने। ण्वुल्। **रुट्यमाने**ति। ७४७ रुट-७४८ लुट-४४६। लुठ-प्रतिघाते। रुठेत्येके। रुटेः कर्मणि शानच्। लुटेः कर्तरि क्तः॥ १ ॥

दुष्टनिग्रहभक्तानुग्रहरूपप्रधानकार्यार्थं भगवतः प्रस्थानमाह—

**कृष्णोऽपि तापोल्लुठिताङ्गशोभा आश्वास्य मारक्षुभिता महेलाः।**
**अनभ्यसंतोभकृकंसजीवध्वंसाय पापध्वदयं प्रतस्थे ॥ २ ॥**

**कृष्णोपी**ति **पापध्वत्** कल्मषहरः अयं **कृष्णः** अपि **तापोल्लुठिताङ्ग-**

**शोभाः** तापेन सन्तापेन विरहजनितेनेति भावः उल्लुठिता प्रतिहता अङ्गशोभा शरीरकान्तिर्यासां ताः **मारक्षुभिताः** मदनेन संचलिताः "मदनो मन्मथो मारः" इत्यमरः । **महेलाः**[१] गोपवनिताः **आश्वास्य** समाश्वासनं कृत्वा **अनभ्यसन्तोभककंसजीवस्रंसाय** अनभ्यानामर्हिंस्यानां सन्तोभकस्य निहन्तुः कंसस्य तदाख्यदैत्यस्य जीवस्रंसाय प्राणान् शिथिलीकर्तुं **प्रतस्थे** गतवान् ॥ **उपजातिः** ॥ २ ॥

लुठेः कर्मणि क्तः । **शोभे**ति । ७५० शुभ–दीप्तौ । घञि टाप् । 'नाम्नि तु पुंस्त्वं प्रायिकम्' इति घञन्तस्यापि स्त्रीत्वम् । **क्षुभिते**ति । ७५१ क्षुभ–संचलने । तच्च पूर्वप्रकृतिविपर्यासो मथनं वा । आद्यर्थे कर्तरि क्तः । अन्यत्र कर्मणि । **अनभ्यसंतोभके**ति । ७५२ णभ–७५३ तुभ–हिंसायाम् । नभेः 'पोरदुपधात्' ( ३।१।९८ ) इति यत् तुभेर्ण्वुल् **स्रंसाये**ति । ७५४ स्रंसु–७५५ ध्वंसु–७५६ भ्रंसु–अवस्रंसने । भ्रंशु–इत्येके । ध्वंसु-गतौ च । अयं नाशने प्रसिद्धः । स्रंसेर्घञ् । **पापध्वादि**ति । ध्वंसेः क्विपि सौ 'वसुस्रंसुध्वंसु–' ( ८।२।७२ ) इति दः ॥ २ ॥

**अभ्रस्तविस्रम्भजुषा बलेन समं प्रवृत्तो भुवनाभिवृद्ध्यै ।**
**अशर्धनैर्गोपकुलैः सहासौ ययौ कृपास्यन्दसुक्लृप्तमोदैः ॥ ३ ॥**

**अभ्रस्ते**ति **अभ्रस्तविस्रम्भजुषा** अभ्रस्तम् अशिथिलं दृढमिति यावत् विस्रंभं विश्वासं "समौ विस्रम्भविश्वासौ" इत्यमरः । जुषते सेवते इति तेन **बलेन** पराक्रमेण बलभद्रेण वा **समं** सार्धम् "साकं सार्धं समं सह" इत्यमरः । **भुवनाभिवृद्ध्यै** भुवनस्य लोकस्याभिवृद्ध्यै वर्धनाय **प्रवृत्तः** लग्नः **असौ** श्रीकृष्णः **कृपास्यन्दसुक्लृप्तमोदैः** कृपास्यन्देन दयामृतप्रवाहेण सम्यक् क्लृप्तो मोदो हर्षो येषां तैः **अशर्धनैः** कुत्सितशब्दमकुर्वाणैः **गोपकुलैः** गोपसमूहैः **सह ययौ** गतवान् ॥ ३ ॥

**अभ्रस्ते**ति । भ्रंसेः कर्तरि क्तः । **विस्रम्भे**ति । ७५७ स्रम्भु–विश्वासे । घञ् । **प्रवृत्त** इति । ७५८ वृतु–वर्तने । कर्तरि क्तः । **अभिवृद्ध्यै** । ७५९ वृधु–वृद्धौ । क्तिन् । **अशर्धनैः** । ७६० शृधु–शब्दकुत्सायाम् । युच् । **स्यन्दे**ति । ७६१ स्यन्दू–प्रस्रवणे । घञ् । **सुक्लृप्ते**ति । ७६२ कृपू–सामर्थ्ये । सामर्थ्यं शक्तिर्योग्यता वा । अन्तर्गतण्यर्थात् कर्मणि क्तः । 'कृपो रो लः' ( ८।२।१८ ) इति लत्वम् । द्युतादय उदात्ता अनुदात्तेतः । वृत् । द्युतादयो वृत्ता इत्यर्थः । द्युदिति वृतेर्भूते क्विप् ॥ ३ ॥

---

(८०) १ महस्योत्सवस्य इला भूमिरिति विग्रहे महेलाशब्दोऽपि स्त्रीवाची ।

अतिप्रियस्य भगवतः प्रस्थाने गोपीनां वृत्तमाह—

**गोपीघटाः प्रव्यथितास्तदानीं पृथूपतापप्रसमानचिन्ताः ।**
**मृदुस्वभावाः स्खदिताः स्मरास्त्रैः प्रक्षञ्जिते प्राणसमे विषेदुः ॥ ४ ॥**

**गोपीघटा** इति **तदानीं** तस्मिन्समये **प्रव्यथिताः** भीताः **पृथूपतापप्रसमानचिन्ताः** पृथुना बहुलेन उपतापेन पीडया प्रसमाना वर्धमाना **चिन्ता** यासां ताः। **मृदुस्वभावाः** कोमलप्रकृतयः **स्मरास्त्रैः** कामबाणैः **स्खदिताः** विरहविदारिताः **गोपीघटाः** बल्लवीसमूहाः **प्राणसमे** प्रियतमे श्रीकृष्णे **प्राक्षञ्जिते** गते सति **विषेदुः** विषादं जग्मुः ॥४॥

**घटा** इति । ७६३ घट—चेष्टायाम् । कचित्सङ्गमादौ । एतदादयः फणान्ता घटादयो मितः' इति मितः । आदितस्त्वरान्तानां तु 'घटादयः षितः' इति षित्वम्, अनुदात्तेत्त्वं च । घटेः षित्त्वात् 'षिद्भिदादिभ्यः' (४।१।४१) इति । संगच्छन्तेऽत्र समूहिन इत्याधिकरणेऽङ् । **प्रव्यथिता** इति । ७६४ व्यथ-भयचलनयोः । दुःखचलनयोरित्यके । कर्तरि क्तः । **पृथु** इति । ७६५ प्रथ-प्रख्याने । विस्तारेऽप्यस्ति ।'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' इत्युप्रत्ययः । **प्रसमाने**ति । ७६६ प्रस-विस्तारे । शानच् । **मृदु** इति । ७६७ म्रद-मर्दने । म्रदेः प्राग्वदुप्रत्ययः । **स्खदिताः** ७६८ स्खद-स्खदने । विदारणं तत् । णयन्तात् कर्मणि क्तः । मित्वाद्ध्रस्वः । **प्रक्षञ्जिते** इति । ७६९ क्षजि-गतिदानयोः । क्षज-इत्यके । क्षञ्जेः कर्तरि क्तः ॥ ४ ॥

**दक्षापरेणास्तकृपेण तासामकान्दि चेतः कदनैः स्मरेण ।**
**शरीरमक्रान्दि वचोऽपि वेगादक्लान्दि चक्रे मरणत्वरापि ॥५॥**

**दक्षापरेणे**ति **दक्षापरेण** दक्षायां हिंसायां परेण तत्परेण **अस्तकृपेण** अस्ता निरस्ता कृपा दया येन 'कृपा दयानुकम्पा स्यात्' इत्यमरः। तेन **स्मरेण** कामेन **तासां** गोपीनां **चेतो** हृदयम् "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः। **कदनैः** विक्लवीकरणैः पीडाभिरिति यावत् । **अकान्दि** विक्लवीकृतं । **शरीरं** विग्रहः **अक्रान्दि** विक्लवितं **वचः** गीः **अपि अक्लान्दि** दुःखं नीतं **मरणत्वरा** पञ्चतासम्भ्रमः **अपि चक्रे** कृता ॥५॥

**दक्षे**ति । ७७० दक्ष-गतिहिंसनयोः ।

घटादिषु त्विहापूर्वपठिताः सर्वदा मितः । बहिःस्थस्येह पाठे तु मित्वमुक्तेऽर्थे एव हि ॥
इत्युक्तेर्वृद्ध्यर्थतया प्राक्पठितस्य दक्षेरनयोरर्थयोर्मित्वम् । षित्वादङ् । **कृपे**ति ।

७७१ क्रप-कृपायां गतौ च । 'क्रपेः संप्रसारणं च' इति भिदादिपाठात् संप्रसारणमङ् च । **अकान्दि । अक्रान्दि । अक्लान्दि** । ७७२ कदि-७७३ क्रदि ७७४ क्लदि-वैक्लव्ये । वैकल्य इत्येके । त्रयोऽप्यानिदित इत्यन्ये । इदितां कन्दादीनां णिजन्तात् कर्मणि चिणि ['चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (६।४।९३) इति दीर्घः] **कदनैः** । अनिदितः कदेर्ल्युट् । **त्वरेति** । ७७५ ञित्वरा-संभ्रमे । षित्त्वादङ् ॥५॥

गोपीनां वचोवैक्लव्यादुक्तिं प्रपञ्चयाति—

**ताः संज्वरन्तीर्गलदश्रुधारा विमोहशक्त्या ह्रिडयन्वियोगः ।**
**मिथो निजार्तिं वटयांचकार हरेश्च चेष्टा भटयांचकार ॥ ६ ॥**

**ताः** इति **वियोगो** हरिविरहः ( प्रयोजककर्ता ) **संज्वरन्तीः** पीडयमाना **गलदश्रुधाराः** गलन्त्यः स्रवन्त्यः अश्रूणां वाष्पाणां धाराः प्रवाहा यासां **ताः** गोपीः । **विमोहशक्त्या** मूर्छितकरणसामर्थ्येन **ह्रिडयन्** वेष्टयन् वद्धाः कुर्वन् **मिथः** अन्योऽन्यं **निजार्तिं** स्वस्वखेदं **वटयाञ्चकार** परिभाषयामास । स्वयं परस्परं स्वस्वपीडां वदन्तीः ताः कथयितुं प्रेरितवानित्यर्थः । **हरेः** श्रीकृष्णस्य **चेष्टाः** विरहदशाः **भटयांचकार** भाषयांचकार अवूबुधत् **च** इत्यर्थः ॥ ६ ॥

**संज्वरन्तीरिति** । ७७६ ज्वर-रोगे । फणान्ता उदात्ता उदात्तेतः । ज्वरेः शतरि ङीप् । **गलदिति** । ७७७ गड-सेचने तच्च जलादेः पतनमात्रम् । गडेः शता । **ह्रिडयन्** । ७७८ हेड-वेष्टने । णौ मित्वाद्ध्रस्वः 'एच इक्' (१।१।४८) । शता । **बटयांचकार । भटयांचकार** इति । ७७९ वट-७८० भट-परिभाषणे । रुंचट (?) इत्येके । आद्ययोर्णौ लिट् ॥ ६ ॥

**वियोगवह्निं नटयन्वताधृतिं च नः प्रस्तकयन्गतोऽसौ ।**
**कृष्णः पुरस्त्रीश्चकयेदिदानीं नर्माणि चोक्त्वा कखयेद्रगामः ॥ ७ ॥**

**वियोगेति असौ** श्रीकृष्णो वासुदेव **नः** अस्माकम् **अन्तः**मनासि **वियोगवह्निं** विरहाग्निं **नटयन्** नर्तयन् दीपयन् । **धृतिं** धैर्यं **च प्रस्तकयन्** प्रतिहतां कुर्वन् गतः सन् **इदानीं** संप्रति **पुरस्त्रीः चकयेत्** तर्पयेत् । **नर्माणि** परिहासवचनानि " परिहासः क्रीडा लीला च नर्म च " इत्यमरः । **उक्त्वा** कथयित्वा **कखयेत्** हासयेत् **च** (चककखाभ्यां संभावने लिङ् **बत** इति खेदे **रगामः** शङ्कामहे ॥ ७ ॥

**नट्यन्निति** ७८१ णट–नृतौ। पूर्वं नट–व्यापारेऽयं धातुरुक्तः। अत्र तु नर्तनव्यापारश्चलनादिश्च नृत्तिः। तत्र मित्वम्। णट–गतावित्येके। नतावित्यन्ये। **प्रस्तकयन्**। ७८२ ष्टक–प्रतिघाते। द्वयोर्णौ शता। **चकयेत्**। ७८३ चक–तृप्तौ। **कखयेत्**। ७८४ कखे –हसने। द्वयोर्लिङ्। **रगामः**। ७८५ रगे–शङ्कायाम्। लट्॥ ७॥

श्रीकृष्णविरहदुःखं छादयितुमशक्ता काचिदाह—

**लग्नं हृदन्ते ह्लगये कथं वा रागं कथं नु ह्लगयामि तापम्।**
**असग्यमास्त्रं स्थगये कथं वा कगामि किंवा ह्वरयेऽकिताय॥ ८॥**

**लग्नमिति** अहं **हृदन्ते** हृदये **लग्नं** सक्तं **रागं** प्रीतिं **कथं वा** केन प्रकारेण **ह्लगये** संवृणोमि छादयामि। **तापं** सन्तापं **कथन्नु** नु इति प्रश्ने "नु पृच्छयां विकल्पे च" इत्यमरः। **ह्लगयामि** छादयामि। **वा** अथवा **असग्यं** संवरीतुमशक्यं **आस्त्रम्** अस्रुजालम् **कथं स्थगये** छादयामि। रागतापयोरन्तरस्थत्वेनादृश्यत्वेपि तद्धेतुरास्रोद्गमो दुर्निवार एवेति भावः। **अकिताय** कुटिलं गताय व्याजेन प्रस्थिताय **ह्वरये** हरिं प्राप्तुं **किंवा** कर्म **कगामि** करोमि न किञ्चिदपि कर्तुं शक्यमित्यर्थः॥ ८॥

**लग्नमिति**। ७८६ लगे–सङ्गे। 'क्षुब्धस्वान्तध्वान्त--' (७।२।१८) इत्यादिना क्तान्तो निपातितः। **ह्लगये**। **ह्लगयामि**। ७८७ ह्गे--७८८ ह्लगे–७८९ षगे–७९० ष्टगे–संवरणे। तच्चात्र तिरोधानमेव। स्थगेर्पर्यन्तस्य तिरोधापनार्थदर्शनात्। आद्ययोर्णौ लट्। **असग्यम्**। सगेर्णौ यत्। **स्थगये**। स्थगेर्णौ लट्। **कगामि**। ७९१ कगे–नोच्यते। क्रियासामान्यार्थत्वादनेकार्थत्वाच्च 'अस्यायमर्थः' इति नोच्यते। नोच्यते इत्यवचनमर्थः इत्यन्ये। अस्माल्लट्। **अकिताय**। ७९२ अक--७९३ अग–कुटिलायां गतौ। अकेः कर्तरि क्तः॥ ८॥

पीडातिशयादक्रूरं शपन्ति—

**अगन्मनीषः कणयन्मुकुन्दमस्मान्वियोगं रणयन्स दूतः।**
**चणन्विषादं विशणन्विचिन्तां श्रणन्विमोहं श्रथितोऽस्तु सद्यः॥ ९॥**

**अगन्मनीष** इति। **अगन्मनीषः** अगन्ती कुटिलं गच्छन्ती मनीषा बुद्धिर्यस्य सः "बुद्धिर्मनीषा धिषणा" इत्यमरः। **सः** अक्रूरः **दूतः** सन्देशहरः **मुकुन्दं** श्रीकृष्णं **कणयन्** गमयन् तस्माद्धेतोः **अस्मान्** प्रति **वियोगं** विरहं **रणयन्** प्रापयन्। तत एव **विषादं** विरहव्यथां **चणन्** **विचिन्तां** विविधां विरहशुचं **विशणन्** **विमोहं**

वैचित्र्यं च **श्रणन्** सन् त्रिषु प्रयच्छन्नित्यर्थः **सद्यः** सपदि "सद्यः सपदि तत्क्षणे" इत्यमरः ! **श्रथितो** हिंसितः **अस्तु** म्रियताम् ॥ ९ ॥

**अगदिति** । अगेः शता । **कणयन् रणयान्निति** । ७९४ कण -७९५ रण-गतौ। द्वयोर्णौ शता। **चणन् विशणन् श्रणान्निति**। ७९६ चण८७९७ शण-७९८ श्रण—दाने च । एषां शता । श्रथितः । ७९९ श्रथ—८०० श्लथ—८०१ क्रथ—८०२ क्लथ—हिंसार्थाः । श्रथः कर्मणि क्तः ॥ ९ ॥

सर्वेरद्विषो भगवतः स्वरत्नादोषमाशङ्क्य परिहरन्ति —

**श्लथ्यात्मनां क्राथयताऽच्युतेन किं नाङ्गजो नः क्लथयन्नचानि ।**
**वनाम किं प्रज्वलितो हरेण सोऽद्यापि यद्विह्वलयन्ननङ्गः ॥ १० ॥**

**श्लथ्यात्मनामिति श्लथ्यात्मनां क्राथयता** हिंस्यरूपान् हिंसता ("जासिनिप्रहण" ( २।३।५६ ) इति कर्मणि षष्ठी) **अच्युतेन** विष्णुना "पीताम्बरोच्युतः शार्ङ्गी" इति विष्णुनामस्वमरः। **नः** अस्मान् **क्लथयन्** हिंसन् **अङ्गजः** कामदेवः **किन्न अचानि** कस्मान्न हिंसितः। **य**(:) यस्मात् **हरेण** महादेवेन **प्रज्वलितः** दग्धः अपि **सः अनङ्गः** शरीररहितः कामः **अद्यापि** सम्प्रत्यपि **विह्वलयन्** वर्तते इति शेषः। तस्मात् **किं वनाम** करवाम न किञ्चिदपि कर्तुं शक्यामित्यर्थः ॥ १० ॥

**श्लथ्येति** श्लथेण्यर्यत् । **क्राथयता** क्रथेर्णिजन्ताच्छता। 'जासिनिप्रहणनाटक्राथ-' (२।३।५६)इति निपातनाद्दीर्घः । **क्लथयन्** क्लथेर्णौ शता । श्लथादीनां णिजन्तानामपि हिंसामात्रमर्थः । जास्यादिसूत्रे हिंसायामित्युक्तेः । 'हन्त्यर्थाश्च' इति चुरादिपाठाद्वा । **अचानि** । ८०३चन—चाहिंसार्थ इति शेषः।अस्मादृणौ चिण् । **वनाम**। ८०३वनु—च नोच्यते । कणिवदयमपि क्रियासामान्यार्थ इत्यर्थः । अस्माल्लोट् ! **प्रज्वलितः** ।८०४ ज्वज—दीप्तौ । णौ कर्मणि क्तः । **विह्वलयति** । ८०५ ह्वल—८०६ ह्मल—चलने । ह्वलेर्णौ लट् ॥ १० ॥

भगवतो बाल्यकृतं दुर्ललितमप्यतिदुर्विस्मरमित्याह—

**प्र(अ)ह्मल्यचित्तां स्मरयत्यसौ मां नन्दात्मजः संदरकः खलानाम् ।**
**अनारि येन श्रपितं पयोऽपि बालैर्मुहुः संज्ञपितासुरेण ॥ ११ ॥**

**अह्मल्यचित्तामिति खलानां** दुर्जनानां **संदरकः** भीषयिता **असौ नन्दात्मजः** नन्दसूनुः "आत्मजः सुनुः" इत्यमरः। श्रीकृष्णः **अह्मल्यचित्तां** अह्मल्यंचलयितुमशक्यं चित्तं यस्यास्ताम् **मां स्मरयति** सोत्कण्ठम् निध्यापयति। **मुहुः** पुनः **संज्ञपितासुरेण** संज्ञपिता मारिता असुरा येन तेन **येन** नन्दसूनुना **श्रपितं** पक्वं **पयः** क्षीरम्

"दुग्धं क्षीरं पयः समम्" इत्यमरः। **अपि बालैः** शिशुभिः ( कर्तृभिः ) **अनारि** नायितम् ॥ ११ ॥

**प्र ( अ ) ह्लल्येति** । ह्ललेर्णौ एयत् । **स्मरयति** । ८०७ स्मृ–आध्याने । सोत्कण्ठस्मरणं तत् । णौ लट् । **संदरकः** । ८०८ दृ–भये । णौ ण्वुल् । **अनारि** । ८०९ नृ–नये । णौ चिण् । **श्रपितम्** । ८१० श्रा–पाके । पाको विक्लित्तिः । श्रायति-श्रात्योरस्मिन्नर्थे मित्वं णौ कर्मणि क्तः । **संज्ञपितेति** । मारणतोषणनिशामनेषु–८११ ज्ञा । निशामनं प्रदर्शना । निशातेष्वित्येके । मारणार्थे कर्मणि क्तः ॥ ११ ॥

तापशान्तावन्यथोपायं संभावयन्ति —

**तमेव किं विज्ञपयेम मारं येनाच्युतं प्रज्ञपयेन्न बाणान् ।**
**करे सरोजं चलयन्नचाल्याः स किं मुरारिश्छदयेत्पुनर्नः ॥ १२ ॥**

**तमेवेति** वयं तं **मारं** मदनं "मदनो मन्मथो मारः" इत्यमरः । **एव विज्ञपयेम** तोषयेम **किं** । **येन** तोषणेन **असौ** कामदेवः **अच्युतं** श्रीकृष्णं **प्रज्ञपयेत्** प्रदर्शयेत् । **बाणान्** शरान् **न प्रज्ञपयेत्** निशातयेत् । **स मुरारिः** श्रीकृष्णः लीलयादि खेलया **करे** हस्ते **सरोजं** पङ्करुहं **चलयन्** कम्पयन् **अचाल्याः** भागदन्यया कर्तुम् अन्यत्र हर्तुं नेतुं स्वाचिन्तितं क्षेप्तुं निरासितुं च वा न शक्याः **नः** अस्मान् **पुनः** भूयः **छदयेत् किं** ऊर्जनं (प्राणनं बलनं वा) कुर्यात् किम् (किंद्वयं प्रश्ने) ॥ १२ ॥

**विज्ञपयेदिति** । तोषणे णिचि लिङ् । **प्रज्ञपयेदिति** । निशामन-निशातनयोः । **चलयन्निति** । कम्पने–८१२ चलिः । णौ शता । **अचाल्याः** । कम्पनादन्यत्र मित्वाऽभावे णिजन्तात्ण्यत् । अन्यथाकरणं हरणं क्षेपो वा तत्रार्थाः । **छदयेत्** । ८१३ छदिर्–ऊर्जने । बलनं प्राणनं वा तत् । छदेर्णौ लिङ् ॥ १२ ॥

भगवतो दर्शनमेव प्रार्थयन्ते—

**यद्वर्णने को लडयेन्न जिह्वां भक्तांश्च दुष्टान्मदयत्यलं यः ।**
**दृश्येत वेणुं ध्वनयन्कदा वा स नन्दसूनुः स्वनयन्कलापम् ॥ १३ ॥**

**यद्वर्णने** इति **यद्वर्णने** यस्य श्रीकृष्णस्य वर्णने स्तवने **को** जनो **जिह्वां** रसज्ञां "रसज्ञा रसना जिह्वा" इत्यमरः । **न लडयेत्** न उन्मथयेत् क्षोभयेत् । **यः** श्रीकृष्णः **भक्तान्** सेवकान् **दुष्टान्** शठांश्च **अलम्** अत्यर्थं **मदयति** हर्षयति **ग्लेपयति** दीनयति च । **स नन्दसूनुः** श्रीकृष्णः **वेणुं** वंशिका **ध्वनयन्** शब्दयन् **कलापं** मयूरपिच्छं च **स्वनयन्** अवतंसीकुर्वन् **कदा** कस्मिन्काले **वा** अस्माभिः

**दृश्येत** अवलोक्येत ॥ १३ ॥

**लडयेदि**ति । जिह्वोन्मथने—८१४ लडिः । उन्मथनं क्षोभणम् । तच्च जिह्वायाः क्षोभणं वा । जिह्वायाः क्षोभणार्थे णिचि लिङ् । **मदयति** । ८१५ मदी-हर्षग्लेपनयोः । ग्लेपनं दैन्यम् । लट् । **ध्वनयन्** । ८१६ ध्वन--शब्दे । णौ शता । **स्वनयन्** । ८१७ स्वन—अवतंसने च । चाच्छब्दे णौ शता ॥ १३ ॥

दर्शनप्रकार एव प्रार्थ्यते—

**दलं दलं धैर्यभरं कटाक्षान्वलं वलं प्रस्खलयन्मनो नः ।**
**त्रपं त्रपं नर्मगिरा विषादं क्षपं क्षपं किं जनयेत्स मोदम् ॥ १४ ॥**

**दलं दलमिति सः** श्रीकृष्णः **नः** अस्माकं **मनः** मानसं **प्रस्खलयन्** चलयन् सन् **कटाक्षान्** अपाङ्गदर्शनानि **वलं वलं** पुनः पुनः संचारयन् **धैर्यभरं** धैर्यस्य धृतेर्भरमतिशयम् **दलं दलं** पुनः पुनर्विदारयन् विदीर्णं कुर्वन् **नर्मगिरा** परिहासवचनेन **त्रपं त्रपं** पुनः पुनर्लज्जयन् **विषादं** दुःखं **क्षपं क्षपं** पुनः पुनर्नाशयन् **मोदं** हर्षं **जनयेत्** उत्पादयेत् **किम्** ( सम्भावने लिङ् ) ॥ १४ ॥

**दलं दलमि**त्यादिचतुर्षु 'दालि-वलि-स्खलि-त्रपि-क्षपयश्च' (उ० इति भोजोक्त्या मित्त्वे णयन्तादाभीक्ष्ण्ये णमुल् । 'नित्यवीप्सयोः' ( ८।१।४ ) इति द्विरुक्तिः । 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' ( ६।४।९३ ) इति दीर्घाभावे रूपम् । **प्रस्खलयन्** । स्खलेर्णौ शता । **जनयेत्** । घटादयो मितः । 'जनी-जृष्-क्नसु-रञ्जोऽमन्ताश्च' इति णौ मित्त्वे जनेर्लिङ् ॥ १४ ॥

श्रीकृष्णेन पूर्वं सुखितत्वादिदानीं पीडाधिक्यमित्याहुः—

**वाग्भिर्विशङ्कां विजरय्य मारं परिक्नसय्य स्नसितत्रपेण ।**
**अराञ्जि येनाभिरमय्य गूढं वधूजनः स ज्वलयत्यलं नः ॥ १५ ॥**

**वाग्भिरिति स्नसितत्रपेण** स्नसिता निरस्ता त्रपा लज्जा येन तेन ' त्रपा व्रीडा लज्जा सापत्रपान्यतः" इत्यमरः । **येन** श्रीकृष्णेन **वाग्भिः** वचोभिः **विशङ्कां** विविधं तर्कं **विजरय्य** नाशयित्वा **मारं** कामदेवं **परिक्नसय्य** दर्पयित्वा **गूढं** गुप्तम् **अभिरमय्य** रमणं कारयित्वा **वधूजनः** स्त्रीजनः **अराञ्जि** रञ्जितः **सः** श्रीकृष्णः **नः** अस्मान् **अलम्** अत्यर्थं **ज्वलयति** सन्तापयति ॥ १५ ॥

**विजरय्य** । जृषो णिजन्तादल्यप् । 'ल्यपि लघुपूर्वात्' ( ६।४।५६ ) इत्ययादेशः । **परिक्नसय्य** । क्नसेः प्राग्वल्ल्यप् । **स्नसिते**ति । 'जनी-जृष्-क्नसु

इति पाठे णिजन्तात् कर्मणि क्तः। **अराञ्जि**। रञ्जेर्णौ चिणि 'चिण्णमुलोः—' (६।४।९३) इति दीर्घः। **अभिरमय्य**। अमन्तात्णिचि प्राग्वत् ल्यप्। **ज्वलयति** ज्वल-ह्वल-ह्मल-नमामनुपसर्गाद्वा' इति मित्वविकल्पात् मित्वपक्षे णिचि लट्॥ १५॥

**ह्वा ज्वालयन्ति ह्वलयन्ति चित्तमह्वाल्यवैरिह्मलकस्य लीलाः।**
**अह्मालतात्मा नमयन्ननाम्यान्स ग्लापयत्यग्लपकः कुतो नः॥ १६॥**

ह्वेति **अह्वाल्यवैरिह्मलकस्य** क्षोभणीयानां शत्रूणां क्षोभकस्य दुःखदस्य श्रीकृष्णस्य **लीलाः** क्रीडाः **चित्तं** हृदयं **ज्वालयन्ति** तापयन्ति। **ह्वलयन्ति** क्षोभयन्ति च **ह्वा** कष्टम्। **अह्मालितात्मा**ऽक्षोभितमनाः "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च" इति धरणिः। **अनाम्यान्** प्रह्वीकर्तुमशक्यान् **नमयन्** नतीकुर्वन् **अग्लपकः** अपीडकः **सः** श्रीकृष्णः **कुतो** हेतोः **नः** अस्मान् **ग्लापयति** पीडयति॥ १६॥

**ज्वालयन्ती**ति। ज्वलेरमित्वे लट्। **ह्वलयन्ति**। ह्वलेर्मित्वे लट्। **अह्वाल्ये**ति ह्वलेरमित्वे ण्यत्। **ह्मलकस्य**। ह्मलेर्णौ मित्वे ण्वुल्। **अह्मालिते**ति। अमित्वे कर्मणि क्तः। **नमयन्**। **अनाम्यान्**। नमेः शतृण्यतौ। **ग्लापयति**। **अग्लपकः**। 'ग्ला-स्ना-वनु-वमां च' इति मित्त्वविकल्पे ग्लाधातोर्लण्ण्वुल् च॥ १६॥

भगवतः जलक्रीडादिषु स्वाभिमतसिद्धिं वकवधाद्यद्भुतकर्म चानुस्मृत्य तस्मिन्नेव मनो लीयत इत्याहुः—

**यः स्नाप्यमानः स्नपयंस्तथास्मान्कृत्स्नं च वान्यं वनयन्नरंस्त।**
**अवामयत्संवमितासृजा यो वकेन तं कामयते मनो नः॥ १७॥**

य इति **यः** श्रीकृष्णः अस्माभिः **स्नाप्यमानः** सिच्यमानः **तथा अस्मान् स्नपयन्** प्रतिषिञ्चन् **कृत्स्नं** समस्तं **वान्यम्** अस्माभिः कारयितव्य बहु कर्म **वनयन्** कारयन् **च अरंस्त** क्रीडितवान्। यः श्रीकृष्णः (प्रयोजककर्ता) **संवमितासृजा** छर्दितरक्तेन **वकेन** तदाख्यासुरेण (प्रयोज्यकर्त्रा) **अवामयत्** छर्दयामास वको ववाम तं स प्रेरयामासेत्यर्थः। **तं** श्रीकृष्णं **नो**ऽस्माकं **मनः** चित्तं **कामयते** इच्छति॥ १७॥

**स्नाप्यमानः—स्नपयन्नि**ति। स्नाधातोर्णौ शानच्छता च। **वान्यं-वनयन्नि**ति वनेर्ण्यच्छता च। **अवामयत्-वमिते**ति। वमेर्णौ लङ्। कर्मणि क्तश्च। **कामयते** इति। 'न कम्यमिचमाम्' इत्यमित्वे णिङि वृद्धिः॥ १७॥

दर्शनमेव प्रार्थयमाना विरमन्ति—

**तमामयन्तं द्विषतस्तृणं गाः प्रचामयन्तं क्व निशामयेयम् ।**
**निशम्यया मञ्जुगिरा कदा नः स यामयेद्वा यमनादिकार्ये ॥ १८ ॥**

**तमिति** अहं **द्विषतः** शत्रून् "द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः" इत्यमरः । **आमयन्तम्** पीडयन्तं **गाः** धेनूः ( गौणं कर्म ) **तृणं** घासं ( प्रधानं कर्म ) "घासो जवसं तृणमर्जुनम्" इत्यमरः । **प्रचामयन्तम्** आदयन्तं **तं** श्रीकृष्णं **क्व** कस्मिन्स्थाने **निशामयेयं** पश्येयम् । **वा** अथवा **स** श्रीकृष्णः **निशम्यया** श्राव्यया **मञ्जुगिरा** मनोज्ञया वाण्या **कदा** कस्मिन्समये **नः** अस्मान् **यमनादिकार्ये** परिवेषणादि कर्मणि **यामयेत्** व्यापारयेत् ॥ १८ ॥

**आमयन्तमिति** । अमेर्णिचि शतरि मित्वाभावे दीर्घः **प्रचामयन्तमिति** । चमेः प्राग्वत् । **निशामयेयमिति** । ८१८ 'शमो-दर्शने' इत्यमित्वे णौ लिङ् । **निशम्यया** आदर्शनार्थत्वेन मित्वे णिचि यत् । **यामयेत्** । ८१९ यमो-ऽपरिवेषणे' इत्यमित्वे णौ-लिङ् । व्यापारणाऽत्रार्थः । **यमनेति** । परिवेषणार्थे णौ मित्वे ल्युट् ॥ १८॥

उक्तं गोपीविलासमुपसंहरति—

**इत्याद्यवस्खादितमानसास्ता वालाः परिस्खादितधैर्यबन्धाः ।**
**दुष्टानपस्खादयितुं प्रयाते कृष्णे विलेपुः फणिता विमोहम् ॥ १९ ॥**

**इत्यादीति** कृष्णे वासुदेवे **दुष्टान्** दुर्जनान् **अपस्खादयितुं** विदारयितुं **प्रयाते** गते सति **अवस्खादितमानसाः** अवस्खादितं विदारितं मानसं हृदयं यासां ताः **परिस्खादितधैर्यबन्धाः** परिस्खादितो नाशितो धैर्यस्य धृतेर्बन्धः बन्धन यासां **ताः वालाः** षोडशवर्षन्यूनाः गोपीः **विमोहं** मूर्छा "मूर्छा तु कश्मलं मोहः" इत्यमरः । **फणिताः** प्राप्ता **इत्यादि** । गोपीघटाः (२स०४श्लो०) इत्यारभ्य यदुक्तं तद् **विलेपुः** परिदेवयन्तिस्म । "विलापः परिदेवनम्" इत्यमरः ॥ १९ ॥

**अवस्खादितेति** । ८२० 'स्खदि र्-अवपरिभ्यां च' इति मित्त्वनिषेधाण्णिचि दीर्घे कर्मणि क्तः । **परिस्खादितेति** तद्वत् । **अपस्खादयितुमिति** । 'अपावपरिभ्यश्चेत्येके' इत्यपात् परस्य स्खदेरमित्त्वे णिचि तुमुन् । **फणिता** इति । ८२१ फण-

(टि०) १ ॥ आषोडशाद्भवेद्बाला तरुणी त्रिंशका मता ।
पञ्चपञ्चाशका प्रौढा भवेद्वृद्धा ततः परम् ॥ १ ॥ इति कामशास्त्रम्

गतौ। कर्तरि क्तः। वृत् घटादिर्वृत्तः। ज्वरादय उदात्ता उदात्तेतः॥ १६॥

प्रस्थितस्य भगवतः श्रीकृष्णस्यावस्थामाह—

**कृष्णोऽपि रेजे पथि गोपबालैर्भ्राजिष्णुभिर्भ्राशितपार्श्वदेशः।**
**विभ्लाशितेऽक्रूररथे सरामः स्यमत्पयोदस्वनभाजि तिष्ठन्॥ २०॥**

**कृष्णोपी**ति **भ्राजिष्णुभिः** देदीप्यमानैः **गोपबालैः** बल्लवसुतैः **भ्राशितपार्श्वदेशः** भ्राशितः शोभितः पार्श्वदेशः पार्श्वभागो यस्य स **सरामः** बलभद्रेण सहितः "बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः। रेवतीरमणो रामः" इत्यमरः। स **कृष्णो** वासुदेवो**ऽपि विभ्लाशिते** शोभमाने **स्यमत्पयोदस्वनभाजि** शब्दायमानमेघस्य स्वनमिव स्वनं शब्दं भजत्याश्रयति यस्तस्मिन् **अक्रूररथे** गान्दिनेयस्यन्दने **तिष्ठन्** स्थितः सन् **पथि** मार्गे **रेजे** शुशुभे॥ २०॥

**रेजे** इति। ८२२ राजृ-दीप्तौ। उदात्तः स्वरितेत्। अस्माल्लिटि 'फणां च सप्तानाम्' (६।४।१२५) इत्येत्वाभ्यासलोपविकल्पः। ८२३ टुभ्राजृ-८२४ टुभ्राशृ-८२५ टुभ्लाशृ-दीप्तौ। उदात्ता अनुदात्तेतः। भ्राजेः 'अलंकृञ्—' (३।२।१३६) आदिना ताच्छील्ये इष्णुच्। **भ्राशित-भ्लाशिते**ति। द्वयोः कर्तरि क्तः। **स्यमदि**ति। ८२६ स्यमु-८२७ स्वन-८२८ ध्वन-शब्दे। त्रमान्ता उदात्ता अनुदात्तेतः। स्यमेः शता। **स्वने**ति 'स्वनहसोर्वा—' (३।३।६२) इत्यप्। स्वनान्ताः सप्त फणादयः॥ २०॥

**गोपैर्ध्वनद्भिः समितैर्वृतोऽपि देवो न तस्ताम विचिन्त्य गोपीः।**
**ज्वालेन तापेन चला जडाङ्गीरटालशोकद्वलितप्रलापाः॥ २१॥**

**गोपैरि**ति **ध्वनद्भिः** शब्दायमानैः **समितैः** अविक्लवीभवद्भिः **गोपैः** बल्लवैः **वृतः** वेष्टितो**ऽपि** स **देवः** श्रीकृष्णः **ज्वालेन** दीप्तेन **तापेन** सन्तापेन **चलाः** कम्पिताः चलितचित्ताः **जडाङ्गीः** जडान्यसमर्थानि अङ्गानि अवयवा यासां ताः **अटालशोकद्वलितप्रलापाः** अटालेन पूर्णेन शोकेन शुचा द्वलिता विकलीभूताः प्रलापाः अनर्थकवचांसि यासां ताः "प्रलापोऽनर्थकं वचः" इत्यमरः। ताः **गोपीः** बल्लवीः **विचिन्त्य** स्मृत्वा **न तस्ताम** अविक्लवीबभूव अपितु पीडित एवासीत्॥ २१॥

**ध्वनद्भिरि**ति। ध्वनेः शता। **समितैः**। ८२९ षम-८३० ष्टम-अवैक्लव्ये। समेः कर्तरि क्तः। **तस्ताम**। स्तमेर्लिट्। **ज्वालेन**। ८३१ ज्वल-दीप्तौ। 'ज्वलितिकसन्तेभ्यः' (३।१।१४०) इति णः। **चलाः**। ८३२ चल-कम्पने। पचाद्यच्। **जडे**ति

८३३ जल-घान्ये । घान्यमतैत्त्वयम् । अच् । लडयोरभेदाड्डः । अटालेति । ८३४ टल-८३५ ट्वल-वैकल्ये । टलेर्णः ट्वलः कर्तरि क्तः ॥ २१ ॥

**स्थलीर्हली सन्नलिनीश्च तीर्त्वा पलन्हरिश्चात्मवलप्रपोलः ।**
**कुलीरशालह्वलिताम्बुपूरह्मलत्पतङ्गां यमुनामवाप्तौ ॥ २२**

**स्थलीरिति आत्मबलप्रपोलः** आत्मबलेन निजप्राणनेन विक्रमेण प्रपोलः महान् **हरिः** श्रीकृष्णः **हली** बलभद्रश्च 'तालाङ्को मुसली हली' इति तन्नामस्वमरः । **पलन्** गच्छन् उभौ **सन्नलिनीः** सत्य उत्तमाः नालिन्यः पद्मिन्यो यत्र ताः गन्धाढ्याः इत्याभिप्रायः **स्थलीः** अकृत्रिमस्थानानि **तीर्त्वा** उल्लङ्घ्य **कुलीरशालह्वलिताम्बुपूरह्मलत्पतङ्गाम्** कुलीराणां कर्कटकानां " स्यात्कुलीरः कर्कटकः " इत्यमरः । शालेन गमनेन ह्वलिते चलिते अम्बुपूरे जलप्रवाहे ह्मलन्तो गच्छन्तः पतङ्गाः पतन्ति गच्छन्ति आकाशे इति ते पक्षिणो यस्यां तां **यमुनां** कालिन्दीम् **आवाप्तौ** प्राप्तौ ॥ २२ ॥

**स्थलीरिति** । ८३६ ष्ठल-स्थाने । अस्मादाचि स्थलम् । स्थलशब्दात् "जानपदकुण्डगोणस्थल"- ४।१।४२) इत्यादिना अकृत्रिमार्थे ङीषि स्थली । **हलीति** ८३७ हल-विलेखने । कर्षणं तत् । अचि हलं तस्मात् " अत इनि-" (५।२।११५) इतीनिः । **नलिनीरिति** । ८३८ नल-गन्धे । बन्धन इत्येके । अस्मात् 'बहुलमन्यत्रापि' इति कठिनवदिनचि नलिनम् । तस्मादनौ ङीप् । **पलन्** । ८३९ पल गतौ । शता । **बलमिति** । ८४० बल-प्राणने धान्यावरोधने च। धान्यावरोधनं च कुसूलादिव्यापारः । अस्मादाचि बलम् । **प्रपोल** इति । ८४१ पुल महत्त्वे । ज्वलादिणः । **कुलीरेति** । ८४२ कुल-संस्त्याने बन्धुषु च । संतान इत्येके । संस्त्यानं सघातः । अस्मात् संघाती-भवतीति ' कुलेश्च भोजः ' (उ०) इतीरक् । **शालेति** । ८४३ शल-(ह्वल-ह्मल) ८४४ हुल-८४५ पत्ल-गतौ । शलेर्घञ् । **ह्वलितेति** । ह्वलः कर्तरि क्तः । **ह्मलदिति** । ह्मलेः शता । **पतङ्गेति** । 'पतेरङ्गच् पक्षिणि' (उ० इत्यङ्गच् ॥ २२ ॥

यमुनां वर्णयति षड्भिः—

**अह्नोलसत्त्वा रविरश्मिजालेऽप्यविक्क्वथन्ती तटपार्थिपाथाः ।**
**तापं मथन्ती कणिका वमन्ती ग्रान्थत्तरङ्गा क्षरति स्फुटं या ॥ २३ ॥**

---

(टि०)—१ घातने इति सि० को० पाठः।

**अह्रोलसत्त्वेति या** यमुना **अह्रोलसत्त्वा** अह्रोलानि अहिंसकानि सत्वानि जलजन्तवो यस्यां सा **रविरश्मिजाले** रवेः सूर्यस्य रश्मिजाले किरणसमूहे **अपि अविकत्थन्ती** अनात्मश्लाघमाना अनुष्णीभवन्तीत्यर्थः । **तटपाथिपाथाः** तटं तीरं पथितुं गन्तुं शीलं यस्य तादृशं पाथ उदकम् यस्याः सा "कबन्धमुदकं पाथः" इत्यमरः । **तापम्** उष्माणम् **मथन्ती** विलोडयन्ती क्षोभयन्तीति यावत् । **कणिकाः** विन्दून् **वमन्ती** उद्गिरन्ती **भ्राम्यत्तरङ्गा** भ्राम्यन्तः चलन्तः तरङ्गा ऊर्मयो यस्यां सा "भङ्गस्तरङ्ग ऊर्मिर्वा" इत्यमरः । **स्फुटं** प्रकटं यथा तथा **क्षरति** संचलति वहति तां यमुनामवासौ इति पूर्वेणान्वयः ॥ २३ ॥

**अह्रोलेति** । हुल-हिंसासंवरणगतिषु इत्येके । असमासः । **अविकत्थन्ती** ८४६ कत्थ-निष्पाके । शतरि ङीप् । **तटपाथि** । ८४७ पथे-गतौ । णिनिः । अलुगपि । **मथन्ती** । ८४८ मथे-विलोडने । शतरि ङीप् । **वमन्ती** । ८४६ टुवम्-उद्गिरणे **भ्राम्यदिति** । ८५० भ्रमु-चलने । 'वा भ्राशभ्लाश–' (३।१।७० इति श्यनि शता । **क्षरति** । ८५१ क्षर संचलने । गलनं तत् । 'क्षर–संचये' इति चैके चलने च द्रुमे । स्यगादय उदात्ता उदात्ततः ॥ २३ ॥

**सेहे च रामाजनखेलनं या कुचोरुसीदत्परिशद्रुतोया ।**
**क्रोशैर्जनाः क्रौञ्चगलान्मरालान्बोधन्ति यत्राम्बुरुहां विकासे ॥२४॥**

**सेहेचेति कुचोरुसीदत्परिशद्रुतोया** कुचैः स्तनैः ऊरुभिः सक्थिभिस्तेषाम् आघातेन ताडनेन सीदत् पीड्यमानं परिशद्रु विशरणशीलं तोयं नीरं जलं यस्याम् "अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्" इत्यमरः । एवंभूता **या** यमुना **रामाजनखेलनं** शोभनस्त्रीजनक्रीडां **सेहे च** चाद्रगवत्क्रीडा सुखमनुभूतवती **अम्बुरुहां** कमलानां **विकासे** प्रकाशे **यत्र** यस्यां **जनाः** नराः **क्रोशैः** सुरतशब्दैः सख्याह्वानैः शब्दैर्वा ( कुश+आह्वाने-रोदने च भ्वा०प० ) **क्रौञ्चगलान्** कुटलीभवत्कण्ठान् **मरालान्** हंसान् **बोधन्ति** जानन्ति । यमुनाजले स्नान्तीनां स्त्रीणां हंसानां च वर्णसादृश्यात्पूर्वं भेदाग्रहः आसीत् । किन्तु पश्चात्तच्छब्देन कुटिलकण्ठत्वेन च भेदो ज्ञात इति निश्चयान्तः सन्देहो व्यङ्ग्यः ॥ २४ ॥

**सेहे** इति । ८५२ षह-मर्षणे । उदात्तोऽनुदात्तेत् लिट् । **रामेति** । ८५३ रमु–क्रीडायाम् । उादेत्त्वमत्यनोऽम् । अनुदात्तोऽनुदात्तेत् असमासे टाप् । **सीददिति**

८५४ षद्लृ–विशरणगत्यवसादनेषु। शतरि 'पाघ्राध्मा–' (७।३।७८) इति सीदादेशः। **परिशद्रु** इति। ८५५ शद्लृ–शातने। तीक्ष्णीभावस्तत्। विशीर्णतायामित्येके। गताव्यपास्ति। 'दाधेट्सिशदसदः' (३।२।१४६) इति रुः। **क्रोशैः**। ८५६ क्रुश-आह्वाने रोदने च। घञ्। सदादयोऽनुदात्ता उदात्तेतः। **कोचति**। ८५७ कुच-संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। असमागणः। ८५८ **बोधन्ति** बुध-अवगमने। उद्बोधज्ञाने अस्यार्थावित्ययमकर्मकः सकर्मकश्च। अस्माल्लट्। **अम्बुरुहामिति**। ८५९ रुह-बीजजन्मनि। अस्मात् क्विप्। **विकास** इति। ८६० कस-गतौ। विपूर्वत्वात् स्फुटनार्थता। अस्माद् घञ्॥ कुचादय उदात्ता उदात्तेतो रुहिवर्जम्॥ २४॥

**हिक्कद्भिर्ऋक्षैः सुखमञ्चमानैर्भृङ्गैरचद्भिर्मधु याचमानैः।**

**रेटत्तटा या खलु चातकैश्च चाद्यं जलं प्रोथति दातुमुर्व्याम्॥ २५॥**

**हिक्कद्भिरिति** हिक्कद्भिः अव्यक्तशब्दं कुर्वद्भिः **सुखं** यथा तथा **अञ्चमानैः** इतस्ततः सञ्चरद्भिः **ऋक्षैः** भल्लूकैः "अथ भल्लुके ऋक्षाच्छभल्लभल्लुकाः" इत्यमरः। **अचद्भिः** उह्यमानैः **मधु** पुष्परसं "मधु मद्ये पुष्परसे" इत्यमरः। **याचमानैः** प्रार्थयमानैरिव **भृङ्गैः** भ्रमरैश्च **रेटत्तटा** शब्दायमानतीरा **या** यमुना **खलु उर्व्यां** वसुधायां "वसुधोर्वी वसुन्धरा" इत्यमरः। **चातकैः** स्तोककैः "अथ सारङ्गः स्तोककश्चातकः समाः" इत्यमरः। **चाद्यं** प्रार्थनीयं **जलं** कणरूपं च **दातुं** वितरीतुं **प्रोथति** पर्याप्नोति समर्था भवति॥ २५॥

**हिक्कद्भिरिति**। ८६१ हिक्क-अव्यक्ते शब्दे। शता। **अञ्चमानैः**। **अचद्भिः**। ८६२ अन्चु-गतौ याचने च। अचु-इत्येके। अचु-गतावित्यन्ये। अञ्चेः शानच्। अचेः शता। **याचमानैः**। ८६३ टु याचृ-याच्ञायाम्। डु याचृ-इत्येके। शानच्। **रेटदिति**। ८६४ रेटृ-परिभाषणे। याचने च द्रुमे। शता। **चातकैः**। ८६५ चते-८६६-चदे-याचने। चतेर्ण्वुल् **चाद्यम्**। चदेर्ण्यत्। **प्रोथति**। ८६७ प्रोथृ-पर्याप्तौ। अयं शब्दार्थोऽपि। अपपूर्वस्तु मारणे हुंकरणे वा। अस्माल्लट्॥ २५॥

यमुनाया अतिपुण्यत्वं शैत्यातिशयं चाह—

**नित्यं प्रमोहामिदितोरुमेदैः प्रमेधिता सद्भिरनिद्यमानैः।**

**या नेदितोर्वीपरिशर्धिवीचीविमृद्धवृक्षादिविबोध्यशैत्या॥ २६॥**

**नित्यमिति नेदितोर्वीपरिशर्धिवीचीविमृद्धवृक्षादिविबोध्यशैत्या** नेदितां सान्निकृष्टाम् उर्वीं भुवं परिशर्धितुम् उन्दितुं सेक्तुमिति यावत् शीलं यासां ताभिः

वीचिभिर्वृद्धैः उन्दितैः सिक्तैः वृत्तादिभिः विबोध्यं ज्ञेयं शैत्यं जडता यस्याः सा **प्रमोहामिदितोरुमेदैः** प्रमोहेण प्रकृष्टेनाज्ञानेन आमिदितः अपीडित उरुर्महान् मेदो मेधा येषां तैः **अनिद्यमानैः** अकुत्स्यमानैः **सद्भिः** बुधैः 'सन्सुधीः कोविदो बुधः' इत्यमरः। **या** यमुना **नित्यं** सदा **प्रमेधिता** संगता व्याप्तेत्यर्थः ॥ २६ ॥

**आमिदितेति**। ८६८ मिदृ—८६९ मेदृ-मेधाहिंसनयोः।मिथृ-मेथृ इत्येके। मिधृ-मेधृ इत्यन्ये ८७० मेधृ-संगमे च। मिदेः कर्मणि क्तः। **अनिद्यमानैः**। ८७१ णिदृ—८७२ णेदृ-कुत्सा-संनिकर्षयोः। निदेः कर्मणि शानच्। **नेदितेति**। नेदेः कर्तरि क्तः। **परिशर्धिविमृद्ध** इति। ८७३ शृधु—८७४ मृधु—उन्दने। शृधेर्णिनिः। मृधेः कर्तरि क्तः। **विबोध्येति** ८७५ बुधिर्—बोधने। तत्तु ज्ञानमेव। असमागण्यत् ॥२६॥

**प्रबुन्द्यवेणीजववेनमाना खातान्तिका चीवरिभिर्निषादैः।**
**चाय्या व्ययद्दाशविलोकभेषभ्रेषज्झषा यासदघं स्पशन्ती ॥२७॥**

**प्रबुन्द्येति प्रबुन्द्यवेणीजववेनमाना** प्रबुन्द्येन दर्शनीयेन वेणीजवेन प्रवाहवेगेन सह वेनमाना गच्छन्ती **चीवरीभिः** पटच्चरवद्भिः **निषादैः** वन्यजनविशेषैः "निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः" इत्यमरः। **खातान्तिका** उत्पाटितसमीपाः **चाय्या** पूज्या दर्शनीया वा **व्ययद्दाशविलोकभेषभ्रेषज्झषा** व्ययतां गच्छतां दाशानां कैवर्तानां "कैवर्ते दाशधीवरौ" इत्यमरः। विलोकेन दर्शनेन यो भेषो भयं तेन भ्रेषन्तः सञ्चरन्तः झषाः मत्स्या यस्यां सा **या** यमुना **अघं** दुरितं पापं 'कलुषं वृजिनैनोघमंहोदुरितदुष्कृतम्' इत्यमरः। **स्पशन्ती** नाशयन्ती **आसत्** अशोभत ॥ २७ ॥

**प्रबुन्द्येति**। ८७६ अर्बुन्दिर्—निशामने। दर्शनं तत्। ण्यत्। **वेणीति** वेणृ—गतिज्ञानाचिन्तानिशामनवादित्रग्रहणेषु। वेनृ-इत्येके। वादित्रग्रहणं वाद्यानां वादनार्थमादानम्। अस्मादौणादिके इनि 'कृदिकारादक्तिनः' इति ङीष्। **वेनमाना**। वेनेः शानच्। **खातेति**। ८७७खनु-अवदारणे।कर्मणि क्तः।**चीवरिभिः**। ८७९ चीवृ-आदानसंवरणयोः अनृदित्येके। अस्मादुणादौ। 'छित्वरच्छत्वर—' इत्यादिना निपातितश्चीवरशब्दः अत इनिः **चाय्या** ८८० चायृ-पूजानिशामनयोः। ण्यत्। **व्ययदिति** ८८१ व्यय-गतौ। शता। वित्तत्यागे त्वस्य नित्यं तङ्ङ्वे। **दाशेति**।८८२दाशृ-दाने"दासगोघ्नौ

(टि०) उन्दनं क्लेदनमिति सि०कौ० क्लेदनमिति आर्द्रीभावः इत्यर्थ इति त०बो०

संप्रदाने' ( ३।४।७३ ) इत्यच्। **भेषेति** । ८८३ भेषृ-भये । अगतावित्येके । घञ् **भ्रेषदिति** । ८८४ भ्रेषृ-गतौ । चलने इत्येके ८८५ भ्लेषृ-इत्यन्ये । भ्रेषेः शता **आस-द्दिति**।८८६ अस-गतिदीप्त्यादानेषु । अष-इत्येके । असंलङ् । **स्पशन्ति**।८८७स्पश-बाध-नस्पर्शनयोः । पशेत्येके। पषेत्यन्ये। हिंसार्थं दोषसूचनं स्पशनं।स्पशेः शतरि-ङीप्॥२७॥

**लाषेण चाषांश्छषिताञ्झषित्वा प्रभ्लक्ष्य भक्षन्ति यदम्बु नीचाः।**
**या दासते मोदममाह्यधाम्नां गूढाशयानामपि तापसानाम् ॥ २८ ॥**

**लाषेणेति नीचाः** चाण्डालादयः **छषितान्** हिंसितान् **चाषान्** किकीदिवीन् "अथ चाषः किकीदिविः" इत्यमरः । **लाषेण** इच्छया **झषित्वा** आदाय संवृत्य च **प्रभ्लक्ष्य** भक्षयित्वा **यदम्बु** यस्या जलं **भक्षन्ति** पिबन्ति **या च** यमुना **अमाह्य धाम्नाम्** अमाह्यम् अमेयं धाम प्रभावो येषां तेषां "गृहदेहत्विट्प्रभावा धामानि" इत्यमरः । **गूढाशयानां** गूढो गुप्त आशयः अभिप्रायो येषां तेषां **तापसानां** तपस्विनाम् **अपि मोदम्** आनन्दम् **दासते** ददाति । अनेन सर्वेषान्नीचानामुत्तमा-नाञ्च सुखदत्वं सूचितम् ॥ २८ ॥

**लाषेणेति** । ८८८ लष-कान्तौ । कान्तिरिच्छा । घञ् । **चाषान्** । ८८९ चष-भक्षणे । कर्मणि घञ् । **छषितान्** । ८९० छष-हिंसायाम् । कर्मणि क्तः । **झषित्वा** । ७९१ झष-आदानसंवरणयोः । क्त्वा । **प्रभ्लक्ष्य** । ८९२ भ्लक्ष-अदने । ८९३ भक्ष-इत्येके । भक्षेत्यन्ये । भ्लक्षेर्ल्यप् । **भक्षन्ति** भक्षेर्लट् । **दासते**। ८९४दासृ दाने । लट् । **आमाह्येति** । ८९५ । माहृ-माने । ण्यत् । **गूढेति** । ८९६ गुहू-संवरणे क्तः । हिक्कादय उदात्ताः स्वरितेतः ॥ २८ ॥

यमुनायामक्रूरस्य व्यापारं वक्तुमारभते—

**अजं तमत्र स्वरथे निवेश्य श्रियं भरन्तीं हरिकान्तितुल्याम् ।**
**धृतप्रमोदो दुरितापनेत्रीं स्नातुं नदीमाप स गान्दिनेयः ॥ २९ ॥**

**अजमिति धृतप्रमोदः** हर्षयुक्तः **गान्दिनेयः** गान्दिन्या अपत्यं **स** अक्रूरः **अत्र** अस्मिन्**स्वरथे** निजस्यन्दने **तम् अजं** श्रीकृष्णं **निवेश्य** स्थापयित्वा **हरिकान्ति तुल्यां हरेः** कृष्णस्य कान्त्या द्युत्या तुल्यां सदृशां श्यामवर्णत्वरूपां **श्रियं** शोभां

---

(टि०) १ स्पश-बाधनस्पर्शनयोः । **स्पर्शनं** ग्रथनम् इति भट्टोजिः ।

**भरन्तीं** बिभ्रतीं **दुरितापनेत्रीं** दुरितस्य पापस्य अपनेत्रीं नाशयित्रीं **नदीं** यमुनाख्यां सरितं **स्नातुम्** अवगाहितुम् **आप** प्राप्तवान् ॥ २६ ॥

**श्रियमिति** । ८६७ श्रिञ्-सेवायाम् उदात्त उभयतोभाषः । 'क्विब्वचिप्रच्छि-श्रिद्रुस्रुकटप्रुजुवां दीर्घोऽसंप्रसारणं च' इति कर्मणि क्विप् । दीर्घश्च । **भरन्तीम्** । ८६८ भृञ्-भरणे । पूरणेऽपीति भट्टिः । शतरि ङीप् । **ह्रतीति** । ८६६ हृञ्-हरणे । प्रापणं स्वीकारः स्तेयं नाशनं वा । अस्मादौणादिक इन् । **धृतेति** । ६२० धृञ्-धारणे । कर्मणि क्तः । **अपनेत्रीमिति** । ६०१ णीञ्-प्रापणे । प्रापणे गमना । तृचि ङीप् । भृञादयोऽनुदात्ता उभयतोभाषाः ॥ २६ ॥

**धयन्दृशाग्लानरुचिं स कृष्णं म्लानिं त्यजन्ध्यानमले जलान्ते ।**
**निद्रायदिन्दीवरभाजि मज्जन्नघ्राणधीस्तत्र च तं ददर्श ॥ ३० ॥**

**धयन्निति अघ्राणधीः** अघ्राणा अतृप्ता धीः बुद्धिर्यस्य **सः** अक्रूरः **अम्लानरुचिं** न म्लाना क्षीणा रुचिः दीप्तिर्यस्य तं **श्रीकृष्णं दृशा** दृष्टया **धयन्** अतितृष्णया तृषितो जलं पिबन् इव पश्यन् **म्लानिं** हर्षक्षयं **त्यजन्** परिहरन् **मज्जन्** ब्रुडन् च सन् **ध्यानमले** ध्यानं निरस्तं मलं यस्मात् तत्र **निद्रायदिन्दीवरभाजि** निद्रायन्ति मीलयन्ति मुकुलितानीत्यर्थः इन्दीवराणि नीलोत्पलानि " इन्दीवरञ्च नीलेऽस्मिन् " इत्यमरः । भजतीति तस्मिन् **तत्र जलान्ते** अम्बुमध्ये चाद्रथे **च तं** श्रीकृष्णं **ददर्श** दृष्टवान् ॥ ३० ॥

**धयन्निति** । ६०२ धेट्—पाने । शता । **अग्लानेति** । ६०३ ग्लै६०४ म्लै—हर्षक्षये । हर्षक्षयः शक्तिक्षयः । ग्लैधातोः—कर्तरि क्तः । 'संयोगादेः—'(८ । २। ४३) इति निष्ठानत्वम् । **म्लानिम्** । म्लायतेः 'ग्लाम्लाज्याहाभ्यो निर्वाच्यः' इति निः । **ध्यानेति** । ६०५ध्यै—न्यक्करणे । न्यङ्गविधान इत्येके कुत्सिताङ्गकरणं तत् । कर्मणि क्तः । प्रागवन्नत्वम् । **निद्रायदिति** । ६०६ द्रै-स्वप्ने । शता । **अघ्राणेति** । ६०७ घ्रै—तृप्तौ । कर्तरि क्तः। **धीरिति** ।६०८ध्यै—चिन्तायाम् । क्विपि'ध्याप्योः संप्रसारणम्'इतीत्वम्[1]॥३०॥

---

**(टि०) १** बाहुलकात् क्वनिपोऽन्यत्रापि क्वचिदनेनैव सिद्धे ध्यायतेरिति वार्तिकं नापूर्वमिति भावः ।

भगवद्दर्शनकौतुकेन जलादुन्मग्नस्यावस्थामाह—

**रायद्धयस्त्यानरुचौ रथेऽपि तं भक्तितिष्टचापयिषुं स दृष्ट्वा ।**
**खाताशयोऽक्षाममुदा पुनश्च मग्नोऽन्यथापश्यदजानमीशम् ॥ ३१॥**

रायद्धयेति **खाताशयः** स्थिरीभूतमनाः **स** अक्रूरः **रायद्धयस्त्यानरुचौ** रायद्भिः हेषाद्भिः हयैः अश्वैः स्त्याना प्रवृद्धा रुक् यस्य तस्मिन् **रथे अपि**शब्देन जलेपि **भक्तितिष्टचापयिषुम्** भक्तेः तिष्ठ्यापायिषुम् वर्धायितुमिच्छुम् **अजानम्** अजयम् नित्यमित्यर्थः तम् कृष्णाख्यम् **ईशं** परमेश्वरं **दृष्ट्वा** विलोक्य **अक्षाम मुदा** अक्षीणहर्षेण **पुनश्च** भूयोऽपि **मग्नः** जलान्तर्गतः सन् **अन्यथा** आकृत्यन्तरेण तम् **अपश्यत्** दृष्टवान् ॥ ३१ ॥

**रायदिति** । ९०९ रै शब्दे । शता । **स्त्यानेति** । ९१० स्त्यै—९११ ष्ट्यै—शब्दसंघातयोः । आद्यात् कर्तरि क्तः । नत्वम् । **तिष्टचापयिषुम्** । द्वितीया-णिजन्तात् सन्युः । 'स्तौतिण्योः'—(८ । ३ । ६१) इति षत्वम् । तदर्थमेव षोपदे-शस्य पाठः । **खातेति** । ९१२ खै—खदने । तच्च स्थैर्यहिंसे । 'खै—खनने' इत्येवेति शंकराचार्यः । तस्मात् कर्तरि क्तः । **अक्षामेति** । ९१३ त्रै—९१४ जै—९१५ षै—क्षये । क्षैधातोः कर्तरि क्ते 'क्षायो मः' (८ । २ । ५३) इति मत्वम् । **अजानम्** । जैधातोर्ल्युट् ॥ ३१ ॥

अन्यथेत्युक्तं रूपं वर्णयति—

**प्रसातकातर्यसुरोपगीतं पूज्यं श्रृताश्राणहविर्विशेषैः ।**
**अपातमाल्यं शयितं सुवानकाशत्विषि स्तातततौ फणीन्द्रे ॥ ३२ ॥**

**प्रसातेति** पुनः कीदृशम् **प्रसातकातर्यसुरोपगीतं** प्रसातकातर्यैः क्षीणभयैः सुरैः देवैः उपगीतम् स्तुतं **श्रृताश्राणहविर्विशेषैः** श्रृताश्राणैः पक्वा-पक्वैः हविर्विशेषैः पुरोडाशक्षीरादिभिः **पूज्यम्** अर्च्यम् **अपातमाल्यम्** अपातम् अशुष्कं माल्यं स्रक् यस्य तं "माल्यं मालास्रजा मूर्ध्नि" इत्यमरः । **सुवानकाशत्विषि**

सम्यक्शुष्ककाशस्तवकवच्चित्रं कान्तिर्यस्य तस्मिन् अतिश्वेते इत्यर्थः । **स्तातनौ** स्ताता वेष्टिता कुण्डलीकृता तनुः भोगो येन तस्मिन् **फणीन्द्रे** शेषनागे **शयितं** सुप्तम् ॥ ३२ ॥

**प्रसातेति** । सायतेः कर्तरि क्तः । **कातयेति** । ९१६ कै–९१७ गै–शब्दे । कायतेः 'काराभ्यान्तरन्' (उ०) इति भोजोक्ततरनि कातरः। तस्मात् ष्यञ्। **उपगीतमिति**। गायतेः शब्दविशेषार्थत्वात् सकर्मकात् कर्मणि क्तः । **श्रुतेति** ९१८ श्रै–९१९ स्रै–पाके । श्रायतेः 'शृतं पाके' (६।१।२७) इति निपातः । **अम्लाणेति** । म्लैधातोः कर्तरि क्ते यणवत्वान्नत्वम् । **अपातेति** । ९२० पै–९२१ ओ वै–शोषणे । पैधातोः कर्तरि क्तः । **सुवानेति** । वैधातोः प्राग्वत् क्तः । ओदित्वान्नत्वम् । **स्तातेति** । ९२२ ष्टै–वेष्टने । ९२३ ष्णै–इत्येके । ष्णै–शौचे इत्यन्ये । स्तैधातोः कर्तरि क्तः ॥३२॥

एतद्रूपं पश्यतोऽक्रूरस्य प्रवृत्तिमाह—

**स्नातावदातः स पिबंस्तदाभां जिघ्रन्सुगन्धं विधमन्नघानि ।**
**तिष्ठन्निहाम्नायगमिष्टदं तमस्तौत्स्फुटेनाहृतधीः स्वरेण ॥ ३३ ॥**

**स्नातेति अह्वृतधीः** अह्वृता अकुटिला धीः बुद्धिर्यस्य **सः** अक्रूरः **स्नातावदातः** स्नातश्चावदातश्च शुद्धः सन् "अवदातः सितं पीते शुद्धे च" इत्यमरः । **तदाभां** तस्य श्रीकृष्णस्य आभां कान्तिं **पिबन्** अतितृष्णया नेत्राभ्यां पश्यन्नित्यर्थः **सुगन्धं** शोभनगन्धं **जिघ्रन्** अनुभवन् **अघानि** पापानि **विधमन्** त्यजन् **इह** अस्मिन् स्थाने **तिष्ठन्** स्थितः सन् **आम्नायगं** वेदगतम् **इष्टदम्** इष्टम् अभिप्रेतं ददातीति तं **स्फुटेन** अव्यक्तेन **स्वरेण** शब्देन **अस्तौत्** स्तुतवान् ॥ ३३ ॥

**स्नातेति** । ष्णै-शौचे । कर्तरि क्तः । **अवदातः** । ९२४ दैप्-शोधने । पकारः 'अदाप्' इति सामान्यग्रहणार्थः । शोधनं शुद्धिः । अस्मात् कर्तरि क्तः । **पिबन्** । **जिघ्रन्** । **विधमन्** । **तिष्ठन्** । ९२५ पा-पाने । ९२६ घ्रा-गन्धोपादने । ९२७ ध्मा-शब्दाग्निसंयोगोः । इह शब्दः शब्दना । अग्निसंयोगश्च मुखवायुना लक्षणया विधूनने, संतापेन पूरणे च । ९२८ ष्ठा-गतिनिवृत्तौ । चतुर्णां शतरि 'पाघ्रा'–(७।३।७८) इत्यादिना पिबाद्यादेशाः । **आम्नायेति** । ९२९ म्ना–अभ्यासे । प्रायेणा-ङ्पूर्वः । कर्मणि घञ् । **इष्टदेति** । ९३० दाण्-दाने । 'पाघ्रा'–(७।३।७८) इत्यादिसूत्रे

दाणिति विशेषणार्थो णः। अस्मात् 'आतोऽनुपसर्गे कः' (३।२।३) अह्वृतेति। ९३१ ह्वृ-कौटिल्ये। कर्तरि क्तः। स्वरेणेति। ९३२ स्वृ-शब्दोपतापयोः। अस्मात् 'क्षुब्धस्वान्त'-(७।२।१८) इति सूत्रे स्वरेति निर्देशादच्॥ ३३॥

**स्मार्यं शुभद्वारमुपासरामि त्वत्पादमृच्छामि न मोहगर्तम्।**

**घृणाऽस्तु ते विध्वृतशूरदैत्यस्रुतास्रसिक्तायुध! विश्वसोतः! ॥३४॥**

**स्मार्यमिति** अहं **स्मार्यं** चिन्तनीयं **शुभद्वारं** शुभस्य मंगलस्य द्वारं प्राप्त्युपायभूतं **त्वत्पादं** भवच्चरणयुगलम् **उपासरामि** प्राप्नोमि। **मोहगर्तम्** अज्ञान श्वभ्रं "गर्तावटौ भुवि श्वभ्रे" इत्यमरः। **न ऋच्छामि** न प्राप्नोमि। (द्वयोः "आशंसायां भूतवच्च" (३।३।१३२) इति चकारात् प्रार्थनायां लट्) हे **विध्वृतशूरदैत्यस्रुतास्रसिक्तायुध**! विध्वृतेभ्यः हिंसितेभ्यः शूरदैत्येभ्यः रक्षोवीरेभ्यः स्रुतैः गलितैः अस्रैः रक्तैः सिक्तानि आर्द्रीकृतानि आयुधानि शस्त्राणि यस्य तत्सम्बुद्धौ **विश्वसोतः**! जगतस्तत्तत्कर्मसु अनुज्ञाकर्तः! ईश्वर! **ते** तव घृणा दया "कृपा दयाऽनु-कम्पा स्यात्कारुण्यं करुणा घृणा" इत्यमरः। मयि **अस्तु** भवतु॥ ३४॥

**स्मार्यमिति** ९३३ स्मृ-चिन्तायाम्। ण्यत्। **द्वारमिति**। ९३४ द्वृ[1]-वरणे इत्यप्येके। घञ्। **उपासरामि**। ९३५ सृ-गतौ। लट्। सर्तेर्धावादेशस्तु। द्रुतगतावेव। **ऋच्छामि**। ९३६ ऋ-गतिप्रापणयोः। लटि ऋच्छादेशः। **गर्तम्**। ९३७ गृ-९३८ घृ-सेचने। 'असिमृभिण्वाभिदलूपूधुर्विभ्यस्तन्' (उ०) इति कर्मणि तन्। तत्र गरतेरपि ग्रहणम्। **घृणा**। 'हूणभ्रूणस्थूणघृणादयः' (उ०) इति भोजोक्तेर्घरतेर्णः। **विध्वृतेति**। ९३९ ध्वृ-हूर्च्छने। कौटिल्यं तत्। हिंसार्थेऽप्यस्ति। कर्मणि क्तः। **शूरेति**। ९४० स्रु-गतौ। स्रुतौ च द्रुमे। शु-स्रु-गतावित्येके। 'शुसिचिमीनां दीर्घश्च'(उ०)इति क्रन्। **स्रुतेति**। स्रुधातोः कर्तरि क्तः। **सोतः**। ९४१ षु-प्रसवैश्वर्ययोः प्रसवोऽभ्यनुज्ञा तृच्॥ ३४॥

**श्रुत्यन्तवाचा ध्रुवया प्रदूनं घोरद्रवच्चक्रजिताञ्जितारिम्।**

**स्मितार्द्रवक्त्रं गवमानभूषं गै त्वां घृताशं कृतशङ्खघोषैः॥ ३५॥**

(टि०) १ ह्वृ–इति सि० कौ० पाठः।

**श्रुत्यन्तेति ध्रुवया** नित्यया **श्रुत्यन्तवाचा** उपनिषद्रूपहरिवाण्या **प्रदूनं** ज्ञातं **घोरद्रवच्चक्रजिताज्ञितारं** घोरं भयानकं यथा तथा द्रवता गच्छता चक्रेण जिता अभिभूता अज्ञिता अन्यैः अनभिभूता अरयो येन तं **स्मितार्द्रवक्त्रं** स्मितेन मन्द हासेन आर्द्रं स्निग्धं वक्त्रं मुखं यस्य तं **गवमानभूषं** गवमानाः शब्दायमानाः भूषा भूषणानि यस्य तं **कुतशङ्खघोषैः** कुतस्य शब्दायमानस्य शङ्खस्य घोषैः **घुताशं** शब्दितदिशं **त्वाम्** अहम् **गै** प्राप्तुम् प्रार्थय इत्यर्थः ॥ ३५ ॥

**श्रुतीति** । ६४२ श्रु-श्रवणे । 'श्रुयजीषिस्तुभ्यः करणे' इति क्तिन् । **ध्रुवया** ६४३ ध्रु-स्थैर्ये । बाहुलकात्कः । यद्वा 'ध्रुवमपाये' (१।४।२४) इति निर्देशात् साधुरिति माधवः । **प्रदूनम्** । ६४४ दु-६४५ द्रु-गतौ । दोः कर्मणि क्तः । 'दुग्वोर्दीर्घश्च' इतिनिष्ठानत्वदीर्घौ । **द्रवदिति** । द्रुधातोः शता । **जिताज्ञितेति** । ६४६ जि-६४७ ज्रि-अभिभवे । 'जि-ज्रि-अभिभवे' इति लीलाशुकः । जिज्र्योः कर्मणि क्तः । धयत्यादयोऽनुदात्ताः परस्मैभाषाः । **स्मितेति** । ६४८ ष्मिङ्-ईषद्धसने । नपुंसके भावे क्तः । **गवमानेति** । ६४६ गुङ्-अव्यक्त शब्दे । शानच् । **गै** इति । ६५० गाङ्-गतौ । लोट् । **घुत-कुतेति** ६५१ घुङ्-६५२ कुङ्-६५३ उङ्-६५४ दुङ्-शब्दे । कुङ्-अव्यक्तशब्दार्थ इति केचित् । द्वयोः कर्तरि क्तः ॥ ३५ ॥

**स्तोत्रावमानैर्दुतवेणुवीणैश्च्युताशुभैर्व्योमचरैर्ज्युतं ते ।**
**प्रवे भवाब्धिप्लवमारुतानां धूतामयं भक्तिनिमेयमङ्घ्रिम् ॥ ३६ ॥**

**स्तोत्रेति स्तोत्रावमानैः** स्तोत्रेण स्तुत्या अवमानैः शब्दायमानैः **दुतवेणुवीणैः** दुताः शब्दिता वेणवो वीणा च यैः तैः **च्युताशुभैः** च्युतं गलितम् अशुभम् अमङ्गलं येषां तैः **व्योमचरैः** व्योम्नि आकाशे चरन्तीति तैः देवैः **ज्युतं** प्राप्तम् **आरुतानाम्** प्राप्तानां **धूतामयम्** (अव) ध्वस्तपीडं **भवाब्धिप्लवं** संसारसमुद्रस्य प्लवम् उडुपम् "उडुपन्तु प्लवः कोलः" इत्यमरः । **भक्तिनिमेयम्** भक्त्या निमेयम् व्यत्यसनीयं भक्तिदानपूर्वं परिग्राह्यं सेवालभ्यामिति यावत् एवंभूतं **ते** तव **अङ्घ्रिं** चरणारविन्दं "पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः । अहं **प्रवे** प्राप्नोमीति प्रार्थना ॥ ३६ ॥

**अवमानैः** । उङ्धातोः शानच् । **दुतेति** । दुङः कर्तरि क्तः । **च्युतेति**

९५५ च्युङ्-९५६ ज्युङ्-९५७ प्रुङ्-९५८ प्लुङ्-गतौ । क्लुङ्-इति चैके । ऋुङ्-इति चान्ये । च्युङः कर्तरि क्तः । **ज्युतम्** । ज्युङः कर्मणि क्तः । **प्रवे** । प्रुङो लट् । **प्लवम्** । प्लुङः पचाद्यच् । **आरुतानम्** । ९५९ रुङ्-गतिरेषणयोः । रेषणं हिंसा । कर्तरि क्तः । **धृतेति** । ९६० धृङ्-अवध्वंसने । कर्तरि क्तः । **निमेयम्** । ९६१ मङ्-पूणिदाने । तच्च विनिमयः । पूत्यर्पणं वा । अचो यत् ॥ ३६ ॥

**दयस्व मां देव ! कृपाम्बुशीत! प्यानौजसा त्रातजगत्त्रयं त्वाम् ।**
**पूताखिलं मूतबलिं सुडीतौ तार्क्ष्ये स्थितं प्राप्य तरामि मायाम् ॥३७॥**

**दयस्वेति** हे **कृपाम्बुशीत** ! दयारूपेणाम्बुना जलेन शीतल ! **देव** ! दानादिगुणयुक्त ! **मां दयस्व** रक्ष **प्यानौजसा** पूवृद्धबलेन **त्रातजगत्त्रयं** त्रातं रक्षितं जगत्त्रयं भुवनत्रितयं येन तं **पूताखिलं** पूतं पवित्रीकृतम् अखिलं समस्तं येन त **मूतबलिं** मूतो बद्धो बलिर्दैत्यो येन तं **सुडीतौ** शोभनोत्पतने **तार्क्ष्ये** गरुडे "गरुडस्तार्क्ष्यः" इत्यमरः । **स्थितम्** उपविष्टं **त्वां प्राप्य** शरणं गत्वा **मायां** जगन्मोहिनीं प्रकृति **तरामि** पारयामि । मायावृतिर्मत्तोऽपैतु ते इति भावः ॥ ३७ ॥

**दयस्वेति** । ९६२ देङ्-रक्षणे । लोट् । **शीतेति** । ९६३ श्यैङ्-गतौ । कर्तरि क्तः । 'द्रवमूर्तिस्पर्शयोः श्यः' (६।१।२४) इति संप्रसारणम् । **प्यानेति** । ९६४ प्यैङ्-वृद्धौ । प्राग्वत् क्तः । यण्वत्वान्नत्वम् । **त्रातेति** । ९६५ त्रैङ्-पालने । कर्मणि क्तः । ष्मिङ्ङादयोऽनुदात्ता आत्मनभाषाः । **पूतेति** । ९६६ पूङ्-पवने । शोधनं तत् कर्मणि क्तः **मूतेति** । ९६७ मूङ्-बन्धने । प्राग्वत् क्तः **सुडीतौ** । ९६८ डीङ् विहायसा गतौ । क्तिन् । पूङादय उदात्ता आत्मनेभाषाः । **तरामि** । ९६९ तॄ-प्लवनतरणयोः । अभिभवे च द्रुमे । प्लवनं जलादावमङ्क्त्वा गमनम् । उदात्तः परस्मैभाषः अस्माल्लट् ॥ ३७ ॥

अहं त्वां प्राप्य मायां तरामीत्युक्तम् । तत्र त्वत्कृपां विना त्वत्प्राप्तिरपि दुर्लभेत्याह—

**जुगुप्सतेऽघाद्व्यसनं तितिक्षुर्मीमांसते ब्रह्म च यो दृढात्मा ।**
**स खल्वबीभत्सितवृत्तिरर्चां तवारभेतापि कृपां लभेत ॥ ३८ ॥**

**जुगुप्सते** इति **अबीभत्सितवृत्तिः** न बीभत्सितम् अन्येषां चित्तविकारो यस्यां

तादृशी वृत्तिर्व्यापारो यस्य स यः पुरुषः **अघात्** पापात् **जुगुप्सते** अघं निन्दति। व्यसनं दुःखं **तितिक्षुः** सहमानः **दृढात्मा** स्थिरमतिः **च** **ब्रह्म** औपनिषदं पुरुषं **मीमांसते** विचारयति। **स** **खलु** निश्चयेन **तव** **अर्चां** पूजाम् **आरभेत** कुर्यात् **कृपां** ते दयाम् **अपि** **लभेत** प्राप्नुयात् ॥ ३८ ॥

**जुगुप्सत** इति। ६७० गुप-गोपने ६७१ तिज-निशाने। ६७२ मान-पूजायाम् ६७३ बध-बन्धने। एषां क्रमात् निन्दायाम्, क्षमायाम्, पूजितविचारे, दुर्गन्धादिजचित्त-विकारे च सन्नुक्तः। नित्यसन्नन्तत्वसाधनाच्च धातोः पृथक्प्रयोगाभावात् गोपनाद्यर्थ-पाठो व्यर्थ इति हरदत्तादयः। 'गुप्तिज्किद्भ्यः सन्' ( ३।१।५ ) इति सन्। एषाम-नुदात्तेत्वात् सन्नन्तस्यापि तङ्। ईदृशात् गुपेर्लट्। **तितिक्षुरिति**। तिजेः सन्युप्रत्ययः। **मीमांसत** इति। मानेः 'मान्बध–' (३।१।६) इति सनि लट्। **अबीभत्सितेति**। बधेः सनि नपुंसके भावे क्तः। **आरभेत**। ६७४ रभ-राभस्ये। उपक्रमस्तत्। तत्रायं प्रायेणाङ्पूर्वः। **लभेत**। ६७५ डुलभष्-प्राप्तौ। द्वयोः संभावने लिङ् ॥ ३८ ॥

त्वत्कृपया जितेन्द्रियाणां त्वं सुलभ इत्याह—

**असक्तयोषैः पशुहन्नशुद्धदवेदन्मृगास्कन्नवनान्तवासैः।**
**याभाद्यकामैर्नमनाद्गताघैः सुप्योऽसि विष्णो! यमिभिर्वितापैः ॥ ३९ ॥**

**असक्तेति** हे **विष्णो**! कृष्ण! **असक्तयोषैः** अनालिङ्गतस्त्रीकैः **पशुहन्न-शुद्धदवेदन्मृगास्कन्नवनान्तवासैः** पशूनां गवादीनां हन्नेन पुरीषोत्सर्गेण शुद्धः पूतः तथा दवेदद्भिः अव्यक्तशब्दं कुर्वाणैः मृगैः अरण्यवासिभिः हिंस्रजीवैः अस्कन्नः अप्राप्तः न शुष्कोऽभिभूतो वा वनान्ते अरण्यमध्ये वासो येषां तैः **याभाद्यकामैः** याभादिषु मैथुनादिषु अकामैः अनिच्छुभिः **नमनाद्** हरौ प्रह्वीभवनात् **गताघैः** निष्पापैः **वितापैः** तापत्रयराहितैः **यमिभिः** "अहिंसास्तेयब्रह्मचर्य्यापरिग्रहाः यमाः" तद्युक्तैः तपस्विजनैः त्वं **सुप्यः** प्राप्योऽसि ॥ ३९ ॥

**असक्तेति**। ६७६ षञ्ज-परिष्वङ्गे। कर्मणि क्तः। **हन्नेति**। ६७७ हद-पुरीषोत्सर्गे। 'नपुंसके भावे क्तः' ( ३।३।११४ )। रभादयोऽनुदात्ता अनुदात्तेतः। **दवेददिति**। ६७८ ञिदिवदा[1]-अव्यक्ते शब्दे। उदात्त उदात्तेत्। शता। **अस्कन्नेति** ६७९ स्कन्दिर्-गतिशोषणयोः। कर्मणि क्तः। **याभेति**। ६८० यभ विपरीते मैथुने। तच्च पुरुषायितम्। यभ-मैथुने इत्येवैके। घञ्। **नमनात्**। ६८१ णम-महत्वे।

(टि०) १ ञिष्विदेति भट्टोजिसम्मतः पाठः।

शब्दे च दुमे । ल्युट् । गतेति । ६८२ गम्लृ-६८३ सृप्लृ-गतौ । गमेः कर्तरि क्तः सृप्यः । सृपेः 'ऋदुपधाद्' (३।१।११०)इति क्यप् । यमिभिः । ६८४ यम-उपरमे । उदिदिति केचित् । 'यमः समुपनिविषु च' ( ३।३।६३ ) इति अवन्तान्मत्वर्थीय इनिः । वितापैः । ६८५ तप-संतापे । घञ् ॥ ३९ ॥

अक्रूरस्य कृत्यशेषमाह—

**त्यक्तार्तिरेवं तमसङ्गचेताः स्तुवन्नदृष्ट्वा च पुनः क्षणात्तम् ।**
**कृत्वा स कृत्यं दशनांशुगौरं कृष्णं ययौ दैत्यनिदाघमेघम् ॥ ४० ॥**

**त्यक्तार्तिरिति** त्यक्तार्तिः त्यक्ता पृथक्कृता अर्तिः पीडा येन सः **असङ्गचेता** असङ्गं कुत्राप्यलग्नं चेतः हृदयं यस्य **सः** अक्रूरः **एवम्** उक्तप्रकारेण **तं** श्रीकृष्णं **स्तुवन्** स्तुतिं कुर्वन् **पुनः** भूयः **क्षणात् तं** श्रीकृष्णं विलक्षणरूपम् **अदृष्ट्वा** न अवलोक्य **च कृत्यम्** अवश्यं करणीयं सन्ध्यादिकं **कृत्वा** विधाय **दशनांशुगौरं** दन्तकिरणैः सितीकृतस्वरूपं **दैत्यनिदाघमेघं** दैत्यरूपस्य निदाघस्य उष्णोपगमस्य "निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः" इत्यमरः । मेघं तन्नाशकवारिदस्वरूपं **कृष्णं ययौ** प्राप्तवान् ( मीलितं परम्परितरूपकञ्चालङ्कारोत्र ) ॥ ४० ॥

**त्यक्तेति** । ६८६ त्यज-हानौ । कर्मणि क्तः । **असङ्गेति** । ६८७ षन्ज-सङ्गे । घञ् । **अदृष्ट्वा** । ६८८ दृशिर्-प्रेक्षणे क्त्वा । **दशनेति** । ६८९ दन्श—दशने 'दशनशब्देन दन्तार्थेन तत्क्रिया लक्ष्यते । 'दंशेः करणे ल्युटि नलोपो वाच्यः' इति नलोपः । **कृष्णमिति** ६९० कृष-विलेखने । विलेखनमिह्याकर्षणम् । 'कृषेर्वर्णे' (उ०) इति नक् । **निदाघेति** । ६९१ दह-भस्मीकरणे । घञि । न्यङ्क्वादित्वात्कुत्वम् । **मेघमिति** ।६९२ मिह-सेचने । अचि प्राग्वत् कुः । स्कन्दादयोऽनुदात्ता उदात्तेतः ॥४०॥

भगवतोऽक्रूरानुग्रहमाह—

**मोहं चिकित्सन्वचसास्य कृष्णो दीदांसुचित्तस्य सुविस्मितस्य ।**
**जगाम शीशांसितशस्त्रहस्तैर्गोपैः सहाऽसौ परिपक्वपुण्यैः ॥४१॥**

**मोहमिति** । **असौ कृष्णः** वासुदेवः **दीदांसुचित्तस्य** दीदांसु ऋजुभवनशीलं चित्तं यस्य तस्य **सुविस्मितस्य** अतिचकितस्य **अस्य** अक्रूरस्य **मोहम्** अज्ञानं चित्तविभ्रमं **वचसा** गिरा **चिकित्सन्** अपनयन् **शीशांसितशस्त्रहस्तैः** शीशांसितानि तीक्ष्णीकृतानि शस्त्राणि हस्तेषु येषां तैः **परिपक्वपुण्यैः** परिपक्वानि परिणतानि पुण्यानि सुकृतानि येषां तैः **गोपैः** वल्लवैः **सह** सार्धम् **जगाम** प्रचालितः ॥४१॥

**चिकित्सन्निति** । ९९३ कित-निवासे रोगापनयने च । अयमुदात्तेत् । सन्नन्तः । उदात्तेत्वात् सन्नन्तस्य परस्मैपदमेव अत्र निवासार्थो व्यर्थः । रोगापनयने हि सन्नुच्यते । संशयनिग्रहापनयनाशनादयश्चास्यार्थाः । अस्मात् 'गुप्तिज्किद्भ्यः' (३।१।५) इति सनि शता । **दीदांसु** इति । ९९४ दान-अवखण्डने । ९९५ शान-तेजने । इमावपि नित्यसन्नन्तौ स्वरितेतौ । दानेरार्जवे सन्नुक्तेः अवखण्डनोक्तिर्व्यर्था । दानेः 'मान्बध—' (३।१।६) इति सनि उः । **शीशांसितेति** । शानेः निशातने प्राग्वत्सनि कर्मणि क्तः । **परिपक्वेति** । ९९६ डु पचष्-पाके । कर्तरि क्तः । 'पचो वः' (८।२।५२) इति निष्ठावत्वम् ॥ ४१ ॥

**ते संसचन्तो धृतभक्तिरागाः कृष्णेन कंसं मनसा शपन्तः ।**
**त्वेषन्मुखा इष्टिनिवापहीनां कष्टां पुरीं प्रापुरुदूढदर्पाः ॥४२॥**

ते इति । **धृतभक्तिरागाः** धृतो मनसि निहितः भक्तिरागो हरिभजनप्रेमा यैः ते **कंसं** तदाख्यभूपं **मनसा** हृदा **शपन्तः** आक्रोशन्तः **त्वेषन्मुखाः** त्वेषत् दीप्यमानं मुखम् आस्यं येषां ते **उदूढदर्पाः** उदूढः प्राप्तः दर्पो गर्वो यान् **ते** गोपाः **कृष्णेन** भगवता सह **संचरन्तः** संगच्छमानाः सन्तः **इष्टिनिवापहीनाम्** इष्टिः देवपूजा निवापः पितृदानम् "पितृदानं निवापः स्यात्",इत्यमरः । ताभ्यां हीनां रहिताम् अत एव **कष्टां** क्लेशजनिकां **पुरीं** मधुरां **प्रापुः** प्राप्तवन्तः ॥ ४२ ॥

**संसचन्त** इति । ९९७ षच-समवाये । स च संबन्धः । शता । **भक्तीति** । ९९८ भज-सेवायाम् । विभजने च द्रुमे । क्तिन् । **रागेति** । ९९९ रन्ज-रागे । घञ् 'घञि च भावकरणयोः (६।४।२७) इति नलोपः । **शपन्तः** । १०००शप-आक्रोशे । शता । **त्वेषदिति** । १००१ त्विष-दीप्तौ । शता **इष्टीति** । १००२ यज-देवपूजासंगतिकरणदानेषु । क्तिन् । 'वचिस्वपि'—(६।१।१५)इति संप्रसारणम् । **निवापेति** । १००३ डुवप्-बीजसंताने । तच्च क्षेत्रे बीजानां विकरणम् । अयं केशखण्डनेऽपि । निपूर्वत्वात् पितृक्रियार्थता । घञ् । **उदूढेति** । १००४ वह-प्रापणे । कर्मणि क्तः । यजादित्वात् संप्रसारणम् । पचादयोऽनुदात्ताः स्वरितेतः । पचिस्तूदात्तः ॥ ४२ ॥

**ततो निवत्स्यन्दिवसोर्ध्वभागे चारूतकीर्त्यम्बरवीतलोकः ।**
**हरिः समाहूय वदन्सहायान्पुरस्य बाह्योपवनं शुशाव ॥ ४३ ॥**

तत इति **ततः** तदनन्तरं **दिवसोर्ध्वभागे** मध्याह्नोत्तरं **निवत्स्यन्** ।

निवासं करिष्यन् **चारूतकीर्त्यम्बरवीतलोकः** चारु शोभनं यथा तथा उतेन विस्तारितेन कीर्त्यम्बरेण यशोरूपेण वस्त्रेण वीतः छादितः लोको येन स **हरिः** श्रीकृष्णः **सहायान्** अनुचरान् गोपबालान् **समाहूय** शब्दयित्वा **वदन्** ब्रुवन् सन् **पुरस्य** नगरस्य **बाह्योपवनं** बाह्यं बहिर्भवम् उपवनम् आरामं **शुशाव** प्राप ॥ ४३ ॥

**निवत्स्यन्**निति । १००५ वस–निवासे । अनुदात्त उदात्तेत् । 'लृटः सद्वा' ( ३ । ३ । १४ ) इति शता । **उतेति** । १००६ वेञ्–तन्तुसंताने । व्याप्तौ छादने चाह भट्टिः । कर्मणि क्तः । **वीतेति** । १००७ व्येञ्–संवरणे । प्राग्वत् क्तः । **समाहूय** । १००८ह्वेञ् स्पर्धायां शब्दे च । शब्दः शब्दनं चाह्वानम् । ल्यप् । वेञादयोऽनुदात्ता उभयतोभाषाः । **वदन्** । १००९ वद–व्यक्तायां वाचि । उदात्त उदात्तेत् । शता । **शुशावे**ति । १०१० टु ओश्वि–गतिवृद्ध्योः । उदात्तः परस्मैभाषः लिट् । 'लिट्यभ्यासस्योभयेषाम्' ( ६ । १ । १७ ) इति संप्रसारणम् । वृत् । यजादयो वृत्ताः । भ्वादयस्त्ववृत्कृताः । तेन चुलुम्पादीनां शप्सिद्धिः । शब्विकरणभ्वादयो गताः ॥ ४३ ॥

अथ मधुरोपवनप्राप्त्यनन्तरं राजमार्गयानादितद्दिनशेषभाविनीमवस्थामाह—

**अदन्मधुघ्नो द्विषते विसृज्य श्वफल्कजं विश्वमुदं दुहानः ।**
**मालेयदिग्धो जनदृष्टिलेह्यश्चक्षीमहीमां पुरमित्युपैत् ॥ ४४ ॥**

**अदन्निति** **मधुघ्नः** मधोः दैत्यस्य हन्ता श्रीकृष्णः **अदन्** पाथेयं भक्षयन् सन् **श्वफल्कजं** अक्रूरं **द्विषते** द्विषन्तं शत्रुं बोधयितुं **विसृज्य** प्रेष्य ( क्रियार्थोपपदस्येति चतुर्थी ) **मालेयदिग्धः** मलये भवं मालेयं चन्दनं तेन दिग्धः लिप्तः अत एव **जनदृष्टिलेह्यः** जनानां लोकानां दृष्टिभिः नेत्रैः लेह्यः आस्वाद्यः दृश्य इति यावत् अत एव **विश्वमुदं** विश्वेषां सर्वेषां मुदं हर्षं **दुहानः** पूरयन् वयम् **इमां पुरं** मथुराख्यां **चक्षीमहि** पश्येम **इति** एवं विचिन्त्य उक्त्वा वा आदाय च तान् सह **उपैत्** उपागच्छत् । काव्यलिङ्गमलङ्कारः ॥ ४४ ॥

**अदन्निति** । १०११ अद–भक्षणे । 'न्यत्यदन्ति वृका मेषान्' इत्यादौ हिंसार्थोऽपि । अस्माच्छता । **मधुघ्न** इति । १०१२ हन–हिंसागत्योः । 'अमनुष्य कर्तृके च' ( ( ३ । २ । ५३ ) इति टक् । अनुदात्तावुदात्तेतौ । **द्विषते** । १०१३ द्विष–अप्रीतौ । शता । **दुहानः** । १०१४ दुह–प्रपूरणे । प्रपूरणं पात्रादिपूरणार्थं

ज्ञारणम् । तस्मात् शानच् । **दिग्ध** इति । १०१५ दिह–उपचये । उपचयो लेपनम् । कर्मणि क्तः । **लेह्य** इति । १०१६ लिह–आस्वादने । ण्यत् । द्विषादयोऽनुदात्ताः स्वरितेतः । **चक्षीमहि** । १०१७ चक्षिङ्–व्यक्तायां वाचि । तत्र प्रायेणाङ्पूर्वोऽयं दर्शनार्थोऽपि । निमन्त्रणे लिङ् । **उपैतं** १०१८ ईर–गतौ । कम्पने च क्रमे । अस्माल्लङ् ॥ ४४ ॥

पुरावलोकनव्याजेन भक्तानुग्रहार्थं प्रस्थितस्य तस्य प्रवृत्तिमाह—

**ईड्योऽयमीशः समुपास्तिशीलैराशासितः पीतपटीं वसानः ।**
**स्वीयैश्चकंसे कशनीयकासी रमोष्ठनिंसी नतचित्तनिञ्जी ॥४५॥**

**ईड्य** इति । **ईड्यः** स्तुत्यः **समुपास्तिशीलैः** समीचीनाम् उपास्तिं ध्यानं शीलयन्ति अभ्यस्यन्ति ये तैः **आशासित** इष्टः ( आङः शासु–इच्छायाम् ) **पीत पटीं** पीतवसनं **वसानः** धारयन् सन् **कशनीयकासी** कशनीयान् शाशनीयान् कासितुं शासितुं शीलं यस्य सः **रमोष्ठनिंसी** रमायाः लक्ष्म्याः ओष्ठम् अधरम् "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः । निंसितु चुम्बितुं शीलं यस्य सः **नत चित्तनिञ्जी** नतानां नम्राणां चित्तम् हृदयं निञ्जयितुं शोधयितुं शीलं यस्य सः **अयम् ईशः** श्रीकृष्णः **स्वीयैः** निजैः जनैः सह **चकंसे** विचरितवान् ॥ ४५ ॥

**ईड्य** इति । १०१९ ईड-स्तुतौ । ण्यत् । **ईश** इति । १०२० ईश-ऐश्वर्ये । पचाद्यचि ईशः । **समुपास्तीति** । १०२१ आस-उपवेशने । उपपूर्वत्वात् सेवार्थत्वम् । क्तिन् । **आशासितः** । १०२२ आङ् शास-इच्छायाम् । उदिदित्येके । कर्मणि क्तः । **वसानः** । १०२३ वस-आच्छादने । शानच् । **चकंसे** । १०२४ कसि-गतिशासनयोः कशेत्येके । कसेत्यन्ये । कंसेर्लिट् । **कशनीयकासी** । कशेरनीयर् । कसेर्णिनिः । **रमोष्ठनिंसी** । १०२५ णिसि-चुम्बने । णिनिः । **चित्तनिञ्जी** । १०२६ णिजि-शुद्धौ । अस्माण्णयन्ताण्णिनिः ॥ ४५ ॥

भगवद्दर्शनेन पौराणां स्वस्ववासनानुरूपं विकारं वक्तुमाह—

**शिञ्जानपिञ्जानसुवर्णभूषासंपृञ्जितो वृज्यविवृञ्जिसेव्यः ।**
**पृक्ताग्रजः पृञ्जितगोपसूनुर्दृष्टोऽब्धिशायी स जनैर्युवद्भिः ॥ ४६ ॥**

**शिञ्जानेति** **शिञ्जानपिञ्जानसुवर्णभूषासंपृञ्जितः** शिञ्जानाभिः

अव्यक्तशब्दं कुर्वाणाभिः पिञ्जनाभिः पिङ्गलीभवित्रीभिः सुवर्णभूषाभिः हेमालङ्करणैः सम्पृञ्जितः पिङ्गलीभूतः। **वृज्यविवृञ्जिसेव्यः** वर्जनीयवर्जनशीलैः सद्भिः सेव्यः आश्रयणीयः **पृक्ताग्रजः** पृक्तः संयुक्तः अग्रजः बलभद्रः येन स **पृञ्जितगोपसुनुः** गोपबालैः संयुक्तः **अब्धिशायी** अब्धौ शेते इति क्षीरोदशायीत्यर्थः सः श्रीकृष्णः **युवद्भिः** कौतुकदर्शनार्थं तत्र मिश्रीभवद्भिः **जनैः** नागरिकलोकैः **दृष्टः** अवलोकितः अभूत्। योऽब्धिशायी स कथं तत्र तत्र दृष्टः इति विरोधः। य एवाब्धिशायी स एवासाववतीर्य मनुजरूपस्तत्रागतो जनैः दृष्टः इति न सः (इति विरोधाभासः) ॥४६॥

**शिञ्जानपिञ्जाने**ति। १०२७ शिजि-अव्यक्ते शब्दे। १०२८ पिजि वर्णे। पिङ्गलत्वं तत्। संपर्चन इत्येके। अवयव इत्यन्ये। अव्यक्ते शब्द इत्यपरे। पृजि इत्यप्येके। शिञ्जिपिञ्ज्योः शानच्। पृञ्जेः कर्तरि क्तः। **वृज्यविवृञ्जी**ति।१०२९ वृजि वर्जने। इदिदिति केचित्। तस्मात् क्यप्। इदित्वपक्षे णिनिः। **पृक्ते**ति। **पृञ्जिते**ति। १०३० पृजी संपर्चने। इदिदिति केचित्। द्वयोः कर्मणि क्तः। ईरादय उदात्ता अनुदात्तेतः। **सूनुः**।१०३१ षूङ्-प्राणिगर्भविमोचने।'सुवः कित्'(उ०) इति नुः।**अब्धिशायी**। १०३२ शीङ्-स्वप्ने। उदात्तावात्मनेभाषौ। शीङो णिनिः।**युवद्भिः**। १०३३ यु-मिश्रणे। अमिश्रणेऽप्येके। शता ॥ ४६ ॥

अत्यन्तभक्तानामवस्थामाह—

**केऽप्यल्परावं नुनुवुः खलेषु क्षुरक्ष्णुतात्मानममुं स्नुतास्राः।**
**सोऽनूर्णुतोऽद्यौज्जनसुत्कुवत्या काञ्च्येव कामं स्तुवतां ब्रुवाणः॥४७**

**केऽपी**ति **केऽपि** अमेयभाग्या जनाः **स्नुतास्राः** स्नुतो भक्त्यार्द्रहृदयतया स्नुताः प्रस्नुता अस्रा वाष्पप्रवाहाः येषां ते तादृशाः सन्तः **खलेषु** दुष्टेषु **क्षुरक्ष्णुतात्मानं** क्षुरवत्क्ष्णुतः तेजितः तीक्ष्णः आत्मा मनो यस्य "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि चित्ते धृतौ च बुद्धौ च परव्यावर्तनेपि च" इति धरणिः। तम् **अमुं** कृष्णम् **अल्परावं** स्नुतास्रतया गद्गदत्वेनाऽल्पो मन्दो रावः शब्दो यस्मिन् कर्म्मणि तद्यथा तथा **नुनुवुः** तुष्टुवुः। **अनूर्णुतः** अनाच्छादितः **जनसुत्** जनान् तत्तत्कर्मसु सौति प्रेरयतीति **सः** श्रीकृष्णः **कुवत्या** शब्दायमानया क्वणन्त्या **काञ्च्या** रशनया **स्तुवतां** स्तुतिं कुर्वतां जनानां **कामम्** इष्टं वो भवतु इति **ब्रुवाणः** व्यक्तं भाषमाण **इव** सन् **अद्यौत्** तेषाम् आभिमुख्यम् अगच्छत्। अत्र उत्प्रेक्षालङ्कारः ॥ ४७ ॥

रावमिति। १०३४ रु–शब्दे। 'कृत्यल्युटो बहुलम्' (३।३।११३) इति बाहुलकात् घञ्। नुनुवुः। १०३५ णु–स्तुतौ। लिट्। क्षुरेति। १०३६—टुक्षु–शब्दे। 'ऋज्रेन्द्र'(उ० इत्यादिना रनि निपातितः। क्षौति वपनकाले क्षदिति स्वनतीति क्षुरः। क्ष्णुतेति! १०३७ क्ष्णु–तेजने। कर्मणि क्तः। स्नुतेति। १०३८ ष्णु—प्रस्रवणे। कर्तरि क्तः। यौत्यादय उदात्ताः परस्मैभाषाः। अनूर्णुत इति। १०३९ ऊर्णुञ्–छादने। उदात्त उभयतोभाषः। कर्तरि क्तः। 'वाच्य ऊर्णोर्णुवद्भावः' इति णुधातुवदेकाच्त्वादनिट्त्वम्। अद्यौत्। १०४० द्यु–अभिगमने। लङ्। 'उतो वृद्धिः' (७।३।८९) इति वृद्धिः। जनसुत्। १०४१ षु–प्रसवैश्वर्ययोः। प्रसवोऽनुज्ञा। 'या पीडां श्रवसापि सौति महतीमौत्सुक्यदुःखासिकाम्' इति प्रयोगादुत्पादनमपि प्रसवः। तस्मात् क्विप्। कुवत्या। १०४२ कु–शब्दे। शतरि ङीप्। अनुदात्ताः परस्मैभाषाः। स्तुवताम्। १०४३ ष्टुञ्–स्तुतौ। शता। ब्रुवाणः। १०४४ ब्रूञ्–व्यक्तायां वाचि। शानच्। अनुदात्तावुभयतोभाषौ ॥ ४७ ॥

पुरान्तर्भागं गतस्य राजमार्गप्राप्त्या सर्वसुकृतिजनानुग्रहमाह—

**इत्यः स्वधीतोपनिषद्भिरेषामधीत्यरूपः स वियन्क्रमेण।**
**इयज्जनं राजपथं समायाद्वाताकुलोद्भातपताकमीशः ॥४८॥**

इत्य इति। स्वधीतोपनिषद्भिः सुष्ठु अधीता पठिता उपनिषदः वेदान्तरहस्यानि यैः तैः इत्यः स्तुत्या प्राप्तुं शक्यः एषां ज्ञानिनाम् अधीत्यरूपः अधीत्यं ध्यातव्यं रूपं यस्य सः ईशः श्रीकृष्णः वियन् क्रमेण आनुपूर्व्येण संचरन् इयज्जनम् इयन्तः इतस्ततो गच्छन्तः जना यस्मिन् तं वाताकुलोद्भातपताकं वातेन वायुना आकुला चलन्त्यः अत एव उद्भाताः शोभमानाः पताकाः वैजयन्तिकाः यस्मिन् तं राजपथं राजमार्गं समायात् प्राप ॥ ४८ ॥

इत्य इति। १०४५ इण्–गतौ। 'एतिस्तु–' (३।१।१०९) इति क्यप्। स्वधीतेति। १०४६ इङ्–अध्ययने। कर्मणि क्तः। अधीत्येति। १०४७ इक्–स्मरणे 'इणवदिकः इति वाच्यम्' इति क्यप्। वियन्। १०४८ वी–गतिव्याप्तिप्रजनकान्त्यसनखादनेषु। जन्मोपक्रमत्वात् गर्भग्रहणं प्रजनः। शता। इयादिति। वी ई इति प्रश्लेषादीधातोः शता। समायात्। १०४९ या–प्रापणे। इह प्रापणं गतिः। लङ्। वातेति १०५० वा–गतिगन्धनयोः। 'गन्धनं सौरभ्यकरणम्' इति सहस्रनामभाष्ये। 'अर्दनं

हिंसनं च गन्धनम्' इति लालाशुकः। उन्द्राते ते । १०५१ भा-दाप्तौ। द्वयोः कर्तरि क्तः ॥ ४८ ॥

भगवद्दर्शनेनोत्सुकानां नारीणामवस्थामाह चतुर्दशभिः—

स्नान्त्यस्तदा श्राणमुपाश्य चान्नं निद्रां गताः प्सातिपरास्तथान्याः ।
पान्त्यः शिशून्धान्यधनानि रान्त्यो लान्त्यश्च काश्चित्कुसुमानि दान्त्यः ॥४९॥
ख्यान्त्यः कथाः प्राणमुदां पतीनां निर्मान्त्य इष्टानि चटून्वचत्यः ।
नार्यो विदित्वोपगमं मुरारेरासन्गता राजपथं सुमृष्टम् ॥ ५० ॥

स्नान्त्य इति काश्चित् नार्यः स्त्रियः स्नान्त्यः स्नानं कुर्वन्त्यः अन्याः श्राणं पक्वम् अन्नं भक्तम् उपाश्य भुक्त्वा निद्रां गताः सुप्ताः तथाऽपराः प्सातिपराः भोजनतत्पराः शिशून् बालान् पान्त्यः रक्षन्त्यः धान्यधनानि धान्यानि अन्नकणरूपाणि धनानि वसूनि च रान्त्यः तत्तज्जनेभ्यो यच्छन्त्यः । तथा लान्त्यः तान्येव तेभ्यः आददानाश्च काश्चित् कुसुमानि पुष्पाणि दान्त्यः लुनन्त्यः कथाः हरिचरितवार्ताः ख्यान्त्यः कथयन्त्यः प्राणमुदां प्राणा पूर्णा मुत् हर्षो येषां तेषां पतीनां भर्तॄणाम् इष्टानि अभिलषितानि निर्मान्त्यः कुर्वाणाः चटून् प्रियवाक्यानि वचत्यः भाषमाणाश्च सत्यः "अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याभिकत्थनम्" इत्यमरः । मुरारेः श्रीकृष्णस्य उपगमं समीपे आगमनं विदित्वा ज्ञात्वा सुमृष्टं सम्यक् शोधितम् राजपथं नृपमार्गं गताः आसन् प्राप्तवत्यः ॥ ४९ ॥ ५० ॥

स्नान्त्य इति १०५२ ष्णा-शौचे । शतरि ङीप् । 'आच्छीनद्योर्नुम्' (७।१।८०) इति नुम् । श्राणम् । १०५३ श्रा-पाके । पाकोऽत्र विक्लित्तिः । कर्तरि क्ते यणवत्वान्नत्वम् । निद्राम् । १०५४ द्रा-कुत्सायां गतौ । सा च पलायनस्वापौ । स्वपिः निपूर्वः । 'आतश्चोपसर्गे' (३।३।१०६) इत्यङ् । प्साति । १०५५ प्सा-भक्षणे । क्तिन् । पान्त्यः । रान्त्यः । लान्त्यः । दान्त्यः । ख्यान्त्यः । १०५६ पा-रक्षणे । १०५७ रा-दाने । १०५८ ला-आदाने । द्वावपि दानार्थावित्येके । १०५९ दाप्-लवने । १०६० ख्या-प्रकथने । क्ष्णा इत्यपि केचित् । एभ्यः शतरि ङीप् । प्राणेति । १०६१ प्रा-पूरणे । कर्तरि क्ते नत्वम् । निर्मान्त्यः । १०६२ मा-माने । मानमिहान्तर्भावः । निष्पूर्वत्वादर्थभेदः । शतरि ङीप् । वचत्यः । १०६३ वच-परिभाषणे । शतरि ङीपि सत्यकाराभावाद् 'आच्छीनद्योः' (७।१।८०) इति नुम् न । इणादयोऽनुदात्ताः परस्मै-

भाषाः । इङ् त्वात्मनेपदी । विदित्वा । १०६४ विद-ज्ञाने । क्त्वा । आसन् । १०६५ अस-भुवि । लङ् । सुमृष्टम् । १०६६ मृजू-शुद्धौ । शोधना सा । कर्मणि क्तः ॥ ४६ ॥ ५० ॥

विलम्बहेतोः समरोददन्या विलोक्य सुप्ता इव तस्थुरन्याः ।
उद्श्वसन्प्राणमिवाप्य काश्चिद्दृष्ट्वा सलीलं मृदु जक्षतं तम् ॥ ५१ ॥

विलम्बेति अन्या नारी मृदु मन्दं जक्षतं हसन्तं तं श्रीकृष्णं सलीलं हावभावसहितं यथा तथा विलोक्य दृष्ट्वा विलम्बहेतोः पूर्वमेव दर्शनाभावेन हेतुना समरोदत् रोदितिस्म । अन्याः अपराः नार्यः दृष्ट्वा समीक्ष्य सुप्ताः शयिता इव तस्थुः स्थितवत्यः ( इत्युत्प्रेक्षा ) काश्चित् योषितः प्राणं जीवितम् आप्य लब्ध्वा इव उद्श्वसन् उच्छ्वासम् अकुर्वन् ( इत्यप्युत्प्रेक्षा ) ॥ ५१ ॥

समरोददिति । १०६७ रुदिर्-अश्रुविमोचने । लङि 'अड् गार्ग्यगालवयोः' ( ७ । ३ । ९९ ) इत्यडागमः । विदादय उदात्ताः उदात्ततः । सुप्ताः । १०६८ ञि+ष्वप्-शये । 'हलन्त्यम्' ( १ । ३ । ३ ) इतीत्त्वप्रसङ्गात् 'ञि ष्वप् शये' इत्यपपाठः । अस्मात् कर्तरि क्त 'वचिस्वपि-' ( ६ । १ । १५ ) इत्युत्वम् । उद्श्वसन् । १०६९ श्वस-प्राणने । लङ् । प्राणम् । १०७० अन-च । प्रपूर्वत्वाल्ल्युट्[1] । जक्षतम् । १०७१ जक्ष-भक्षहसनयोः । शतरि 'नाभ्यस्ताच्छतुः' (७।१।७८) इति नुमभावः । रुदादिपञ्चकं गतम् ॥ ५१ ॥

तं जाग्रतं दीनदरिद्रपोषे चकासतं शासतमप्रशान्तान् ।
देवं स्फुरद्दीधितिमम्बुजाक्ष्यो वेव्यानमालोक्य विमोहमापुः ॥ ५२ ॥

तमिति अम्बुजाक्ष्यः कमलनयनाः ताः नार्यः दीनदरिद्रपोषे दीनानाम् अनाथानां दरिद्राणां निर्धनानां च पोषे पोषणे जाग्रतम् क्षीणनिद्रं सप्रयत्नमित्यर्थः चकासतं स्वतः एव दीप्यमानम् अप्रशान्तान् दुष्प्रकृतीन् शासतं शिक्षयन्तं स्फुरद्दीधितिं प्रसरन्मरीचिं वेव्यानं गच्छन्तं तं श्रीकृष्णं देवं दानादिगुणयुक्तम् आलोक्य दृष्ट्वा विमोहं वैचित्र्यम् आपुः प्राप्तवत्यः ॥ ५२ ॥

(टि०) १ ल्युटि तु प्राणनमिति भवेदतो ल्युडर्थे घञिति सुपठम् ।

**जाग्रतमिति** । १०७२ जागृ–निद्राक्षये । शता । **दरिद्रेति** । १०७३ दरिद्रा–दुर्गतौ । कः । **चकासतम्** । १०७४ चकासृ–दीप्तौ । **शासतम्** । शासु–अनुशिष्टौ । विविच्य ज्ञापनं तत् । द्वयोः शता । प्राग्वन्नुमभावः । श्वसादय उदात्ताः परस्मैभाषाः । **दीधितिम्** । १०७६ दीधीङ्–दीप्तिदेवनयोः । देवनं क्रीडाविजिगीषादि । अस्मात् क्तिनि ग्रहादित्वादिट् । **वेव्यानम्** । १०७७ वेवीङ्–वेतिना तुल्ये । 'वी–गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' (पृ० १९९ पं० २४) इत्युक्तेन वेतिना तुल्येऽर्थे इत्यर्थः । अस्माच्छानच् ॥ ५२ ॥

**कदा न्वहं सस्मि समं रतान्ते प्रसंस्ततानेन वशानुगेन ।**

**इत्यादि संबोभुवतोऽभिलाषांस्ता निन्हुवाना ददृशुस्तमीशम् ॥५३॥**

**कदेति ताः** नार्यः **अहं रतान्ते** मैथुनावसाने **प्रसंस्तता** निद्रागतेन **वशानुगेन** स्वाधीनतां प्राप्तेन **अनेन** श्रीकृष्णेन **समं** सह **कदा नु** कस्मिन् काले **सस्मि** स्वपिमि । **इत्यादि सम्बोभुवतः** ईदृशादि अहमहमिकया पुनः पुनर्जायमानान् **अभिलाषान् निन्हुवानाः** छादयन्त्यः सत्यः **तम् ईशं** श्रीकृष्णं **ददृशुः** दृष्टवत्यः ॥५३॥

**सस्मीति** । १०७८ षस-१०७९ संस्ति-स्वप्ने । ससेर्लट् **प्रसंस्तता** । सस्तेः शता । इदित्वात् सकारात्पूर्वं नुम् । **वशेति** १०८० वश-कान्तौ । कान्तिरिच्छा । 'वशिरण्योरुपसंख्यानम्' इत्यप् । षसादय उदात्ता उदात्तेतः । **संबोभुवत** इति । १०८१ 'चर्करीतं च' इति भुवो यङ्लुकि शप्लुक् परस्मैपदे ततः शता । **निन्हुवानाः** । १०८२ न्हुङ्-अपन्हवे[2] । शानच् । अनुदात्त आत्मनेभाषः । लुग्विकरणं समाप्तम् ॥५३॥

एवं रागाकुलासु स्त्रीषु भगवतो वृत्तिमाह–

**जुह्वत्प्रियो भीरुजनं ह्रियार्तं पिप्रत्कृपाभारभृतैरपाङ्गैः ।**

**अमेयधामा स जहेऽधहानिं ददज्जनेभ्यो मुदमादधानः ॥५४॥**

**जुह्वदिति जुह्वत्प्रियः** जुह्वताम् अग्निकर्मानुष्ठातॄणाम् प्रियः वल्लभः **अमेयधामा** अमेयं मातुमशक्यं धाम तेजो यस्य सः श्रीकृष्णः **मुदं** हर्षम् **आदधानः** धारयन् **कृपाभारभृतैः** दयापुञ्जेन भृतैः पूर्णैः **अपाङ्गैः** नेत्रप्रान्तावलोकनैरित्यर्थः । **ह्रिया** लज्जया **आर्तं** व्याकुलं **भीरुजनं** स्त्रीजनं **पिप्रत्** संकटात् रक्षन्

(टि०) १ षस्तीत्यपि पाठः । २ अपनयने इति सि० कौ० ॥

ऽनेभ्यः भक्तेभ्यः अघहानिं दुरितक्षयं ददत् प्रयच्छन् कुर्वंश्च सन् जहे किञ्चिदग्रे राजमार्गं गतवान् ॥ ५४ ॥

जुह्वदिति। १०८३ हु-दानादानयोः। प्रीणनेऽपीति भाष्ये। दानमग्न्यादौ प्रक्षेपः तन्त्रेण। शतरि 'नाभ्यस्ताच्छतुः' (७।१।७८) इति नुमभावः। भीरु इति। १०८४ ञिभी-भये। 'भियः क्रुक्लुकनौ' (३।२।१७३) इति क्रुः। ह्रिया। १०८५ ह्री-लज्जायाम्। भावे क्विप्। हादयोऽनुदात्ताः परस्मैभाषाः। पिप्रत्। १०८६ पॄ-पालनपूरणयोः। ह्रस्वान्त इत्येके। उदात्तः परस्मैभाषः। ह्रस्वान्तस्त्वनुदात्तः शता। भारभृतैः। १०८७ डु भृञ्-धारणपोषणयोः। टु भृञ्-इति द्रुमे। कर्मणि घञ्। क्तश्च। अनुदात्त उभयतोभाषः। अमेयेति १०८८ माङ्-माने शब्दे च। 'अचो यत्' (३।१।९७) जहे। १०८९ ओ हाङ्-गतौ लट्। भृञादित्रयं गतम्। अनुदात्तावात्मने भाषौ। हानिम्। १०९० ओ हाक्-त्यागे। 'ग्लाम्ला–'(उ०) इति निः। अनुदात्तः परस्मैभाषः। ददत्। १०९१ डु दाञ्-दाने। शता। आदधानः। १०९२ डु धाञ्-धारणपोषणयोः। दानेऽपीत्येके। शानच् ॥ ५४ ॥

मथुरां प्राप्तस्य भगवतः स्वज्ञातीनां यदूनां प्रथमसंगममाह—

**प्रणेनिजद्भिर्मतिमर्थतत्त्वं सुवेविजानैर्यदुभिः स विष्णुः।**
**घर्मोष्मभिस्तत्र समारताग्रे नभस्तुरैस्तैः प्रधने प्रवीणैः ॥ ५५ ॥**

प्रणेनिजद्भिरिति स विष्णुः श्रीकृष्णः तत्र तस्मिन् प्रदेशे मतिं धियं प्रणेनिजद्भिः शुद्धां परिपुष्टाञ्च कुर्वाणैः अर्थतत्त्वं पुरुषार्थनाम् सारासारत्वं सुवेविजानैः सुतरां पृथक्कुर्वद्भिः घर्मोष्मभिः ग्रीष्मसदृशप्रतापैः नभस्तुरैः मेघवद्वेगवद्भिरित्यर्थः प्रधने युद्धे 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्' इत्यमरः। प्रवीणैः निपुणैः "प्रवीणे निपुणाभिज्ञ"। इत्यमरः। तैः प्रसिद्धैः यदुभिः यदुवंश्यैः अग्रे लब्धितमार्गोत्तरं समारत संगतोऽभूत् ॥ ५५ ॥

प्रणेनिजद्भिः। १०९३ णिजिर्-शौचपोषणयोः। शता। सुवेविजानैः। १०९४ विजिर्-पृथग्भावे। शानच्। विष्णुः। १०९५ विष्लृ-व्याप्तौ। उदिदित्येके इरिदिति द्रुमे। 'विषेः किच्च'(उ०) इति नुप्रत्ययः। णिजादयोऽनुदात्ताः स्वरितेतः। घर्मेति।

१०९६ घृ-क्षरणदीप्त्योः । समारतेति । १०९८ ऋ-गतौ । संपूर्वात् 'समो गम्यृच्छि-' (१।३।२९) इति तङ् । अनुदात्ताः परस्मैभाषाः । नभ इति । ११०० भस-भर्त्सनदीप्त्योः उदात्त उदात्तेत् । नञ्पूर्वात् क्विप् । तुरैरिति । ११०२ तुर-त्वरणे । उदात्त उदात्तेत् । 'इगुपध–'(३।१।१३५) इति कः । प्रधनेति । ११०४ धन-धान्ये । अयमणार्थादस्मादप्-अर्थे कः । अयमप्युदात्त उदात्तेत् । वृत् । जुहोत्यादयो वृत्ताः । श्लुविकरणं समाप्तम् ॥५५॥

अथ रजकवधप्रसङ्गमाह ।

दीव्यन्देवो विचित्रस्युवमथ रजकं प्रैक्षताभ्यूतमग्रे
ष्ठीव्यन्तं तत्र तत्र स्नुसितफलगणान्क्नोप्युषः प्योसहीनम् ।
तं प्लुष्यदृष्टिनृत्यद्रुषमपि च गतत्रासमुत्कुथ्यदङ्गं
पोथ्यं प्रोचे स्वरेण स्वजनविगुधितं क्षिप्यता पुष्पमाध्वीम् ॥५६॥

दीव्यन्निति अथ अनन्तरम् क्नोप्युषः क्नसां कुटलीभवतां व्युषः दाहकः देवः क्रीडादिकर्ता हरिः तदग्रे दीव्यन् गच्छन् सन् विचित्रस्युवं विचित्रं नानारूपं सीव्यति सूचीकर्म करोतीति तं स्नुसितफलगणान् स्नुसितान् भक्षितान् फलगणान् फलराशीः प्योसहीनं प्योसो विभागस्तेन शून्यं यथा तथा (रजकविशेषणं वा) तत्र तत्र यादृशतादृशस्थाने ष्ठीव्यन्तं निरस्यन्तं थूत्कुर्वन्तं प्लुष्यदृष्टिनृत्यद्रुषं प्लुष्यन्त्यां ज्वलन्त्यां दृष्टौ दृशि नृत्यन्ती स्फुरन्ती रुट् रोषो यस्य तं स्वजनविगुधितं निजजनैः विगुधितं परिवेष्टितं पोथ्यं हिंसनीयम् गतत्रासं निर्भयम् उत्कुथ्यदङ्गम् उत्कुथ्यत्पूती (दुर्गन्धी) भवत् अङ्गं शरीरं यस्यतम् अग्रे पुरः आभ्यूतम् आगत तं रजकं निर्णेजकं 'निर्णेजकः स्याद्रजकः" इत्यमरः । प्रैक्षत दृष्टवान् । आपच पुष्पमाध्वीं सुमनोमधुरिमाणं क्षिप्यता निरस्यता स्वरेण तं प्रोचे प्रकर्षेण उक्तवान् । स्रग्धरावृत्तम् "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरेयं प्रसिद्धे"ति लक्षणात् ॥ ५६ ॥

दीव्यन्निति । ११०७ दिवु-क्रीडाविजिगीषाव्यवहारद्युतिस्तुति (मोदमदस्वप्नकान्ति) गतिषु व्यवहार उक्तिक्रियादिश्च ।।विदि । (दिवि) ऐश्वर्यार्थ इति देवतान्तात्(५।४।२४)इति सूत्रे प्राह

(टि० १ अत्र १०९७ हृ-प्रसह्यकरणे । १०९९सृ-गतौ एतौ धातू नोदाहृतौ । २ अत्र ११०१ कि-ज्ञाने नोदाहृतः । ३ इह च ११०३धिष-शब्दे । ११०५ जन-जनन । ११०६ गा-स्तुतौ एते नोदाहृताः ॥

हरः। अस्मात् गत्यर्थे शता। देव इति। क्रीडादौ पचाद्यच्। विचित्रस्युवम्। ११०८ षिवु-तन्तुसंताने। क्विपि ऊठ्। आस्त्र्यूतम्। ११०९ स्रिवु-गतिशोषणयोः। कर्तरि क्ते ज्वरत्वरस्रिव्य- (६।४।२०) इत्यूठ्। ष्ठीव्यन्तम्। १११० ष्ठिवु-निरसने। आस्यान्निःसरणं तत्। शता। स्नुसितेति। ११११ ष्णुसु-अदने। कर्मणि क्तः। १११२ ष्णुसु-निरसने इति केचित्। क्त इति। १११३ क्नसु-ह्वरणदीप्त्योः। क्विप्। व्युषः। १११४ व्युष-दाहे। 'इगुपध-' (३।१।१३५) इति कः। प्योसेति। प्युसि-विभाग इत्येके। घञ्। प्लुष्यदिति। १११५ प्लुष-च। दाहे इति शेषः। शता। नृत्यदिति। १११६ नृती-गात्रविक्षेपे। शता। त्रासेति। १११७ त्रसी-उद्वेगे। घञ्। उत्कुथ्यदिति १११८ कुथ-पूतीभावे। दुर्गन्धीभावस्तत् शता। पोथ्यम्। १११९ पुथ-हिंसायाम्। ण्यत्। विगुधितम्। ११२० गुध-परिवेष्टने। कर्मणि क्तः क्षिप्यता। ११२१ क्षिप-प्रेरणे। तच्च निरसनम्। शता। पुष्पेति। ११२२ पुष्प-विकसने। घञर्थे कः॥५६॥

तिम्यन्मते! स्तिम्यति नाम मन्मन स्तीम्यत्सु तद्व्रीलमृते वदाम्यहम्।
देहि प्रभोः प्रेष्य! सुसोहनाय मे जीर्णांशुकाय त्वमजीर्णमंशुकम्॥५७॥

तिम्यदिति हे तिम्यन्मते! आर्द्रीभवद्बुद्धे! रजक! मन्मनः मम चेतः स्तीम्यत्सु आर्द्रीभवत्सु तिम्यति आर्द्रीभवति। इति नाम प्रकाशं। "नाम प्राकाश्य सम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः। तत् तस्मात् अहं व्रीलं (रलयोर्डलयोरभेदात्) लज्जाम् ऋते विना याचनलज्जां त्यक्त्वा वदामि वच्मि। हे प्रभोःप्रेष्य! कंसभृत्य! त्वं जीर्णांशुकाय पुराणवस्त्राय मे मह्यं सुसोहनाय सम्यक् तृप्त्यर्थं प्रीणानायेतियावत् अजीर्णं नवम् अंशुकं वसनं देहि वितर अथवा जीर्णांशुः क्षीणशोभः कायो यस्येति रजकसम्बोधनं। वंशस्थेन्द्रवंशयोः उपजातिः तल्लक्षणं यथा "जतौ तु वंशस्थमुदीरितं जरौ" "स्यादिन्द्रवज्रा ततजै रसंयुतैः"॥ इति॥ ५७॥

तिम्यदिति। ११२३ तिम-११२४ ष्टिम-११२५ ष्टीम-आर्द्रीभावे। तीम-इत्यप्येके तिमेः शता। स्तिम्यति। ष्टिमेर्लट्। स्तीम्यत्सु सांधसाम्यात् तीम्यत्स्विति वा छेदः।

(टि०) १ बहुत्र 'तत् २' इत्येव लिख्यते परन्तु परामृश्यमानस्य पुंस्त्वे 'सः' इत्युचितम्। २ तीमेति पाठभेदेपि इदमेवोदाहर्तव्यमिति भावः सन्धिसाम्ये 'खर्परे—' इति लोपपक्षे मनः स्तीम्यति अन्यत्र मनः तीम्यतीति।

ष्टीमितार्म्योः शता। व्रीलम्। ११२६ व्रीड चोदने। चोदनं लज्जा। प्रेरणे च द्रुवे। घञ्। प्रेष्यः। ११२७ इष-गतौ। ण्यत्। सुसोहनाय। ११२८ पुह-चक्यर्थे। स च तृप्तिः। ल्युट्। सहेत्यप्येके। जीर्णं इति। झीर्णं इति। ११३० जृष्-११३१ झृष्-वयोहानौ। द्वयोः कर्तरि क्तः। दिवादय उदात्ता उदात्तेतः शिपिवर्जम्॥ ५७॥

रजकवाक्यमाह–

किं सूयसे गिरमदून नितान्तदीना-
मुड्डीनकाकसम भूपतिधीनमेतत्।
मीयस्व रीणनय! मा क्षितिपालयेऽस्मि-
न्व्रीयस्व धाष्ट्र्यमिति दुर्मतिरीशमूचे॥ ५८॥

किमिति दुर्मतिः दुष्टबुद्धिः स रजकः ईशं श्रीकृष्णम् इति एवं ऊचे उक्तवान्। यत् हे अदून! अपीडित! उड्डीनकाकसम! उत्पतितवायससदृश! त्वं नितान्तदीनाम् अत्यार्तां गिरं वाणीं किं कुतो हेतोः सूयसे उत्पादयसि। एतत् त्वया याच्यमानमंशुकमित्यर्थः भूपतिधीनं कंसराजाधारकं हे रीणनय विगतनीते! अस्मिन् पुरतोदृश्यमाने क्षितिपालये राजगृहे मा मीयस्व न मृतो भव धाष्ट्र्यं धृष्टतां याचने विगतलज्जतां व्रीयस्व आच्छादय॥ वसन्ततिलका वृत्तम्। "उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात्॥ ५८॥

सूयसे इति। ११३२ पूङ्-प्राणिप्रसवे। प्राणिग्रहणमतन्त्रम्। अयमसूयार्थोऽपि अस्माल्लट्। अदून। ११३३ दूङ्-परितापे। स्वादय ओदित इति ओदित्वान्निष्ठानत्वम्। दीनाम्। २१३४ दीङ्-क्षये। उड्डीनेति। ११३५ डीङ्-विहायसा गतौ। गतिमात्रे च। धीनम्। ११३६ धीङ्-आधारे। एषु कर्तरि क्तः। मीयस्व। ११३७ मीङ्-हिंसायाम्। हिंसात्र मृतिः। लोट्। रीणेति ११३८ रीङ्-स्रवणे। प्राग्वत् क्तः। आलये। ११३९ लीङ्-श्लेषणे। 'एरच्' (३।३।५६) व्रीयस्व। ११४० व्रीङ्-वृणोत्यर्थे। छादनं परिग्रहो वा तत्। लोट्। स्वादय ओदितः॥ ५९॥

आपीय तद्गिरममाननिरीतरोषः
प्रीतिं रयतोऽस्य स करेण शिरोधिमच्छात्।

(टि०) १(११२८) पुह-चक्यर्थे इति त्यक्तोऽत्र।

**धर्मावसायजनदः खलु योऽजनिष्ट**
**दीप्तोष्मपूर्णभुजतूर्णविधूर्णवैरी ॥ ५६ ॥**

**आपीयेति यः खलु** श्रीकृष्णः **दीप्तोष्मपूर्णभुजतूर्णविधूर्णवैरी** दीप्तोष्मपूर्णेन तीव्रप्रज्वलद्बलमदभृतेन भुजेन तूर्णं यथा तथा विधूर्णाः हिंसिता वैरिणोऽरयो येन सः **धर्मावसायजनदः** धर्मनाशकजनानामवखण्डयिता सन् **अजनिष्ट** उत्पेदे । **सः** श्रीकृष्णः **तद्गिरं** रजकवाचम् **आपीय** कट्वौषधीपानवत् श्रुत्वा **अमाननिरीतरोषः** अमानमनवधि यथा तथा निरीतो निर्गतो रोषः क्रोधो यस्य तादृशः सन् **प्रीतिं** स्वस्य मुदं **श्यतः** तनूकुर्वतः वाससोदानाऽभावेन नाशयतः **अस्य** रजकस्य **शिरोधिं** कन्धराम् "शिरोधिः कन्धरेत्यपि" इत्यमरः । **करेण** हस्तेन **आच्छात्** चिच्छेद । **वसन्ततिलका** छन्दः "उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥ ५६ ॥

आपीयेति । ११४१ पीङ्-पाने । ल्यप् । **अमानेति** । ११४२ माङ्-माने । ल्युट् । **निरीतेति** । ११४३ इङ्-गतौ । कर्तरि क्तः । **प्रीतिमिति** । ११४४ प्रीङ्-प्रीतौ । क्तिन् । अकर्मकोऽयम् । पूङादय आत्मनेपदिनः । पूङ् दूङ् डीङ्वर्जमनुदात्ताः । **श्यतः** । ११४५ शो-तनूकरणे । शता । 'ओतःश्यनि' ( ७।३।७२ ) इति लोपः । **अच्छात्** । ११४६ छो-छेदने । लुङि 'विभाषा घ्राधेट्शा-' ( २।४।७८ ) इति सिज्लुक् । **अवसायेति**। ११४७षो-अन्तकर्मणि । श्याद्व्यधेति णः । **जनद** इति । ११४८ दो-अव-खण्डने । क्विप् । श्यत्यादयोऽनुदात्ताः परस्मैपदिनः । **अजनिष्ट** । ११४९ जनी-प्रादुर्भावे । अयमुत्पादनायामपि । लुङ् । **दीप्तेति** । ११५० दीपी-दीप्तौ । **पूर्णेति** । ११५१ पूरी-आप्यायने । अकर्मकोऽयम् द्वयोः कर्तरि क्तः । **तूर्णेति** । ११५२ तूरी-गतित्वरणहिंसनयोः । त्वरणमात्रे च द्रमे । अस्मात् क्तः । **विधूर्णेति** । ११५३ धुरी-११५४ गूरी-हिंसागत्योः । धूरेः कर्मणि क्तः ॥ ५६ ॥

**गूर्णेऽस्मिन्बहुजन्तुघूरिणि खले जूर्णः शशंसे नृभिः**
**शौरिः शूरकगर्धचूरणपरः संतप्यमानः सताम् ।**
**देवौघस्य तपन्भुवं च पतितावावृत्तभूमाप्यसौ**
**वृत्तक्लेशलवैरकाश्यत समं संवाश्यमानैः स्वकैः ॥ ६० ॥**

**गूर्णे** इति **शूरकगर्वचूरणपरः** शूरकाणाम् हिंसकानां स्तम्भनकर्तॄणाञ्च दर्पचूरणपरः अभिमाननाशनतत्परः **सतां** साधूनां **सन्तप्यमानः** ईश्वरः **देवौघस्य** अमरसमूहस्य **तपन्** ईश्वरो भवन् **भुवं** क्षितिं **च पतिता** ईशिता **असौ शौरिः** श्रीकृष्णः **अवावृत्तभूमा** अविच्छादितैश्वर्यः **अपि सन् बहुजन्तुघूरिणि** अनेकजीवहिंसके **अस्मिन् खले** दुष्टे रजके **गूर्णे** हिंसिते सति **जूर्णैः** वृद्धैः **नृभिः** पुंभिः **शशंसे** स्तुतः । **वृत्तक्लेशलवैः** छादितदुःखलेशैः अत एव **संवाश्यमानैः** जय केशवाच्युत इति सम्यक् शब्दायमानैः **स्वकैः** निजजनैः **समं** सह **अकाश्यत** दीप्तोऽभूत् । **शार्दूलविक्रीडितं** छन्दः । "सूर्य्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" इति लक्षणात् ॥ ६० ॥

**गूर्णे** इति । गूरेः कर्मणि क्तः । **जन्तुघूरिणि** । ११५५ घूरी-११५६ जूरी-हिंसावयोहान्योः । घूरेर्णिनिः । **जूर्णैः** । जूरेः कर्तरि क्तः । **शूरकेति** । ११५७ शूरी-हिंसास्तम्भनयोः । ण्वुल् । **चूरणेति** । ११५८ चूरी-दाहे । ल्युट् । **संतप्यमानः** । ११५९ तप-ऐश्वर्ये वा तपिरस्मिन्नर्थे वा तङ्श्यनौ प्राप्नोतीत्यर्थः । कोपे च द्रुमे । शानच् । **तपन्** । तङ्श्यनोरभावेऽपि शता । **पतिता** । पत- ऐश्वर्ये वा इत्येके । तस्मिन् पक्षे तृच् । **ऽवावृत्तेति** । **वृत्तेति** । ११६० वृतु-वरणे । केचित् पूर्वत्र (पठितं) वाग्रहणमस्यादिं कृत्वा 'वावृतु-वरणे' इत्याहुः । द्वयोः कर्मणि क्तः । **क्लेशेति** । ११६१ क्लिश-उपतापे घञ् । **अकाश्यत** । ११६२ काश्-दीप्तौ । लङ् । **संवाश्यमानैः** । ११६३ वाश्-शब्दे शानच् । जन्यादय उदात्ता अनुदात्तितः । तापिस्त्वनुदात्तः ॥ ६० ॥

**तन्मृष्यमाणास्त्वथ शुच्यदङ्गका भृत्याः सुनद्धं बहु रक्तमंशुकम् ।**
**विसृज्य शप्यन्त इमं प्रदुद्रुवुः कृष्णः प्रपेदे वसनान्यखेदवान् ॥ ६१ ॥**

**तदिति अथ** जरकस्वामिमरणोत्तरम् **तत्** स्वामिवधादिकम् **मृष्यमाणाः** सहमानाः **शुच्यदङ्गकाः** स्वेदादिभिः पूतीभवत्कायाः **भृत्याः** तत्सेवकाः **सुनद्धं** सम्यग्बद्धं **बहु** अनल्पं **रक्तं** कुसुम्भादिभिर्लोहितीकृतम् **अंशुकं** वस्त्रं ( जातावेकवचनं ) **विसृज्य** त्यक्त्वा **इमं** श्रीकृष्णं **शप्यन्तः** आक्रोशन्तः निन्दन्त इत्यर्थः **प्रदुद्रुवुः** पलायाञ्चक्रिरे । **अखेदवान्** स्वस्थचितः **कृष्णः** श्रीहरिश्च **वसनानि** वस्त्राणि **प्रपेदे** प्राप्तवान् ॥ ६१ ॥

**मृष्यमाण** इति । ११६४ मृष-तितिक्षायाम् । शानच् । **शुच्यदिति** । ११६५ शुचिर्-पूतीभावे । दुर्गन्धीभावस्तत् । शौचविशरणक्लेशेषु च द्रुमे । शता । द्वावुदात्तौ । **सुनद्धं** ११६६ णह बन्धने । कर्मणि क्तः । **रक्तं** । ११६७ रन्ज-रागे । कर्तरि क्तः । **शप्यन्तः** । ११६८ शप-आक्रोशे शता । त्रयोऽनुदात्ताः । मृषादयः पञ्च स्वरितेतः । **प्रपेदे** । ११६९ पद-गतौ । लिङ् । **खेदेति** । ११७० खिद-दैन्ये । घञ् ॥ ६१ ॥

> **प्राग्विद्यमानवसनेष्वधृतैकमीशो**
> **बुद्ध्वा ददौ च रिपुयोधजयी निजेभ्यः ।**
> **कंसानुरोध्यणनहृन्मतिमद्युगर्च्यः**
> **शेषं व्यसृज्यत पटौघमलिश्यमानम् ॥ ६२ ॥**

**प्रागि** ति **कंसानुरोध्यणनहृत्** कंसानुवर्तिनाम् अणनहृत् प्राणहरः **मतिमद्युगर्च्यः** मतिमतां ज्ञानिनां युजां समाधिकृतां योगिनाञ्च **अर्च्यः** पूज्यः **रिपुयोधजयी** रिपूणां शत्रूणां योधजयी संप्रहर्तृतिरस्कर्ता स **ईशः श्रीकृष्णः विद्यमानवसनेषु** ग्रन्थिस्थितवस्त्रेषु तेषां मध्ये **एकम्** वस्त्रं **प्राक्** सर्वतः प्रथमं स्वयम् **अधृत** परिहितवान् । **बुद्ध्वा** तारतम्यम् अवगत्य अन्यवासांसि **निजेभ्यः** स्वजनेभ्यः **ददौ** दत्तवान् **च** । **अलिश्यमानम्** अनल्पीभवन्तं **शेषम्** अवशिष्टं **पटौघं** वसननिकरं **व्यसृजत** तत्रैव त्यक्तवान् । **वसन्ततिलकावृत्तम्** ॥ ६२ ॥

**विद्यमाने**ति ॥ ११७१ विद-सत्तायाम् । शानच् । **बुद्ध्वा** । ११७२ बुध-अवगमने । ज्वलादिगतबोधतिवद्बुद्ध्यो ज्ञानं चार्थः। तस्मात् क्त्वा । **योधेति** । ११७३ युध-संप्रहारे । अच् । **कंसानुरोधीति** । अनो+११७४ रुध-कामे । अनुपूर्वो रुधिः कामेऽर्थे तङ्श्यनौ भजतेत्यर्थः । तस्मादत्र तु णिनिः । **अणनेति**।११७५ अण-प्राणने। अन-इत्येके । ल्युट् । **मती**ति । ११७६ मन-ज्ञाने । क्तिन् । **युगि**ति । ११७७ युज-समाधौ । अकर्मकोऽयमिति माधवः । क्विप् । **व्यसृज्यत** । ११७८ सृज-विसर्गे । स चोत्पादनत्यागौ । लङ् । **अलिश्यमानम्** । ११७९ लिश अल्पीभावे । शानच् शदादयोऽनुदात्ता अण्यतिवर्जमनुदात्तेतः ॥ ६२ ॥

राध्यद्व्द्विषगुणोऽथ वायकवराद्दैत्याविदेषोऽपुष
च्छोषं तोषकृतोऽस्य दोषविततेराश्लिष्टलक्ष्मीस्तनः ।
शक्यन्गर्वमशक्यमानमनसामाश्विद्यदास्योऽक्रुधं
क्षुध्यद्भक्तदमाप मालिकवरं शुद्धं स सिद्धेप्सितम् ॥६३॥

राध्यदिति अथ तदनन्तरं **दैत्यावित्** असुरताडनकर्ता **आश्लिष्टलक्ष्मीस्तनः** आश्लिष्टौ आलिङ्गितौ लक्ष्म्याः कमलायाः स्तनौ कुचौ येन सः **अशक्यमानमनसाम्** असहमानमानसानां **गर्वम्** अभिमानं **शक्यन्** सहमानः **आश्विद्यदास्यः** ईषत्प्रक्षरन्मुखः **एष** श्रीकृष्णः **वायकवरात्** सौचिकश्रेष्ठात् **राध्यद्द्विषगुणः** तद्दत्तोष्णीषादिभिः सिध्यन्मनोज्ञवेषः सन् **तोषकृतः** प्रीतिवर्द्धकस्य **अस्य** सौचिकस्य **दोषविततेः** दूषणौघस्य **शोषं** शोषणं नाशम् **अपुषत्** अवर्धयत् । तदनन्तरं **सः** श्रीकृष्णः **अक्रुधं** निष्क्रोधं **क्षुध्यद्भक्तदं** क्षुध्यतां बुभुक्षमाणानां भक्तदम् अन्नप्रदं "भिस्सा स्त्री भक्तमन्धोऽन्नम्" इत्यमरः । **सिद्धेप्सितं** निष्पन्नसिद्धीनाम् आप्तुमिष्टं **शुद्धं** शुचिं **मालिकवरं** मालाकारश्रेष्ठम् **आप** प्राप्तवान् । **शार्दूलविक्रीडितं** छन्दः ॥ ६३ ॥

**राध्यदिति** । ११८० राधोऽकर्मकाद्वृद्धावेव। वृद्धयर्थ इव अकर्मकादेव राधेः श्यन् । अस्य तु सिद्धिद्रोहदैवपर्यालोचनादयोऽर्थाः । शता । **दैत्याविल्** । ११८१ व्यध-ताडने । तच्च प्रायेण विदारणपर्यन्तम् । क्विपि 'नहिवृतिवृषि–' (६।३।११६) इत्यादिना दीर्घः । **अपुषत्** । ११८२ पुष-पुष्टौ । अयमकर्मकोऽपि । इतो गणान्ताः पुषादयः । तेन 'पुषादिद्युताद्य–' (३।१।५५) इत्यङ् । **शोष-तोष-दोषेति** । ११८३ शुष-शोषणे । ११८४ तुष-प्रीतौ । ११८५ दुष-वैकृत्ये । वैकृत्यं विकृतता । त्रयाणां घञ् । **आश्लिष्टेति** । ११८६ श्लिष–आलिङ्गने । कर्मणि क्तः । शक्यन् । **अशक्यमानेति** । ११८७ शक-विभाषितो मर्षणे । विभाषित इत्युभयपदीनां पूर्वाचार्यसंज्ञा । शतृ-शानचौ । **आश्विद्यादिति** । ११८८ ञि ष्विदा-गात्रप्रक्षरणे । शता । **अक्रुधम्** । ११८९ क्रुध-कोपे भावे क्विप् । **क्षुध्यदिति** । ११९० क्षुध-बुभुक्षायाम् । शता । **शुद्धम्** । **सिद्धेति** । ११९१ शुध–शौचे । ११९२ षिधु–संराद्धौ । सांसिद्धिः सा द्वयोः कर्तरि क्तः ॥६३॥

रङ्कारये सोऽयमनश्यराय तृप्यन्मना दृप्तजनद्रुहेऽस्मै ।
मुग्धस्मितस्नोहिमुखाय मालां स्निह्यन्ददौ सादरमस्तवीच्च ॥६४॥

**रद्धारये** इति **तृप्यन्मनाः** प्रीणितान्तरात्मा **सोऽयं** पूर्वोक्तः मालाकारः **अनश्वराय** नित्याय **दृप्तजनद्रुहे** गर्वितजनजिघांसवे **मुग्धस्मितस्नोहिमुखाय** मुग्धस्मितेन सुहसितेन स्नोहि उद्गिरणशीलं सुखम् आननं (तल्लावण्य मित्यर्थः) यस्य तस्मै **रद्धारये** निहतशत्रवे **तस्मै** श्रीकृष्णाय **स्निह्यन्** प्रीतिं कुर्वन् सन् **मालां** स्रजं **सादरं** मानसहितं यथा तथा **ददौ** दत्तवान्। **च** पुनः **अस्तवीत्** स्तुतवान् ॥ ६४ ॥

**रद्धेति** । ११९३ रध-हिंसासंराध्योः । संराद्धिः पाकः । कर्मणि क्तः । **अनश्वराय** । ११९४ णश-अदर्शने । 'इस्नश—' (३।२।१६३) इति क्वरप् । **तृप्यदिति** ११९५ तृप-प्रीणने । तच्च तृप्तिस्तर्पणं च । शता । **दृप्तेति** । ११९६ दृप-हर्षमोहनयोः मोहनं गर्वः मोचनयोरित्येके । कर्तरि क्तः। **द्रुह**-इति । ११९७ द्रुह-जिघांसायाम् । क्विप् । **मुग्धेति** । ११९८ मुह-वैचित्ये । अविवेकस्तत । कर्तरि क्तः । **स्नोहीति** । ११९९ष्णुह-उद्गिरणे । णिनिः। **स्निह्यन्** १२००ष्णिह-प्रीतौ । शता । वृत्। विकल्पितेट उदात्तेतो रधादयो वृत्ताः ॥ ६४ ॥

**अशाम्यदात्मापि तमी नमामि दमिप्रियं श्रान्तिहरं भवन्तम् ।**
**भ्राम्यामि भोः क्षाम्य ममापराधं क्लान्तं मनो माद्यति दर्शनात्ते ॥ ६५ ॥**

**अशाम्यदिति** अहम् **अशाम्यदात्मा** अशान्तमना **अपि तमी** त्वयि काङ्क्षाशीलः संसारे ग्लानिशीलो वा **दमिप्रियं** दमः इन्द्रियनिग्रहस्तच्छीलानामिष्टम् **श्रान्तिहरं** संसरणदुःखनाशकम् **नमामि** नमस्करोमि अहं **भ्राम्यामि** अनवस्थितचित्तो भवामि। **भोः** हे श्रीकृष्ण ! **मम अपराधम्** आगः **क्षाम्य** क्षमस्व। **क्लान्तं** पीडितम् मम **मनः** चेतः **ते** तव **दर्शनात्** अवलोकनात् **माद्यति** हृष्यति ॥ ६५ ॥

**अशाम्यदिति** । १२०१ शमु-उपशमे । शतरि 'शमामष्टानाम्-' (७।३।७४) इति दीर्घः । **तमीति** । १२०२ तमु-काङ्क्षायाम् । ग्लानावेव प्रयोगः । मुरारिस्तु 'द्रष्टुं बहूत्ताम्यति' इति काङ्क्षायामेवाह । 'शमित्यष्टाभ्यः' ( ३।२।१४१ ) इति घिनुण् । **दमीति** । १२०३ दमु-उपशमने । अयमकर्मकोऽपि । प्राग्वत् घिनुण् । **श्रान्तीति** । १२०४ श्रमु-तपसि खेदे च । क्तिन् । **भ्राम्यामि** । १२०५ भ्रमु-अनवस्थाने । अयमकर्मकः सकर्मकश्च लट् । **क्षाम्येति** । १२०६ क्षमू-सहने । अयमषित् । लोट् । **क्लान्तम्** । १२०७ क्लमु-ग्लानौ । कर्तरि क्तः । **माद्यति** । १२०८ मदी-हर्षे ।

 

हर्षोऽत्र गर्वः । वृत् । शमादयो वृत्ताः ॥ ६५ ॥

अस्तायासविजस्तविश्वतसनो निर्दस्तवासैर्नुतो
वेदव्योषकृदप्लुषो विसितधीकुस्यज्जनांहो बुसम् ।
मुस्तामोष्यमसः किटिस्त्वमसमो लुठ्यन्खलानोकसो
भृश्यभ्रंशनवर्शकाकृशदयस्तृष्णाहरो हृष्य मे ॥ ६६ ॥

**अस्तायासेति अस्तायासविजस्तविश्वतसनः** अस्तायासं त्यक्तप्रयासं यथा तथा विजस्तं मोदितं विश्वस्य लोकस्य तसनं क्षयो येन सः **वेदव्योषकृत्** वेदव्यासरूपेण वेदानां व्योसस्य विभागस्य कर्ता **भृश्यद्भ्रंशनवर्शकाकृशदयः** भृश्यताम् अधःपततां स्वभक्तानां भ्रंशनस्याऽधःपतनस्य वशिका छादयित्री अकृशा महती दया कृपा यस्य ता दशः **मुस्तामोषी** मुस्तानां तदाख्यौषधीनां मोषी खण्डकः **अमसः** अपरिणामोऽपि वस्तुतः **त्वं निर्दस्तवासैः** निर्दस्तः निःशेषम् उपक्षीणः वासः स्तम्भो तम्रताभावो येषां तैः **नुतः** स्तुतः स **खलान्** दुष्टान् **ओकसः** स्थानात् **लुठ्यन्** क्षोभयन् सन् **किटिः** वराहरूपः **असमः** परिणतवानासि । **विसितधीकुस्यज्जनांहोबुसं** विसितया प्रेरितया धिया बुद्ध्या कुस्यतां संश्लिष्यतां जनानाम् अंहो दुरित रूपम् "अंहो दुरित-दुष्कृतम्" इत्यमरः । बुसं कडङ्गरं "कडङ्गरो बुसं क्लीवे" इत्यमरः । **अप्लुषः** दग्धवानासि । **तृष्णाहरः** सांसारिकालप्सानाशकः स त्वं **मे** मम **हृष्य** तुष्टो भव । **शार्दूलविक्रीडितं** छन्दः ॥ ६६ ॥

**अस्तेति** । १२०९ असु-क्षेपणे । कर्मणि क्तः । **आयासेति** । १२१० यसु-प्रयत्ने । घञ् । **विजस्तेति** । १२११ जसु-मोक्षणे । कर्मणि क्तः । **तसनेति** । १२१२ तसु-उपक्षये । ल्युट् । **निर्दस्तेति** । १२१३ दसु-च । कर्मणि क्तः । **वासेति** १२१४ वसु-स्तम्भे । बसिरित्येके । वसेर्घञ् । शमादयः क्षमिदामि ( मदि ) वर्जमुदितः । **व्योषेति** । १२१५ व्युष-विभागे । व्युसेति चैके । व्युषेर्घञ् । **अप्लुष** इति । १२१६ प्लुष-दाहे । लुङि पुषाद्यङ् । **विसितेति** । १२१७ बिस-प्रेरणे । कर्मणि क्तः । **कुस्यदिति** । १२१८ कुस-संश्लेषणे । शता । **बुसम्** । १२१९ बुस-उत्सर्गे । इगुपधात् कः । **मुस्तेति** १२२० मुस-खण्डने 'अतालातसृतपुताचित्तानिमित्तमुस्त—' (उ०) इत्यादिना भोजन क्ते निपातितः । **मोषी** । मुष-इत्येके । णिनिः । **अमसः** । १२२१ मसी-

परिमाणे । परिणामे इति द्रुमे । **असम** इति । 'समी परिणामे' इति दन्त्यादिरित्येके । तस्माल्लुङि पुषाद्यङ् । **हृठ्यन्** । १२२२ लुठ-विलोडने । शता । **ओकसः** । १२२३ उच-समवाये । 'ओक उचः के' (७।३।६४) इति निपातितः । **भृश्यद्भ्रंशनेति** । १२२४ भृशु-१२२५ भ्रन्शु-अधःपतने । द्वयोः शतृ-ल्युटौ । **वर्शकेति** । १२२६ वृश-वरणे । ण्वुल् । **अकृशेति** । १२२७ कृश-तनूकरणे । 'अनुपसर्गात्फुल्लक्षीबकृश—' (८।२।५५) इति निपातितः । **तृष्णेति** । १२२८ तृष-पिपासायाम् । 'तृषिशुषिरसिभ्यः कित्' उ०) इति नन् प्रत्ययः । **हृष्य** । १२२९ हृष-तुष्टौ । लोट् ॥ ६६ ॥

**रुष्यद्रिष्यदरातिडेपक ! विभो ! कोपादिगोपो न ते**
**किं चायोप्यविरोपिलोपक ! न वा लोभादिसंक्षोभिता ।**
**नश्यांस्तुभ्य विभो ! जयेति नुवते क्लिद्यन्प्रमेद्यद्रुजं**
**क्ष्विद्यन्नृद्धिमगृध्नवेऽपि स विमृश्याक्षीयमाणां ददौ ॥६७॥**

**रुष्यादिति** हे **रुष्यद्रिष्यदरातिडेपक !** रुष्यतां कुप्यतां परान् हिंसतां चारातीनां रिपूणां डेपक क्षेपक **हे विभो ! ते** तव **कोपादिगोपो** क्रोधादिजन्यो गोपो व्याकुलत्वं **न** अस्ति **किञ्च हे अयोप्यविरोपिलोपक !** अयोप्यविरोपिणाम् अमोह्यमोहयितॄणां लोपक मोहक ! तव **लोभादिसंक्षोभिता** गृध्नुतादिभिः कृतं संचलनं **वा न** विद्यते **हे विभो !** व्यापक ! त्वं **नश्यान्** हिंस्यान् **तुभ्य** हिंसय । **जय** सर्वोत्कर्षेण वर्तस्व । **इति** एवं **नुवते** स्तुवते **अगृध्नवे** अनभिकांक्षते अपि तस्मै **स** श्रीकृष्णः **क्लिद्यन्** कृपया आर्द्रीभवन् **प्रमेद्यद्रुजं** वर्धमानां पीडां **क्ष्विद्यन्** मोचयन् सन् **विमृश्य** स्वयमेव विचिन्त्य **अक्षीयमाणां** अनश्यन्तीम् **ऋद्धिं** समृद्धिं धनधान्यादिबाहुल्यं **ददौ** प्रदत्तवान् ॥६७॥

**रुष्यद्रिष्यदिति** । १२३० रुष—रोषे[1] । १२३१ रिष—हिंसायां चेत्येके । द्वयोः शता । **डेपक** इति । १२३२डिप—क्षेपे । ण्वुल् । **कोपादिगोप** इति १२३३कुप-क्रोधे १२३४गुप-व्याकुलत्वे । द्वयोर्घञ् । **अयोप्यविरोपिलोपकेति** । १२३५युपु—१२३६ रुपु—१२३७लुपु—विमोहने । क्रमेण ण्यण्णिनिण्वुलः । **लोभादिसंक्षोभितेति** ।१२३८ लुभ—गार्ध्ये ।१२३९ क्षुभ—संचलने । द्वयोर्घञ् णिनिश्च । **नश्यान्-तुभ्य** । १२४० णभ -१२४१तुभ—हिंसायाम् । यल्लोट् च । **क्लिद्यन्-प्रमेद्यन्-क्ष्विद्यन्निति** । १२४२ क्लिदू—आर्द्रीभावे । १२४३ ञिमिदा-स्नेहने-१२४४ञिक्ष्विदा—स्नेहनमोचनयोः । त्रयाणां

(टि०) १ रुष-रिष-हिंसायामिति सि० कौ० ।

शाता। मिदेस्तु 'मिदेर्गुणः' (१।३।८६) इति गुणः। **ऋद्धिम्**। १२४५ ऋधु-वृद्धौ। क्तिन्। **अगृध्नवे**। १२४६ गृधु-अभिकाङ्क्षायाम्। 'त्रसिगृधि' (३।२।१४०) इति क्नुः। वृत्। पुषादयो दिवादयश्च वृत्ताः। दिवादयस्त्ववृत्कृता इत्येके। तेन मृश्यति क्षीयते इत्याद्यपि तत्र मृशेर्ल्यप्। क्षीयतेः शानच्। शमादय उदात्ता उदात्तेतः॥ ६७॥

अथ कुब्जानुग्रहकथामाह—

**सुन्वत्प्रियं तमथ रागसिता शिताग्र**
**मारोन्मितास्त्रनिचयास्तृतमानसान्ता।**
**कुब्जा कृतारिवलमैक्षत वृणवती सा**
**पात्रं समीरधुतसौरभधूतभृङ्गम्॥ ६८॥**

**सुन्वदिति अथ** सौचिकवरप्रदानानन्तरं **रागसिता** रागेण प्रेम्णा सिता बद्धा **शिताग्रमारोन्मितास्त्रनिचयास्तृतमानसान्ता** शिताग्रेण तीक्ष्णाग्रेण मारेण कामदेवेन "मदनो मन्मथो मारः" इत्यमरः। उन्मितेन प्रक्षिप्तेन प्रयुक्तेन अस्त्रनिचयेन बाणनिकरेण आच्छादितं विक्षिप्तं मानसान्तं चित्तान्तं यस्याः **सा कुब्जा समीरधुतसौरभधूतभृङ्गं** समीरधुतेन वायुचलितेन सौरभेण सौगन्ध्येन धूताः संभ्रान्ता भृङ्गा भ्रमरा यस्मिन् तत्तादृशं **पात्रं** शरावं **विवृणवती** स्वीकुर्वती सती **सुन्वत्प्रियं** सुन्वन्तः यज्ञं कुर्वन्तो द्विजाः प्रिया यस्य तं **कृतारिवलं** कृतं हिंसितं अरिवलं शत्रुसैन्यं येन तं श्रीकृष्णम् **ऐक्षत** दृष्टवती। **वसन्ततिलकं** वृत्तम्॥ ६८॥

**सुन्वदिति**। १२४७ षुञ्—अभिषवे। अभिषवो निष्पीडनस्नपनसुरासंधानस्नानादिः। शता। **सिता**। १२४८ षिञ्—बन्धने। कर्मणि क्तः **शितेति**। १२४९ शिञ्—निशातने। प्राग्वत् क्तः। **उन्मितेति**। १२५० डुमिञ्—प्रक्षेपणे। प्राग्वत् क्तः। **निचयेति**। १२५१ चिञ्—चयने। 'एरच्' (३।३।५६)। **आस्तृतेति**। १२५२ स्तृञ्—छादने। लक्षणया विक्षेपे। प्राग्वत् क्तः। **कृतमिति**। १२५३ कृञ्—हिंसायाम्। प्राग्वत् क्तः। **वृणवती**। १२५४ वृञ्—वरणे। स्वीकारश्छादनं वा तत्। शतरि ङीप्। **धुतेति+धूतेति**। १२५५ धुञ्-कम्पने। धूञ्—इत्येके। द्वयोः कर्मणि क्तः। स्वादय उभयतोभाषाः। अनुदात्ता धूञ्वर्जम्॥ ६८॥

**कन्दर्पेण द्रुता विलेपकुशला सा चान्तिकं ह्निवता**

पृष्टा तेन पृता विलेपनमदात्स्पार्याय लोकस्मृते।
संप्राप्यो निजशक्तिराद्धतपसः साधोः स देवोऽपि ता-
मृज्वीकर्तुमुपानशे सुकृतिनीं प्रस्तिघ्नुवानः खलान्॥ ६६॥

**कन्दर्पेणे**ति **च** पुनः **कन्दर्पेण** कामेन **दुता** पीडिता **विलेपकुशला** चन्दन विलेपने तत्संपादने कुशला **पृता** प्रीणिता **सा** कुब्जा **अन्तिकं** निकटं **हिन्वता** गच्छता **तेन** श्रीकृष्णेन **पृष्टा** अनुयुक्ता सती **स्पार्याय** प्रीणनीयाय **लोकस्मृते** लोकपालकाय भगवते **विलेपनं** घृष्टचन्दनरसम् **अदात्** प्रदत्तवती। **निजशक्तिराद्धतपसः** निजशक्त्या स्वसामर्थ्येन राद्धं सिद्धफलं तपो यस्य तस्य **साधोः** सत्पुरुषस्य **संप्राप्यः** गम्यः **स देवः** श्रीकृष्णः **अपि खलान्** दुष्टान् **प्रस्तिघ्नुवानः** आस्कन्दन्नाभिभवन् **सुकृतिनीं** पुण्यवतीं **तां** कुब्जाम् **ऋज्वीकर्तुम्** सरलदेहां कुब्जहीनां कर्तुम् **उपानशे** समीपं प्राप। **शार्दूलविक्रीडितम्**॥ ६९॥

**दुते**ति। १२५६ टु दु–उपतापे। कर्मणि क्तः। **हिन्वता**। १२५७ हि–गतौ वृद्धौ च। शता। **पृता**। १२५८ पृ–प्रीतौ। कर्मणि क्तः। **स्पार्याय**। १२५९ स्पृ–प्रीतिपालनयोः। ण्यत्। **लोकस्मृते**। स्मृ–इत्येके। क्विप्। **संप्राप्यः**। १२६० आप्लृ–व्याप्तौ। ण्यत्। **शक्तीति**। १२६१ शक्लृ–शक्तौ क्तिन्। **राद्धेति**। १२६२ राध–१२६३ साध–संसिद्धौ। राधेः कर्तरि क्तः। **साधोः**। 'कृवापाजिमिस्वादिसाध्यशूभ्य उण्' (उ०) इति साधेरुण् प्रत्ययः। द्वावद्योऽनुदात्ताः। परस्मैभाषाः। **उपानशे**। १२६४ अशू–व्याप्तौ। संघाते च द्रुमे। 'अश्नोतेश्च' (१।४।१२) इति नुट्। **प्रस्तिघ्नुवानः**। १२६५ ष्टिघ–आस्कन्दने। शानच्॥ ६९॥

ऋज्वीकर्तुमित्युक्तम्। ऋज्वीकृतिप्रकारमाह—

तामाक्रम्य पदे पदेन चिबुके चातिघ्नुवन्पाणिना
चक्रे सध्नुवतां वधे दध्रृगसावृज्वीं मनोज्ञाकृतिम्।
किंचादभ्नुवतीमिमां मम गृहानेहीति याच्ञापरा-
मेष्यामीत्यमुचत्समृद्धकरुणः क्षिण्वन्कटाक्षैर्धृतिम्॥ ७०॥

(टि०) १ दुः धातुरादिर्येषां ते।

तामिति सघ्नुवतां हिंसतां वधे मारणे दघृग् प्रगल्भः समृद्धकरुणः प्रवृद्धा करुणा दया यस्य सः असौ श्रीकृष्णः कटाक्षैः अपाङ्गावलोकनविशेषैः धृतिं धैर्यं क्षिण्वन् नाशयन् सन् तां कुब्जां पदे चरणे पदेन आतिरय आक्रम्य त्रिचुके हनौ पाणिना करेण चाऽतिग्नुवन् आस्कन्दन् आक्रामन् ऋज्वीम् अवक्रदेहाम् अत एव मनोज्ञाकृतिं मनोहरस्वरूपां चक्रे। किञ्च मम गृहान् आलयम् "गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः" इत्यमरः। एहि आगच्छ इति एवं याच्ञापरां प्रार्थयन्तीम् अदभ्नुवतीं व्याजमकुर्वाणाम् अव्याजभक्ताम्' इमां कुब्जाम् एष्यामि आगमिष्यामि पुनः, इति एवं उक्त्वा अमुचत् विसृष्टवान्। शार्दूलविक्रीडितम्॥७०॥

अतिरयेति। १२६६ तिक–१२६७ तिग–च। एतावप्यास्कन्दने आद्यावल्यप्। अतिग्नुवन्। तिगेः शता। सघ्नुवताम्। १२६८ षघ–हिंसायाम्। शता। दधृक्। १२६९ ञिधृषा–प्रागल्भ्ये। 'ऋत्विग्दधृक्–' (३।२।५९) इति क्विन्। अदभ्नुवतीम्। १२७० दन्भु–दम्भे। दम्भो लोकरञ्जनार्थं कर्मानुष्ठानम्। शतरि ङीप्। समृद्धेति। १२७१ ऋधु–वृद्धौ। अयमकर्मकः सकर्मकश्च। कर्तरि क्तः। क्षिण्वन्।[1] १२७३ रि–१२७४ क्षि–१२७५ चिरि–१२७६ जिरि–२१७७ दाश–१२७८ दृ (दु)हिंसायाम्। 'एषु छान्दसेषु त्रिधातुः सर्वथा लोकेऽस्तु' इत्युक्तस्य श्नोः शता॥ ७०॥

कुब्जावैरूप्यहरणानन्तरं केऽपि भाग्यवन्तो भगवन्तं ज्ञातवन्त इत्याह—

क्ष्मां दघ्नुवन्मखचमिव्यसनानि रिण्व-
न्नृक्षिण्वतां चिरयणैरपथं जिरिण्वन्।
कंसं प्रदाश्यमतिदुर्द्रवमुद्दुदूषु-
श्छन्दःश्रुतोऽपि स हि कैश्चिदबोधि लोके॥ ७१॥

क्ष्मामिति। क्ष्मां मही "क्ष्मावनिर्मेदिनी मही" इत्यमरः। दघ्नुवन् पालयन् मखचमिव्यसनानि क्रतुगतहव्याशिनां देवानां व्यसनानि दुःखानि–रिण्वन् नाशयन् ऋक्षिण्वतां हिंसकानां चिरयणैः वधैः अपथं कुमार्गं जिरिणवन् नाशयन् प्रदाश्यं हिंस्यम् अतिदुर्द्रवम् अन्येषामत्यन्तं हिंसितुमशक्यं कंसम् उद्दुदूषुः

(टि०) १ (१२७२ अह-व्याप्तौ नोदाहृतोऽत्र।

उच्चैरधिकं हिंसितुमिच्छुः छन्दःश्रुतो वेदे श्रुतः प्रसिद्धोऽपि सः श्रीकृष्णः लोके मनुष्याणां मध्ये कैश्चित् भाग्यवद्भिः हि एव अबोधि ईश्वरत्वेन ज्ञात आसीत्। विरोधाभासः। वसन्ततिलका ॥ ७१ ॥

दघ्नुवन्निति । १२७९ दघ-घातने पालने च । शता । मखचमीति १२८० चमु-भक्षणे । णिनिः । रिरिवन् । रिन्वि-इत्यादेर्धातोः शता । ऋक्षिणवताम् 'आय ऋत्तीत्येके' इत्युक्तस्य धातोः शता । चिरयणैः । चिरिधातोर्ल्युट् । जिरिण्वन् जिरेः शता । दुर्द्रवम् । द्रुधातोः खल् । उद्दूषुः । दुङ्-इत्यपि केचित् । इत्यस्य सन्युः । केचित् 'चक्रन्दरग्रह-व्याप्तौ' इति पठित्वा दघादि लोपेऽप्याहुः । एतदेव छन्दः श्रुते ऽपीतिवादेन द्योतितम् । तिकादय उदात्तेतः । रिन्विदुदुङ्वर्जमुदात्ताः । दुङ्त्वाऽऽत्मनेभाषः । वृत् । स्वादयो वृत्ताः ॥ ७१ ॥

एवं राजमार्गसंचारेण तत्रत्यभक्तानन्दमुक्त्वा गोपुरान्तर्गतानां सुकृतातिशयेन तत्प्राप्तिमाह—

तुदन्कुचरिताञ्शुभे प्रणुदमान इष्टं दिश-
न्प्रभृष्टपललान्क्षिपन्नरिमतिं कृषन्माधवः ।
ऋषन्नजुषत क्रमान्नगरगर्भमुद्वेजय-
न्नलग्नमनसः खलानवशलज्जमानाङ्गनम् ॥ ७२ ॥

तुदन्निति माधवः श्रीकृष्णः कुचरितान् रजकादीन् तुदन् व्यथयन्, मालाकारादीन् शुभे सत्कर्मणि प्रणुदमानः प्रेरयन् तेषामेव इष्टं मनोऽभिलषितं दिशन् ददत् प्रभृष्टपललान् प्रभृष्टं पक्वं पललं मांसं यैस्तान्दुष्टान् क्षिपन् प्रेरयन् निरस्यन् अत एव अरिमतिं शत्रुबुद्धिं विलिखन् विदारयन् अलग्नमनसो दुर्व्यापारेषु अलग्नमलज्जितं मनो येषाम् तान् खलान् दुष्टान् उद्वेजयन् भीषयमाणः कम्पयन् वा सन् क्रमात् तत्र तत्र विलम्बमानः ऋषन् गच्छंश्च सन् अवशलज्जमानाङ्गनं भगवत्प्रेम्णा अवशा व्याकुला लज्जमानाः सव्रीडाः अङ्गनाः स्त्रियो यस्मिन् तम् नगरगर्भं पुरोऽन्तर्भागम् अजुषत् असेवताऽऽश्रितवान् । पृथ्वी छन्दः "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् ॥ ७२ ॥

तुदन्निति । १२८१ तुद-व्यथने । शता । प्रणुदमानः । १२८२ णुद-प्रेरणे ।

(टि०) १ भट्टोजिसम्मतधातुपाठे तु 'द' इति लभ्यते तदा तु दुदरिति पाठःस्यात् ।

शानच् । **दिशन्** । १२८३ दिश-अतिसर्जने । दानं तत् । शता । **प्रभृष्टे**ति । १२८४ भ्रस्ज-पाके । कर्मणि क्तः । कित्वात् संप्रसारणम् । 'स्कोः—(८।२।२९) इति सलोपः **क्षिपन्** । १२८५ क्षिप-प्रेरणे । निरसननिन्दादयोऽपि प्रेरणभेदा एव । **कृषन्** । १२८६ कृष-विलेखने । तदत्र हलकर्म । द्वयोः शता । तुदादयोऽनुदात्ताः स्वरितेतः । **ऋषन्** । १२८७ ऋषी-गतौ । शता । उदात्त उदात्तेत् । **अजुषत्** । १२८८ जुषी-प्रीतिसेवनयोः । लङ् । **उद्वेजयन्** १२८९ ओ+विजी—भयचलनयोः । प्रायेणोत्पूर्वः । अस्माण्णिचि शता । **अलग्ने**ति १२९० ओ लजी-१२९१ ओ लस्जी-व्रीडने । लजेः कर्तरि क्तः । **लज्जमाने**ति । लस्जेः शानच् । सस्य जश्त्वम् । 'ओ नजी-ओ नस्जी-व्रीलने' इति चान्द्रमतं माधवदूषितम् । जुषादय उदात्ता अनुदात्तेतः ॥ ७२ ॥

नगरगर्भं वर्णयति पञ्चभिः—

**वृक्णव्याचरसोञ्छती फलगणानव्युच्छितायां निशि**
**स्नान्ती नर्च्छति मिच्छिता सुजनता यस्मिन्हितं जर्जती ।**
**चर्चन्ती कटु झर्झती बुधजनं दोषं त्वचित्वर्चती**
**नित्यं भूपतिमुज्जनोज्झितमना यत्रास्त खल्या सुखम् ॥ ७३ ॥**

**वृक्णे**ति **वृक्णव्याचरसा** वृक्णः छिन्नो व्याचे व्याजे रस आग्रहो यया सा **फलगणान्** फलनिकरान् **उञ्छती** पृथक् पृथक् आददाना **अव्युच्छितायाम्** अव्युषितायां **निशि** प्रत्यूषे एवेत्यर्थः स्नानं कुर्वाणा **हितं** श्रेय एव **जर्जती** सर्वतो भाषमाणा **सुजनता** सज्जनसमूहो **मिच्छिता** क्लेशिता सती **यस्मिन्** पुरे **न ऋच्छति** याति **कटु** क्रूरं **चर्चन्ती** परिभाषमाणा **बुधजनं** सत्पुरुषं **झर्झती** सन्तर्जयन्ती **भूपतिं** राजानं कंसं **दोषं त्वचित्वा** आच्छाद्य **नित्यं** सर्वदा **ऋचती** स्तुवन्ती **उज्जनोज्झितमनाः** उज्जनेनार्जवेन उज्झितं रहितं मनो हृदयं यस्याः सा **खल्या** खलसमूहो **यत्र सुखं** यथा तथा **आस्त** तिष्ठतिस्म । **शार्दूलविक्रीडितं** छन्दः ॥ ७३ ॥

**वृक्णे**ति । १२९२ ओ+व्रश्चू-छेदने । कर्मणि क्तः । **व्याचे**ति । १२९३ व्यच-व्याजीकरणे । घञ् । **उञ्छती** । १२९४ उछि-उञ्छे । शतरि ङीप् । 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः । **अव्युच्छितायाम्** । १२९५ उछी-विवासे । प्रतिक्रमबन्धनवर्जनेषु च दृष्टे । कर्तरि क्तः । **ऋच्छति** । १२९६ ऋच्छ-गतीन्द्रियप्रलय-

मूर्तिभावेषु । इन्द्रियप्रलयो मोहः । मूर्तिभावः काठिन्यम् । अस्मात्क्तः । मिच्छिता । १२९७ मिच्छ-उत्क्लेशे । स च पीडा । कर्मणि क्तः । जर्जती चर्चति । झर्झति १२९८ जर्ज-१२९९ चर्च-१३०० झर्झ-परिभाषणसंतर्जनयोः । आद्यान्त्यावपि चान्ताविति एके । एषां शतरि ङीप् । त्वचित्वा । १३०१ त्वच-संवरणे । क्त्वा । ऋचती १३०२ ऋच-स्तुतौ । शतरि ङीप् । उब्जनेति । १३०३ उब्ज-आर्जवे । ल्युट् । उज्झितेति । १३०४ उज्झ-उत्सर्गे । दस्य चुत्वम् । कर्मणि क्तः ॥ ७३ ॥

शत्रूल्लोभकरेफरीढितृपिता तृम्फाय तोपार्थिनो
राज्ञो नित्यमतुम्पकान्वितुफती बन्धूंश्च संतुम्फती ।
युद्धेषूद्दृपिताहितेष्वदृफिता यस्मिन्नृफन्ती सुरा-
नृम्फार्हा पृतना स्थिता सगुफितैर्माल्यैः कचान्गुम्फती ॥ ७४ ॥

शत्रूनिति । शत्रूल्लोभकरेफरीढितृपिता शत्रूणामुल्लोभकस्य मोहकस्य रेफस्य युद्धस्य रीढ्या कथनेन परस्परोक्त्या तृपिता सदा सन्तुष्टा । तोपार्थिनो हिंसेच्छो राज्ञः कंसस्य भूपतेः तृम्फाय सन्तोषाय अतुम्पकान् अहिंसकान् नित्यं सदा वितुफती हिंसती बन्धून् स्वसम्बन्धिनः च सन्तुम्फती हिंसती उद्दृपिताहितेषु उद्दृपिता उच्चैः क्लेशिताः अहिताः शत्रवो येषु तेषु युद्धेषु रणेषु अदृफिता अक्लेशिता अप्रयत्ना सुरान् देवान् ऋफन्ती हिंसन्ती ऋम्फार्हा ऋम्फं भगवत्कृतं वधमर्हतीति सा पृतना सेनाविशेषः सगुफितैः सम्यग्ग्रथितैः माल्यैः कचान् केशान् गुम्फती बध्नती सती यस्मिन् पुरे स्थिता उषिता आसीत् ( वृत्तमुक्तम् ) ॥ ७४ ॥

उल्लोभकेति १३०५ लुभ-विमोहने विमोहनं व्याकुलीकरणं । ण्वुल् । रेफेति । १३०६ रिफ-कत्थनयुद्धनिन्दाहिंसादानेषु । अस्माद् घञि रेफः । रीढीति । रिह-इत्येके क्तिन् । तृपिता । १३०७ तृप-१३०८ तृन्फ-तृप्तौ । प्रीणाने द्रुमे । आद्यः तृफेत्येके । तृपेः कर्तरि क्तः । तृम्फाय । तृम्फेर्घञ् । तोपेति । १३०९ तुप-१३१० तुन्प-१३११ तुफ-१३१२ तुन्फ-हिंसायाम् । तुपेर्घञ् । अतुम्पकान् । तुम्पेर्ण्वुल् । वितुफती । संतुम्फती । तुफितुम्फ्योः शतरि ङीप् । उद्दृपितेति ।

(टि०) १ भर्त्सनयोः इति सि० कौ० ।

१३१३ दृभ-१३१४ दृन्फ-उत्क्लेशे । आद्योऽपि फान्त इत्येके । दृफेः कर्मणि क्तः । अदृफिता । दृम्फेः कर्मणि क्तः । नकारलोपः । ऋफन्ती । १३१५ ऋफ-१३१६ ऋन्फ-हिंसायाम् । ऋफः शतरि ङीप् । मृम्फेति । ऋम्फेर्घञ् । सुगुफितैः । १३१७ गुफु-१३१८गुन्फ-ग्रन्थे । गुफेः कर्मणि क्तः । गुम्फतीति । गुम्फः शतरि ङीप् ॥७४॥

**पीयूषोभितहेमकुम्भविशुभद्वक्षोजशुम्भत्तमा**
**दृब्धस्रग्धरचृत्तकैश्यविधितां शोभां जुडन्त्योऽजुनन् ।**
**नार्यः संमृडदालिकेलिपृडिता यस्मिन्पृणन्त्यः प्रिया-**
**न्नित्यं तैर्वृणिता मृणालकमनीयाङ्ग्यो वितोणाशयाः ॥ ७५ ॥**

**पीयूषेति पीयूषोभितहेमकुम्भविशुभद्वक्षोजशुम्भत्तमा** पीयूषेणोभितः पूरितो यो हेमकुम्भः सुवर्णकलशस्तद्वद्विशुभद्भ्यां शोभमानाभ्यां वक्षोजाभ्यां स्तनाभ्यां शुम्भत्तमा अत्यन्तं शोभमानाः **दृब्धस्रग्धरचृत्तकैश्यविधितां** दृब्धस्रजो ग्रथितायाः मालाया धरं धारकम् चृत्तं भङ्ग्यनुरूपं बद्धञ्च यत्कैश्यं केशसमूहस्तेन विधिनां विहितां **शोभां** कान्तिं **जुडत्यः** प्राप्नुवन्त्यः **संमृडदालिकेलिपृडिताः** संमृडन्तीनां सुखायमानानामालीनां सखीनां केल्यां परीहास पृडिताः सुखिताः "आली सखी वयस्या" इति । "द्रवकेली परीहासः" इति चामरः । **प्रियान्** पतीन् **पृणन्त्यः** प्रसादयन्त्यः **तैः** पतिभिः **नित्यं** सदा **वृणिताः** प्रीणिताः **मृणाल कमनीयाङ्ग्यः** मृणालवत्कमनीयं शोभनमङ्गं शरीरं यासां ताः **वितोणाशयाः** वितोणो विगतकौटिल्य आशयोऽभिप्रायो यासां ताः "अभिप्रायश्छन्द आशयः" इत्यमरः । **नार्यः** स्त्रियः **यस्मिन्** नगरे **अजुनन्** समचरन् । वृत्तमुक्तम् ॥ ७५ ॥

**उभितेति** । १३१९ उभ-१३२० उन्भ-पूरणे । उभेः कर्मणि क्तः । **कुम्भेति** । केन जलेन उम्भ्यते इति कुम्भः । उम्भेः कर्मणि घञ् । पृषोदरादित्वादकारलोपः । **विशुभत्** । **शुम्भदिति** । १३२१ शुभ-१३२२ शुन्भ-शोभार्थे । हिंसायां च द्रुमे । द्रुगोः शता । **दृब्धेति** । १३२३ दृभी-ग्रन्थे । कर्मणि क्तः । **चृत्तेति** । १३२४ चृती-हिंसाग्रन्थनयोः । प्राग्वत् क्तः । **विधिताम्** । १३२५ विध-विधाने । प्राग्वत् क्तः । **जुडन्त्यः** । १३२६ जुड-गतौ । जुन-इत्येके । जुडेः शतरि ङीप् । **अजुनन्** । जुनेर्लङ् । **संमृडदिति** । १३२७ मृड-सुखने । शता ।

पृडितेति । १३२८ पृड—च । कर्मणि क्तः । पृणन्त्यः । १३२६ पृण—प्रीणने । शतरि ङीप् । वृणिताः १३३० वृणोति च भाव्ये । कर्मणि क्तः । मृणालेति । १३३१ मृण—हिंसायाम् । "तमिविडिमृणिकुलिपलिपाचिभ्यश्च" (उ०) इति भोजोक्तः कालन् । तोणेति । १३३२ तुण—कौटिल्ये । घञ् ॥ ७५ ॥

चाणूरादयोऽपि पुरे सुखं स्थिता इत्याह—

ईशस्य पुण्यसुगमस्य वधं मुणन्तो
मल्लाश्च यत्र चुकुणुः शुनका इवोच्चैः ।
विद्रोणनेष्वघुणिता मदघूर्णदक्षा
युद्धे सुरानपि खरोत्कुरिताः खुरन्तः ॥ ७६ ॥

ईशस्येति पुण्यसुगमस्य पुण्यैः श्रेयोभिः सुगमस्य सुखप्राप्यस्य ईशस्य श्रीकृष्णस्य वधं व्यापादनं मुणन्तः प्रतिजानानाः विद्रोणनेषु हिंसासु अघुणिता असंभ्रान्ता मदघूर्णदक्षाः मदेन मद्यादिजनितेन घूर्णन्ति भ्रमन्ति अक्षीणि नेत्राणि येषां ते । युद्धे रणे खरोत्कुरिताः खरं परुषमुत्कुरितमुच्चैस्तरः शब्दो येषां तादृशाः सन्तः सुरान् देवान् अपि खुरन्तः छिन्दन्तो मल्ला योद्धारश्च यत्र यस्मिन्नगरगर्भे शुनकाः श्वानः "शुनको भषकः श्वा स्यात्" इत्यमरः । इव उच्चैः तारं चुकुणुः शब्दमकुर्वन् । वसन्ततिलका वृत्तम् ॥ ७६ ॥

पुण्येति । १३३३ पुण-कर्मणि शुभे । 'जनिकृतिपुणिभ्यः क्यप्' इति भोजोक्तेः क्यप् । मुणन्तः । १३३४ मुण-प्रतिज्ञाने । शता । चुकुणुः । १३३५ कुण-शब्दोपकरणयोः । उपकरणं वाद्यवादनसाधनभावः । लिट् । शुनकाः १३३६ शुन-गतौ । क्वुन् । विद्रोणनेषु । १३३७ द्रुण-हिंसागतिकौटिल्येषु । ल्युट् । अघुणिताः १३३८ घुण-१३३९ घूर्ण-भ्रमणे । घुणेः कर्तरि क्तः । घूर्णदिति । घूर्णेः शता । सुरान् । १३४० षुर-ऐश्वर्यदीप्त्योः । 'इगुपध-'(३।१।१३५)इति कः । उत्कुरितेति १३४१ कुर-शब्दे । 'नपुंसके भावे क्तः' ( ३।३।११४ ) । खुरन्तः । १३४२ खुर-छेदने । शता ॥ ७६ ॥

कंसस्य सुखासनस्थानमिदमित्याह—

मुरादिबन्धुः क्षुरघोरचेताः पुरन्खलानां जनजीवघर्ही ।
कंसः स्थितो यत्र ततर्ह लोकं स्तृढामरस्तृंहकरानभीच्छन् ॥ ७७ ॥

**मुरादीति मुरादिबन्धुः** मुरादयो बन्धवो यस्य **क्षुरघोरचेताः** क्षुरवत् घोरं भीमं चेतो मनो यस्य स **खलानां** दुर्जनानां **पुरन्** अग्रे गच्छन् **जनजीववर्ही** जनानां जीवं वर्हितुमुन्मूलयितुं शीलं यस्य सः **स्तृढामरः** स्तृढा मर्दिता अमरा देवा येन सः **कंसः तृंहकरान्** हिंसाकरणशीलान् **अभीच्छन्** आभीक्ष्ण्येन इच्छन् **यत्र** नगरमध्ये **स्थितो** वसन् **लोकं** जनसमूहं **ततर्ह** हिंसितवान् । **उपजातिः** छन्दः । "अनन्तरोदीरितलक्ष्मभाजौ । पादौ यदीयावुपजातयस्ताः" इति लक्षणात् ॥ ७७ ॥

**मुरेति** । १३४३ मुर-संवेष्टने । कः । **क्षुरेति** । १३४४ क्षुर-विलेखने । खनने च द्रुमे । कः । **घोरेति** । १३४५ घुर-भीमार्थशब्दयोः । घञ् । **पुरन्** । १३४६ पुर-अग्रगमने । शता । **जनजीववर्ही** । १३४७ वृहू-उद्यमे । स चोन्मूलनम् । णिनिः । **ततर्ह** । १३४८ तृहू-१३४९ स्तृहू-१३५० तृन्हू-हिंसार्थाः । ष्टृन्हू-इत्यप्येके । तृहेर्लिट् । **स्तृढेति** । स्तृहेः कर्मणि क्तः । **तृंहेति** । तृंहेर्घञ् । **अभीच्छन्** । १३५१ इष-इच्छायाम् । केचिदुदितं पठन्ति । शता ॥ ७७ ॥

तत्रापि भाग्यवन्तो भगवन्तमतृप्तदृष्ट्यो दृष्टवन्त इत्याह—

**गतनिमेषमुदैक्षि किलन्विभुः सुकृतिभिः स जगत्तिलकाकृतिः ।**
**चिलितपीतपटेन चलन्निलन्नविलितोरुकृपां परितो दृशम् ॥ ७८ ॥**

**गतेति जगत्तिलकाकृतिः** लोकानां मस्तकालङ्कारस्वरूपः **स विभुः** व्यापकः श्रीकृष्णः **चिलितपीतपटेन** वेष्टितपीताम्बरेण **चिलन्** परिधाय विलसन् **अविलितोरुकृपाम्** अविलिता असंवृता प्रकाशिता उर्वी महती कृपा यस्याम् तां **दृशं** दृष्टिं **परितः** सर्वतः **इलन्** प्रेरयन् **किलन्** क्रीडंश्च सन् **सुकृतिभिः** पुण्यकर्मभिः **गतनिमेषं** चक्षुःस्फोरणरहितं यथा तथा **उदैक्षि** उच्चैरधिकं दृष्टः । **द्रुतविलम्बितं** छन्दः । "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ ७८ ॥

**निमेषेति** । १३५२ मिष-स्पर्धायाम् । अयमुन्मीलनार्थेऽपि । अस्माद्धञ् । **किलन्** । १३५३ किल-श्वैत्यक्रीडनयोः [ श्वत्य इत्येके । ] शता । **तिलकेति** । १३५४ तिल-स्नेहने । 'इगुपध' इति कः । अस्मादिवार्थे कन् । **चिलितेति** । १३५५ चिल-वसने । कर्मणि क्तः । **चलन् इलन्** । १३५६ चल-विलसने । १३५७ इल-स्वप्नप्रेरणयोः ( क्षेपणयोरिति सि० कौ० ) । द्वयोः शता । **आविलितेति** । १३५८ विल-संवरणे । कर्मणि क्तः ॥ ७८ ॥

भक्तमनोनन्दाय अतिक्रूरेऽप्यत्र क्रीडितवानित्याह—

विलशयप्रतिमैर्निलिते पुरे स हि सुहृत्सु हिलन्नचरत्सुखम् ।
शिलितधान्यसिलप्रणतो हरिः प्रमिलतां हृदये लिखिताकृतिः ॥७९॥

विलशयेति शिलितधान्यसिलप्रणतः शिलितं कणश मात्तं धान्यानां सिलं क्षेत्रविकीर्णबीजं यैस्तैः प्रणतः नमस्कृतः प्रमिलतां स्वस्मिन् सम्यक् संश्लिष्यताम् आसक्तानां हृदये मनसि लिखिताकृतिः लिखिता तद्वत्स्थिरीभूता आकृतिः मूर्तिः यस्य स हरिः श्रीकृष्णः हि प्रसिद्धो विलशयप्रतिमैः सर्पसमैः दुष्टैः निलिते गहनीभूते पुरे मथुरायां सुहृत्सु अक्रूरादिषु हिलन् स्वाभिप्रायं प्रकाशयन् सन् सुखं यथा तथा आचरत् विजहार । वृत्तमुक्तम् ॥ ७९ ॥

बिलेति । १३५९ बिल–भेदने । अस्यांकर्मकत्वं स्वाम्याह । अस्मादिगुपधात् कः । निलिते । १३६० णिल–गहने । कर्तरि क्तः । हिलन् । १३६१ हिल-भावकरणे । अभिप्रायसूचनं तत् । शता । शिलितेति । १३६२ शिल-१३६३ षिल–उञ्छे । शिलेः कर्मणि क्तः । सिलेति । सिल्यते उञ्छयत इति सिलः । घञर्थे कः । प्रमिलताम् । १३६४ मिल–श्लेषणे । शता । लिखितेति । १३६५ लिख–अक्षराविन्यासे । कर्मणि क्तः ॥ ७९ ॥

अथ कंसस्यातिभयेन दृढध्यानसिद्धये धनुर्भञ्जनं कृतमित्याह—

ततोऽतिकुटिलाशयैः प्रपुटितैः कुचज्जीवतै-
र्गुजद्भिरपि सैनिकैः सुगुडितां डिपद्भिर्जनान् ।
सुधाच्छुरितविस्फुटस्मितरुचैव धैर्यं मुट-
न्धनुस्त्रुटनतो मनाक्प्रतुटनाय शालामगात् ॥ ८० ॥

तत इति ततः तदनन्तरं सुधाच्छुरितविस्फुटस्मितरुचा सुधया ऽमृतेन छुरिता लिप्ता विस्फुटा विकसिता प्रकाशिता या रुक् हसितदीप्तिः तया एव धैर्यं धृतिं मुटन् प्रमर्दयन् नाशयन् धनुस्त्रुटनतः चापच्छेदेन मनाक् अल्पं प्रतुटनाय कंसस्य कलहं (मल्लयुद्धं) कर्तुम् अतिकुटिलाशयैः सुवक्रचित्तैः प्रपुटितैः सम्यगेकत्र संघाताभूतैः जनान् लोकान् डिपद्भिः क्षिपद्भिः निरस्यद्भिः गुजद्भिः सदाक्रन्दद्भिः अपि कुचज्जीवतैः कुचत् (संकुचितं) रातप्रायं जीवितं प्राणाः येषां तैः (इति विरोधः)

**सैनिकैः** भटैः योद्धृभिः **सुगुडितां** सम्यग्रक्षितां **शालां** धनुःशालाम् **अगात्** प्राप्तः। **पृथ्वी** छन्दः । लक्षणमुक्तम् ॥ ८० ॥

**कुटिलेति**। १३६६ कुट—कौटिल्ये। इतः कुङ्ङन्ताः कुटादयः। अस्मात् "गुपादिभ्यः कित्"(उ०)इतीलच्। अत्र कित्वं वृथा। ङित्वेनैव गुणाभावात्। **प्रपुटितैः** १३६७ पुट—संश्लेषणे। कर्तरि क्तः। **कुचद्भिः** ति। १०६८ कुच—संकोचने। शता। **गुजद्भिः**। १३६९ गुज—शब्दे। अव्यक्त इत्येके। शता। **सुगुडिताम्**। १३७० गुड—रक्षायाम्। कर्मणि क्तः **डिपद्भिः**। १३७१। डिप—क्षेपे। शता। **छुरितेति**। १३७२ छुर—छेदने। लेपनेऽपि दृष्टः। कर्मणि क्तः। **विस्फुटेति**। १३७३ स्फुट—विकसने। क्तः। **मुटन्**। १३७४ मुट—आक्षेपमर्दनयोः। शता। **त्रुटनतः**। १३७५ त्रुट्—छेदने। प्रायोऽस्य द्वैधीभावे वृत्तिः। ल्युट्। **प्रतुटनाय**। १३७६ तुट—कलहकर्मणि। ल्युट्॥ ८०॥

**पोड्योऽयं चुडतेति केऽपि जुडतेत्यन्ये कडन्तोऽलुठ-**
**न्देवे स्वैर्छुलिते कुडत्त्विषि कुडद्गात्रे पुडित्वादरम्।**
**ईशश्चाघुटितस्तुडन्खलमुदं रोषं थुडन्प्रस्फुड-**
**न्धाम स्वं स्फुरितो जगाम धनुषः पार्श्वं क्षणादस्फुलन्॥ ८१॥**

**पोड्योयमिति केऽपि** भटाः **कडन्तो** माद्यन्तः सन्तः **स्वैः** आत्मीयैः **छुलिते** संश्लिष्टे **कुडत्त्विषि** घनीभवच्छोभे **कुडद्गात्रे** शिशुभवद्देहेऽपि **देवे आदरं** बहुमानं **पुडित्वा** त्यक्त्वा "**अयं पोड्यः** छेद्यः एनं सर्वे **चुडत** छिन्त" **इति** एवं वदन्तः **अन्ये** "**जुडत** बध्नीत **इति**" वदन्तश्च सन्तः **अलुठन्** युद्धशालायां संश्लिष्टाः संघातीभूता आसन्। **अघुटितो**ऽप्रतिहतः **स्फुरितः** सञ्चलितः प्रकाशमानो वा **ईशश्च** श्रीकृष्णोपि **खलमुदं** खलानां दुर्जनानां मुदं हर्षं **तुडन्** दारयन् **रोषं** कोपं **थुडन्** आच्छादयन् **स्वम्** असाधारणं **धाम** तेजः प्रभावं "गृहदेहत्विट्प्रभावा धामानि" इत्यमरः। **प्रस्फुडन्** तिरोहितं कुर्वन् **अस्फुलन्** अकम्पमानश्च सन् **क्षणात्** शीघ्रं **धनुषः** चापस्य **पार्श्वं** समीपं **जगाम** गतवान्। **शार्दूलविक्रीडितं** छन्दः॥८१॥

**पोड्य** इति। १३७७ पुड[1]१३७८ चुड—छेदन पुडेण्यत्। **चुडत**।

(टि०) १ चुट—छुट इति सि० कौ०।

चुडेर्लोट् । चुडत । १३७९ जुड-बन्धने । लोट् । कडन्तः । १३८० कड-मदे । शता । अलुठन् । १३८१ लुठ-संश्लेषणे । लुडेत्येके । लुठेर्लङ् । लुलितेति । लुडेः कर्तरि क्तः । कुडदिति । १३८२ कृड-घनत्वे । सान्द्रता तत् । शता । कुडादिति । १३८३ कुड-बाल्ये । संघात इत्येके । भक्षणे च द्रुमे । शता । पुडित्वा । १३८४ पुड-उत्सर्गे । क्त्वा । अघुटितः । १३८५ घुट-प्रतिघाते । कर्तरि क्तः । तुडन् । १३८६ । तुड-तोडने । तच्च भेदनम् । शता । थुडन् । प्रस्फुडन् । १३८७ थुड-१३८८ [२]स्फुड-संवरणे । कुड-कुड-इत्येके । आद्ययोः शता । स्फुरितः । १३८९ स्फुर-१३९० स्फुल-संचलने । स्फुर-स्फुरणे स्फुल-संचलने इति केचित् । तत्र स्फुरणं शोभा । स्फुरेः कर्तरि क्तः । अस्फुलन् । स्फुलेः शता ॥ ८१ ॥

क्षौमेण स्फुडितं स्रजा निचुलितं चाव्रोड्यशोभं धनु-
र्गेहक्रोडतले स मोदकुलितो दृष्ट्वागुरिष्ट क्षणात् ।
नूत्या किं भयधूतविद्रुतगुवल्लोकं तदा तद्ध्रुव-
त्कोदण्डं कुवमानमैक्षि दलितं भोजेश्वराकूतवत् ॥ ८२ ॥

स श्रीकृष्णः क्षौमेण वल्कलजादिशुद्धवस्त्रेण "क्षौमं कल्कलजांशुके शणजेऽतसीजे" इत्यमरः । स्फुडितं संवृतं स्रजा मालया च निचुलितं संवृतं तथापि अव्रोड्यशोभम् अनाच्छादनीयप्रभं च धनुः चापं दृष्ट्वा वीक्ष्य गेहक्रोडतले गृहस्य संवृतप्रदेशेऽन्तर्भागे मोदकुलतः हर्षे मग्नः सन् क्षणात् शीघ्रम् अगुरिष्ट उद्धृतवान् । नूत्या बहुस्तुत्या किं मुख्यं तथ्यं वदामीति भावः तदा उद्धृतिकाले ध्रुवत् स्थिरीभवत् अपि तत् कोदण्डं धनुः "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः । भयधूतविद्रुतगुवल्लोकं भयेन साध्वसेन धूतो वेपितो विद्रुतो धावितो गुवत् पुरीषमुत्सृजंश्च लोको यस्मिन् कर्मणि तत् यथा तथा कुवमानं शब्दायमानं सत् भोजेश्वराकूतवत् भोजनामक देशपतेः कंसस्य आकूतवत् अभिप्राय इव दलितं खण्डितं भग्नमिति यावत् ऐक्षि तत्र समवेतैर्जनैः दृष्टम् । शार्दूलविक्रीडितं वृत्तम् ॥ ८२ ॥

स्फुडितमिति-। १३९१ स्फुड-१३९२ चुड-१३९३ व्रुड-संवरणे । क्रुडेत्येके । स्फुडेः कर्मणि क्तः । निचुलितम् । चुडेः प्रागवत् क्तः । अव्रोड्येति ।

(टि०) १ जुट इति सि० कौ० । २ स्थुड इति सि० कौ० ।

व्रुडेयर्यत् । क्रोडेति । क्रुडेर्घञ् । कुलितः । १३९४ कुडि-१३९५ रुड-निमज्जने इति चैके । कुडेः कर्तरि क्तः । व्रश्चादय उदात्ता उदात्तेतः । अगुरिष्ट । १३९६ गुरी-उद्यमने । उद्धरणं तत् । अयमुदात्तोऽनुदात्तेत् । लुङ् । नूत्या । १३९७ णू-स्तवने । क्तिन् । धूतेति । १३९८ धू-विधूनने । क्तः । गुवादिति । १३९९ गु-पुराषोत्सर्गे । उवङ् । शता । ध्रुवत् । १४०० ध्रु-गतिस्थैर्ययोः । ध्रुव-इत्येके । द्वयोः सह शता । अनजन्तस्य सेट्त्वं भेदः । गुध्रू अनुदात्तौ । ध्रुव उदात्तः । णूप्रभृतयः परस्मैभाषाः । कुवमानम् । १४०१ कुङ्-शब्दे । शानच् । आकूतेति । कूङित्येके । क्तः । वृत् । कुट्यादिर्वृत्तः ॥ ८२ ॥

अनेन धनुर्भङ्गेन कंसस्य महद् भयं जातमित्याह—

**व्यापारेऽत्र तदाऽमरानपि रियन्नाशा पियन्नाधित-**
**क्रौर्योत्क्षीणधनुष्प्रसूतनिनदः कंसे व्यकारीद्गरम् ।**
**येनानादरवान्धृतोपि स चलन्पृच्छन्किमित्युत्सृज-**
**न्धैर्यं मग्नमनाश्च हृद्रुजि चिरं भुग्नाननस्तस्थिवान् ॥ ८३ ॥**

**व्यापारे** इति **तदा** त्रुटिसमये **आधितक्रौर्योत्क्षीणधनुःप्रसूतनिनदः** आधितक्रौर्यः सम्यग्धारितनृशंसताकः उत्क्षीण उद्गतः धनुषा प्रसूतः प्रेरितश्च यो निनदः ध्वनिः सः **अत्र** ईदृशे **व्यापारे** त्रोटनरूपे **अमरान्** देवान् **अपि रियन्** प्राप्नुवन् **आशाः** दिशः **पियन्** व्याप्नुवन् **कंसे** भोजेश्वरे **गरं** विषं **व्यकारीत्** क्षिप्तवान् अत्यन्तपीडामकरोदित्यर्थः । **येन** निनदेन **सः** कंसः **अनादरवान्** अन्यत्र निरस्तबहुमानः सन् **धृतः** अवस्थितो धारितो वा **अपि चलन्** वेपमानः "**किम्** इदं जातम्" **इति** एवं **पृच्छन् धैर्यं** जीवनाश्वासम् **उत्सृजन्** त्यजन् **हृद्रुजि** आधौ **मग्नमना** व्रुडितचेताश्च सन् **चिरं** बहुकालं **भुग्नाननः** अवनतमुखः **तस्थिवान्** स्थितोऽभूत् वृत्तमुक्तम् ॥ ८३ ॥

**व्यापार** इति । १४०२ पृङ्-व्यायामे । स च प्रवृत्तिमात्रम् । प्रायेण व्याङ्-पूर्वोऽयम् । घञ् । **अमरान्** । १४०३ मृङ्-प्राणत्यागे । अच् । कुङादय आत्मनेभाषा अनुदात्ताः कूङ्वर्जम् । **रियन्-पियन्** । १४०४ रि-१४०५ पि-गतौ । द्वयोः शता ।

( टि० ) १ क्रुड—भृड इति सि० कौ० ।

**आधितेति** । १४०६ धि-धारणे । गताविति द्रुमे । कर्मणि क्तः । **उत्क्षीणेति** । १४०७ क्षि-निवासगत्योः । कर्तरि क्तः 'निष्ठायामण्यदर्थे' ( ६।४।६० ) इति दीर्घः । 'क्षियो दीर्घात्'(८।२।४६) इति नत्वम् । **प्रसूतेति** । १४०८ षू-प्रेरणे । कर्मणि क्तः । **व्यकारीत्** । १४०९ कॄ-विक्षेपे । लुङ् । **गरम्** १४१० गॄ-निगरणे । अच् । रियत्यादयः परस्मैभाषाः । **अनादरेति** । १४११ दृङ्-आदरे । अत्रैव निपातनात् घञ्यवृद्धिः । **धृतः** । १४१२ धृङ्-अवस्थाने । धारणे च द्रुमे । क्तः । अनुदात्तावात्मनेभाषौ । **पृच्छन्** । १४१३ प्रच्छ-ज्ञीप्सायाम् । तुक् । शता । 'ग्रहिज्या–' ( ६।१।१६ ) इति संप्रसारणम् वृत् । किरादिर्वृत्तः । **उत्सृजन्** । १४१४ सृज-विसर्गे । विसर्गः उत्पादनं त्यागश्च । शता । **मग्नेति** । १४१५ टु मस्जो-शुद्धौ । कर्तरि क्तः । **रुजि** १४१६ रुजो भङ्गे । भावे क्विप् । **भुग्नेति** । १४१७ भुजो कौटिल्ये । कर्तरि क्तः ॥ ८३ ॥

चापखण्डेषु हतेषु कंसः पर्याकुलचित्तोऽपि मल्लयुद्धोद्योगमकरोदित्याह—

**रोषच्छुप्तधियाऽथ रोष्टुमभितो योधान्द्विषद्रेशका-**
**नालिष्टानजितो जघान धनुषः खण्डेन मर्मस्पृशा ।**
**ते विच्छायदघा दिवं प्रविविशुः कंसो विमर्शाकुलो**
**मल्लादीननुदत्परेद्यवि हरेरुत्सन्नशत्रोर्वधे ॥ ८४ ॥**

**रोषेति अथ** धनुर्भङ्गेन सञ्जनितचिन्तोत्तरम् **अजितः** न केनाप्यभिभूतः श्रीकृष्णः **रोषच्छुप्तधिया** रोषेण क्रोधेन छुप्तया स्पृष्टया धिया बुद्ध्या **रोष्टुं** हन्तुम् **अभितः** उभयतः **आलिष्टान्** आगतान् **द्विषद्रेशकान्** द्विषतां शत्रूणां रेशकान् हिंसकान् **योधान्** भटान् **मर्मस्पृशा** अरुन्तुदेन मर्मवेधिना, "अरुन्तुदस्तु मर्मस्पृक्" इत्यमरः । **धनुषः** चापस्य **खण्डेन** एकदेशेन **जघान** हतवान् । **ते** योधा **विच्छायदघाः** विच्छायत् गच्छत् अघः पापं येषां तादृशाः सन्तः **दिवं** भगवल्लोकं **प्रविविशुः** प्रविष्टवन्तः । **विमर्शाकुलः** किंकर्तव्यताविचारव्याकुलः **कंसः मल्लादीन्** चाणूरादिमल्लयोद्धादीन् **परेद्यवि** आगामिदिने **उत्सन्नशत्रोः** नाशितारेरपि **हरेः** श्रीकृष्णस्य **वधे** व्यापादने **अनुदत्** प्रेरितवान् । वृत्तमुक्तम् ॥ ८४ ॥

**छुप्तेति** । १४१८ छुप-स्पर्शे । कर्मणि क्तः । **रोष्टुम्** १४१९ रुश-१४२० रिश-हिंसायाम् । रुशेस्तुमुन् । **रेशकान्** रिशेर्ण्वुल् । **आलिष्टान्** । १४२१ लिश-गतौ ।

कर्तरि कः **मर्मस्पृशा** । १४२२ स्पृश-संस्पर्शने । 'स्पृशोऽनुदके-' ( ३।२।५८ ) इति क्विन् । **विच्छायद्**िति । १४२३ विच्छ-गतौ । 'गुपूधूपविच्छि-' ( ३।१।२८ ) इत्यायान्ताच्छता । **प्रविविशुः** १४२४ विश-प्रवेशने । लिट् । **विमर्शे**ति । १४२५ मृश-आमर्शने । स्पर्शनं तत् । घञ् । **अनुदत्** । १४२६ णुद-प्रेरणे । लङ् । **उत्सन्ने**ति १४२७ षद्लृ-विशरणगत्यवसादनेषु । कर्मणि क्तः । **शत्रोः** १४२८ शद्लृ-शातने । अस्माण्णिजन्तात् 'शादेर्ह्रस्वश्च' (उ०) इति भोजोक्तेः क्रुः । प्रच्छादय उदात्तेतः अनुदात्ता विच्छिवर्जम् ॥ ८४ ॥

**मित्त्रैः संमिलमान एत्य नगरोद्यानं विमुञ्चन्भियं**
**गोपानां भयलोपिवाग्भिरबलाविन्नानुलेपं वहन् ।**
**भुक्त्वा गोरससिक्तमन्नमजितः कंसस्य कृन्तन्मुदं**
**तं खेत्स्यन्पिशिताशदारुणमसौ मोदेन निन्ये निशाम् ॥ ८५ ॥**

मित्रैरिति **असौ अजितः** श्रीकृष्णः **मित्रैः** सुहृद्भिः **संमिलमानः** सङ्गच्छमानः **नगरोद्यानं** पुरोपवनम् **एत्य** प्राप्य **भयलोपिवाग्भिः** भयनिरासकैर्वचनैः **गोपानां** बल्लवानां **भियं** कंस एवं करिष्यति २ किंकरवाम इत्यादित्रासं **विमुञ्चन्** त्याजयन् **अबलाविन्नानुलेपम्** अबलायाः कुब्जायाः सकाशात् विन्नं लब्धम् अनुलेपं घृष्टचन्दनरसं **वहन्** धारयन् **गोरससिक्तं** गोरसेन गोदुग्धेन सिक्तमार्द्रीकृतम् **अन्नं** भक्तं "भिस्सा स्त्री भक्तमन्धोन्नम्" इत्यमरः । **भुक्त्वा** भक्षयित्वा **कंसस्य** भोजराजस्य **मुदं** हर्षं **कृन्तन्** छिन्दन् **पिशिताशदारुणं** पिशिताशेषु राक्षसेष्वपि दारुणं क्रूरं **तं** तूर्वोक्तं कंसं **खेत्स्यन्** निहनिष्यन् सन् ( हेतौ शता ) अत एव **मोदेन** हर्षेण **निशां** रात्रीं **निन्ये** गमितवान् । वृत्तमुक्तम् ॥ ८५ ॥

**संमिलमान** इति । १४२९ मिल-संगमे । उदात्तः स्वरितेत् । शानच् । **विमुञ्चन्** । [१४३० मुच्लृ-मोक्षणे] । इतः परं मुचादित्वान्नुम् । शता । **भयलोपी**ति । १४३१ लुप्लृ-छेदने । णिनिः । **विन्ने**ति । १४३२ विद्लृ-लाभे । कर्मणि क्तः **अनुलेपम्** । १४३३ लिप-उपदेहे । अस्य दहनार्थत्वमप्याह शंकराचार्यः । अस्माद्घञ् । **सिक्तम्** । १४३४ षिच-क्षरणे । तच्चेहार्द्रीभावनम् । कर्मणि क्तः । मुचादयोऽनुदात्ताः

---

(टि०) 'रुशातिभ्यां क्रुन्' (उ०) शातयतीति शत्रुः मन्नादौ पाठाद्ह्रस्वत्वम् इति पु सि० कौ० ।

स्वरितेतः । विन्दिः सेडिति केचित् । कृन्तन् । १४३५ कृती-छेदने । उदात्त उदात्तेत् । शता । खेत्स्यन् । १४३६ खिद-परिघाते । अनुदात्त उदात्तेत् । लृडन्ताच्छता । पिशितेति । १४३७ पिश-अवयवे । अयं दीपनायामपि । उदात्त उदात्तेत् । भक्षणार्थमवयवशः क्रियते इत्यर्थे 'पिशिघृषिभ्यां कित्' (उ०) इति मोजोक्तेरितच् । कृत् । तुदादयो मुचादयश्च वृत्ताः शविकरणं समाप्तम् ॥ ८५ ॥

इति श्रीवासुदेवविजयपरिशिष्टीभूते धातुकाव्ये सरामगोपकृष्णप्रास्थानिक गोपीविरहावस्थावर्णनाऽनुद्विग्नकृष्णकर्तृकवर्णितयमुनास्याऽक्रूरबोधनार्थ स्वरूपदर्शन-स्तुति-मथुरोपवननिवेश-प्रेक्षकावस्थावर्णन-रजकघात-वायकमालिककुब्जातः प्रसाधन-कुब्जहृति-वर्णितपुरान्तःस्थधनुर्भङ्ग-कंस भीति—मल्लप्रेरणोत्तरभ्रात्वानिवेश प्राप्त्यशन-समुन्निशानयनवर्णनं ।

नाम द्वितीयः सर्गः ॥



# तृतीयः सर्गः ।

अथानन्ताभारहरणोद्यतस्यानन्तस्य भगवतः श्रीकृष्णस्य तृतीयदिवसवृत्तं सप्रपञ्चं वर्णयिष्यन् प्रथमतो रङ्गप्रवेशं वक्तुं पीठिकां प्रतिष्ठापयति—

**रुन्धन्दिशो दिनमुखेऽथ जगन्ति भिन्द-**
**न्प्रच्छिन्नसंशयमतिर्मुदमाशु रिञ्चन् ।**
**भेरीरवश्चतुरघातविविक्तताल-**
**श्चुक्षोद कर्णमुदयुङ्क्त च मल्ललोकः ॥ १ ॥**

**रुधन्निति अथ** निशानयनानन्तरं **दिनमुखे** दिवसप्रारम्भे **प्रच्छिन्न संशयमतिः** प्रच्छिन्ना प्रकर्षेण नाशिता संशयमतिः मल्लयुद्धार्थं श्रीकृष्णबलभद्रौ आहूतौ प्रयोजनान्तरार्थं वेति सन्देहबुद्धिर्येन सः । **चतुरघातविविक्तताल:** चतुरेण पटुप्रयुक्तेन घातेन ताडनेन विविक्ताः स्पष्टीकृताः ताला यस्मिन् सः । **भेरीरवः** दुन्दुभिनादः "भेरी स्त्री दुन्दुभिः पुमान्" इत्यमरः । **दिशः** आशा **रुन्धन्** आच्छादयन् **जगन्ति** लोकान् **भिन्दन्** विदार्य बहिर्गच्छन् इव । **मुदं** तत्र आप्तानां हर्षं **रिञ्चन्** विरचयन् त्यजन् **आशु** शीघ्रं **कर्णं** श्रोत्रम् **चुक्षोद** संपिपेष चूर्णीचकार । **मल्लोकः** चणूरादियोद्धसमूहः **उदयुङ्क्त** उद्यतोऽभूत् **च** युद्धार्थमिति शेषः । अत्र सर्गे प्रायः **वसन्ततिलका** वृत्तम् "उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥ १ ॥

**रुधन्निति** । १४३८ रुधिर्–आवरणे । **भिन्दन्** । १४३९ भिदिर्–विदारणे द्वयोः शता । **प्रच्छिन्नेति** । १४४० छिदिर्–द्वैधीकरणे । कर्मणि क्तः । **रिञ्चन्** । १४४१ रिचिर्–विरेचने । शता । **विविक्तेति** । १४४२ विचिर्–पृथग्भावे । कर्मणि क्तः । **चुक्षोद** । १४४३ क्षुदिर्–संपेषणे । लिट् । **उदयुङ्क्त** १४४४ युजिर्–योगे । लङ् । 'अजादेरप्यजन्तादप्युपसर्गात्तङ्ङिष्यते' इति तङेव । रुधादयोऽनुदात्ताः । [ स्वरितेत उभयतोभाषाः ] ॥ १ ॥

**संकूर्णगात्रमथ शात्रवतर्दिनस्ते**
**चाणूरमुष्टिकमुखा बलनान्यकुर्वन् ।**

इन्धानखेदमुदविन्त विशिष्टलोकः
पेक्ष्यत्सु माधवमभङ्गभुजेषु तेषु ॥ २ ॥

संक्षूणगात्रमिति अथ भेरीनादोत्तरं **शात्रवतर्दिनः** शात्रवाणां शत्रूणाम् अरीणां "दस्युशात्रवशत्रवः" इत्यमरः । तर्दिनः हिंसाशीलाः **ते** कंसनियुक्ता **चाणूरमुष्टिकमुखाः** तदाख्यादयः **वसनानि** मल्लयुद्धोचितानि अर्द्धोरुकादीनि **संक्षूणगात्रं** सम्यक् दीप्तानि गात्राणि अवयवाः यस्मिन्कर्मणि तद्यथा तथा **अकृन्तन्** अवेष्टन्त । **विशिष्टलोकः** विविधः सज्जनः **अभङ्गभुजेषु** अभङ्गाः कुतोऽप्यप्राप्तपराभवाः भुजाः येषां **तेषु** मल्लेषु **माधवं** श्रीकृष्णं **पेक्ष्यत्सु** संचूर्णयिष्यत्सु सत्सु **इन्धानखेदम्** इन्धानो दीप्यमानः खेदो यस्मिन्कर्मणि तद्यथा तथा **उदविन्त** उत्कृष्टं विचारं व्यधत्त । अयं शिशुर्दीनः कृशो ह्रस्वो मल्लास्तु यमकिङ्कराकारा एवं पेक्ष्यन्ति । किं करवाम । अधर्मयुद्धमिदं द्रष्टुमनर्हमित्यादि ॥ २ ॥

संक्षूणेति । १४४५ उच्छृदिर्—दीप्तिदेवनयोः । देवनं क्रीडाविजिगीषादि । 'दीप्तिवमनयोः' इत्येके । अस्मात् कर्तरि क्तः । **शात्रवतर्दिनः** । १४४६ उतृदिर्—हिंसानादरयोः । णिनिः । द्वावुदात्तौ । रुधादयः स्वरितेतः । इरितश्च । **अकृन्तन्** । १४४७ कृती–वेष्टने । उतात्त उदात्तेत् । लङ् । **इन्धानेति** । १४४८ ञि इन्धी–दीप्तौ । दीपनायामपि । उदात्तोऽनुदात्तेत् । अस्माच्छानच् । **खेदम्** । १४४९ खिद–दैन्ये । घञ् । **उदविन्त** । १४५० विद–विचारणे । लङ् । अनुदात्तावनुदात्तेतौ । **विशिष्टेति** । १४५१ शिष्लृ–विशेषणे । उत्कर्षार्थत्वात् अकर्मकादस्मात् कर्तरि क्तः । **पेक्ष्यत्सु** । १४५२ पिष्लृ–संचूर्णने । लृटि हेतौ शता । **अभङ्गेति** । १४५३ भञ्जो आमर्दने । घञ् । **भुजेति** । १४५४ भुज–पालनाभ्यवहारयोः । अनुभवेऽपि । "भुजन्युब्जौ पाण्युपतापयोः" (७ । ३ । ६१) इति निपातितः । शिषादयोऽनुदात्ताः [ उदात्तेतः ] ॥ २ ॥

को नस्तृणेढि हिनसाम समुत्तमाङ्गै-
स्तं गोपसूनुमिति तललवाप्तगात्राः ।
संतक्ततनद्धवसनाः परिवेगवृक्ता
रङ्गं समेत्य पपृचुः स्वजनांश्च मल्लाः ॥ ३ ॥

क इति **तैललवाक्तगात्राः** तैललवैः तिलादिभवस्नेहबिन्दुभिः अक्तगात्रा अभ्यक्तावयवाः **संतक्तनद्धवसनाः** सन्तक्तं संकोचितं यथा तथा नद्धानि बद्धानि वसनानि अर्द्धोरुव्याप्तवस्त्राणि यैः ते **परिवेगवृक्ताः** परिवेगेन भयेन कम्पेन वा वृक्ताः हीनाः **मल्लाः** योद्धारः । **नः** अस्मान् **कः तृणेढि** हिनस्ति । न कोपीत्यर्थः **आस्रैः** रुधिरैः "रुधिरेऽसृग्लोहितास्र–" इत्यमरः । **समुत्तं** सम्यक्क्लिन्नं सिक्ताङ्गं **तं** प्रसिद्धं **गोपसूनं** नन्दवल्लवसुतं ( अनेन गोपबालोऽसौ कियती मात्रेत्यनादरः सूचितः ) **हिनसाम** व्यापादयाम (प्राप्तकाले लोट् ) **इति** एवमुक्त्वा **रङ्गं** रणभूमिं "रङ्गो ना रागे नृत्यरणक्षितौ । अस्त्री त्रपुणि" इति मेदिनी । **समेत्य** प्राप्य **स्वजनान्** मित्राणि **च पपृचुः** सम्पर्कं तैश्चक्रुः ॥ ३ ॥

**तृणेढीति** । १४५५ तृह-१४५६ हिंसि-हिंसायाम् । तृहेर्लट् । **हिनसाम** । हिंसेर्लोट् । **समुत्तम्** । १४५७ उन्दी-क्लेदने । कर्मणि क्तः । 'नुदविदोन्द–' (८।२।५६)इति नत्वाभावे रूपम् । **अक्तेति** । १४५८ अन्जू-व्यक्तिम्रक्षण(कान्ति)गतिषु व्यक्तिः प्रकाशनम् । म्रक्षणं मिश्रीकरणम् । अस्मात्कर्मणि क्तः । **संतक्तेति** । १४५९ तन्चू-संकोचने । तन्जू-इत्येके । द्वयोस्तन्त्रेण कर्मणि क्तः । **परिवेगेति** । १४६० ओविजी-भयचलनयोः । घञ् । **वृक्ताः** । १४६१ वृजी-वर्जने । वृतौ च द्रुमे ।' वृची-वरणे' इति केचित् । कर्मणि क्तः । **पपृचुः** । १४६२ पृची-संपर्के । सकर्मकोऽयं भट्टिनोक्तः । तस्माल्लिट् । तृहादय उदात्ता उदात्तेतः । वृत् । रुधादयो वृत्ताः । इति श्नम्विकरणम् ॥ ३ ॥

**तन्वन्स मञ्चभुवि सातरसः स्वबन्धू-**
**नक्षण्वतां क्षितिकरो मुदमर्णवानः ।**
**कंसस्तृणीकृतरिपुर्घृणिमान्वतायि**
**मन्वान एकमथ मञ्चमलंचकार ॥ ४ ॥**

**तन्वन्निति** अथ मल्लसज्जीभवनानन्तरं **सातरसः** बन्धूनां दत्तानन्दः **अक्षण्वताम्** अहिंसतां **क्षितिकरः** हिंसाविधायकः **तृणीकृतरिपुः** तृणीकृताः कक्षसदृशाः विहिताः रिपवः शत्रवो येन **घृणिमान्** शोभावान् **स कंसः स्वबन्धून्** निजेष्टामत्याण **मञ्चभुवि** योग्ययोग्यकाष्ठाद्युच्चासनेषु **तन्वन्** विस्तारेण निवेशयन्

(टि०) १ अक्षरकृतम् इत्येके । तेन तनक्तीति सिद्धम् इति क्वचिदधिकः पाठः ॥

**मुदं** हर्षं "मुत्प्रीतिः प्रमदो हर्षः" इत्यमरः। **अर्णवानः** प्राप्नुवन् **वतार्त्ति** वतस्य प्रार्थितस्य आर्त्तिं लब्धिं **मन्वानः** अवबुध्यमानश्च सन्, तन्मध्ये **एकं** कञ्चिन्मुख्यं **मञ्चं** स्वर्णादिसिंहासनम् **अलंचकार** उपवेशनेन भूषितवान्॥ ४॥

**तन्वन्** १४६३ तनु विस्तारे। अयं कृत्यर्थेऽपि। अस्माच्छता। **सातेति**। १४६४ षणु-दाने। कर्मणि क्ते 'जनसन-'(३।२।६७) इति आत्वम्। **अक्षण्वताम्**। १४६५ क्षणु-हिंसायाम्। १४६६ क्षिणु-च। क्षणेः शता। **क्षितीति**। क्षिणेः क्तिन्। 'अनुदात्तोपदेश-' (६।४।३७) इति नलोपः। **अर्णवानः**। १४६७ ऋणु-गतौ। शानच्। **तृणीकृतेति** १४६८ तृणु-अदने। घञर्थे कः। तृणम्। तस्मात् 'अभूततद्भावे' इति च्विः। १४६९ घृणु-संदीपने। घण इत्येके। 'इक्कृषादिभ्यः'(उ०) इति घृणेरिक्। तनादय उदात्ताः स्वरितेतः। **वतेति**। १४७० वनु-याचने। वनेः कर्मणि क्तः। **मन्वानः**। १४७१ मनु-अवबोधने। शानच्। उदात्तावनुदात्तेतौ। वनुः परस्मैपदीति चान्द्राः। **अलंचकार**। १४७२ डु कृञ्-करणे। अनुदात्त उभयतोभाषः। अस्माल्लिट्। उविकरणं समाप्तम्॥ ४॥

अथ भगवतो रङ्गप्रवेशमाह—

**क्रीणन्गुणैर्जनमतिं प्रियरूप ईशो**
**मांसश्रियां प्रमथकृत्सितपीतचेलः।**
**मोदस्कुतोऽथ कवरीं प्रयुनन्सरामः**
**क्नूनन्मृदङ्गमिह रङ्गमगादरिदूः॥ ५॥**

**क्रीणन्निति प्रियरूपः** मनोज्ञाकृतिः **मांसश्रियां** मांसं पिशितं श्रीणन्तीति ते तेषां **प्रमथकृत्** प्रमथं हिंसनं करोतीति सः **सितपीतचेलः** सितं वद्धं पीतं हरिद्राभं चेलं वसनं येन सः "चेलं वसनमंशुकम्" इत्यमरः। **मोदस्कुतः** मोदे हर्षे स्कुत आप्लुतः। **अरिदूः** अरीन् शत्रून् दूणाति हिनस्तीति सः। **सरामः** बलभद्रेण सहितः **ईशः** श्रीकृष्णः इह मधुरानगर्यां **गुणैः** गाम्भीर्यादिभिः **जनमतिं** लोकबुद्धिं **क्रीणन्** विनिमयन् गृह्णन् वशीकुर्वन्नित्यर्थः। **कवरीं** केशजूटं **प्रयुनन्** सुबध्नन् **क्नूनन्मृदङ्गं** क्नूनन् शब्दायमानो मृदङ्गो वाद्यविशेषो यत्र तादृशं **रङ्गं** रणभुवम् **अगात्** प्राप्तः अत्र परिवृत्तिरलंकारः॥ ५॥

**क्रीणन्निति** । १४७३ डु क्रीञ्-द्रव्यविनिमये । शता । **प्रियेति** । १४७४ प्रीञ्-तर्पणे । कान्तौ च । कान्तिः कामना । 'इगुपधज्ञाप्रीकिरः कः' (३।१।१३५) इति कः । **मांसश्रियाम्** । १४७५ श्रीञ्-पाके । क्विप् । **प्रमयेति** । १४७६ मीञ्-हिंसायाम् । 'एरच्' ( ३ । ३ । ५६ ) । **सितेति** । १४७७ षिञ्-बन्धने । कर्मणि क्तः । **स्कुतेति** । १४७८ स्कुञ्-आप्रवणे । आप्लवनं तत् । आवरण इत्येके । उद्धृताविति द्रुमे । अस्मात्कर्तरि क्तः । **युनन्** । १४७९ युञ्-बन्धने । क्र्यादयोऽनुदात्ता । उभयतोभाषा । **क्नूनदिति** । १४८० क्नूञ्-शब्दे । शता । **अरिद्रूः** । १४८१ द्रूञ्-हिंसायाम् । इत्यप्येके । क्विप् ॥ ५ ॥

**द्वारं पुनन्पदतलेन स लूनवैरी**
**स्तीर्णाननं मदजलेन करीतुकामम् ।**
**नागं ददर्श पटवूर्णमुखं धुनानं**
**कर्णौ शृणन्तमखिलानभिपूर्तरोषम् ॥ ६ ॥**

**द्वारमिति लूनवैरी** लूनाः छिन्ना वैरिणः शत्रवो येन **सः** श्रीकृष्णः **पदतलेन** चरणेन **द्वारं** रङ्गदेहलीप्रदेशं **पुनन्** पवित्रयन् तत्र पादं निदधानः सन् इत्यर्थः । **मदजलेन** गण्डस्थलीयमदवारिणा **स्तीर्णाननं** छन्नमुखं **पटवूर्णमुखं** पटेन चेलेन वूर्णम् आवृतम् आच्छादितं मुखं यस्य । **कर्णौ** श्रोत्रव्यजने **धुनानं** कम्पयन्तम् **अखिलान्** समस्तान् जनान् **शृणन्तं** हिंसन्तम् **अभिपूर्तरोषम्** अभिपूर्तः पूर्णो भूतः रोषः क्रोधो यस्मिन् तं **करीतुकामं** करीतुं हिंसितुं कामोऽभिलाषो यस्य तं **नागं** हस्तिनं कुवलयापीडाख्यं **ददर्श** ऐक्षत ॥ ६ ॥

**पुनन्निति** । १४८२ पूञ्-पवने । पवनं शोधना । 'प्वादीनां ह्रस्वः' ( ७ । ३ । ८० ) इति ह्रस्वः । **लूनेति** । १४८३ लूञ्-छेदने । कर्मणि क्ते । 'ल्वादिभ्यः' ( ८।२।४४ ) इति नत्वम् । **स्तीर्णेति** । १४८४ स्तॄञ्-(आ) छादने । कर्मणि क्तः । **करीतुकामम्** । १४८५ कॄञ्-हिंसायाम् । तुमुनि 'तुमः कामे मनस्यपि' इति मलोपः । **वूर्णेति** १४८६ वॄञ्-वरणे । भरण इत्यप्येके । **धुनानम्** । १४८७ धूञ्-कम्पने । शानच् । क्नूञादय उदात्ता उभयतोभाषाः । **शृणन्तम्** । १४८८ शॄञ्-हिंसायाम् । शता । **अभिपूर्तेति** । १४८९ पॄ-पालनपूरणयोः । कर्तरि क्ते 'न ध्याख्यापॄमूर्छिमदाम्' ( ८ । २ । ५७ ) इति नत्वाभावः ॥ ६ ॥

तत्र स्परीतुमनसं रुषमावृणन्त-
मम्बष्ठमुन्मदभरं स भृणन्बभाषे ।
त्वामेष संप्रति मृणामि दृणामि नागं
नो चेज्जृणत्तम नरानकृणन्नृणीहि ॥ ७ ॥

तत्रेति तत्र द्वारे सः श्रीकृष्णः स्परीतुमनसं हन्तुकामं रुषं क्रोधम् आवृणन्तं स्वीकुर्वन्तं छादयन्तं वा उन्मदभरम् उद्भूतदर्पातिशयम् "अम्बष्ठो वैश्याद्विजन्मनोः" । इत्यमरः । अम्बष्ठं सङ्करजातिकं हस्तिपकं भृणन् भर्त्सयन् सन् बभाषे ऊचे । यत् रे जृणत्तम ! अतिवृद्ध ! एषः अहं त्वां सम्प्रति अधुनैव मृणामि हिंसयामि नागं ते हस्तिनं च दृणामि विदारयामि । नो चेत् इच्छसि यदि जीवन्तमात्मानं गजञ्च तर्हि नरान् पुरुषान् अकृणन् अहिंसन् सन् ऋणीहि मार्गाद् गच्छ अपसरेति यावत् ॥ ७ ॥

स्परीतुमनसामिति । १४९० स्पृ—हिंसायाम् । तुमुन् । प्राग्वन्मलोपः । आवृणन्तम् । १४९१ वृ—वरणे । शता । वृ—वरणभरणयोरित्येके । भरम्+भृणन् १४९२ भृ—भर्त्सने । भरणे इति केचित् 'ऋदोरप्' ( ३ । ३ । ५७ ) शता च । मृणामि । १४९३ मृ—हिंसायाम् । दृणामि । १४९४ दृ—विदारणे । भये च द्रुमे । द्वयोर्लट् । जृणदिति । १४९५ जृ—वयोहानौ । झृ-इत्येके । जृणातेः शता । नरान् । १४९६ नृ—नये । पचाद्यच् । अकृणन् । १४९७ कृ—हिंसायाम् । शता । ऋणीहि । १४९८ ऋ—गतौ । लोट् ॥ ७ ॥

इत्थं हरौ गृणति हस्तिपकोऽपि कोपी
जीनोऽप्यहं न तु रिणामि भियेति वादी ।
पार्श्वे लिनन्गजमचोदयदुन्मदान्ध-
मव्लीनशक्तिमतिघोरजवं लिनन्तम् ॥ ८ ॥

इत्थमिति कोपी रोषणः हस्तिपकः आधोरणोऽपि "अधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः । हरौ भगवति श्रीकृष्णे इत्थम् अनेन प्रकारेण गृणति शब्दायमाने सति अहं जीनो वृद्धोऽपि यद्यप्यस्मि तथापीति शेषः भिया भयेन नतु रिणामि नैव गच्छामि इति एवं वादी वदनशीलः सन् पार्श्वे गजस्यैकदेशे लिनन् शिष्टो भवन् उन्मदान्धम् उद्धतेन मदेन दानजलपतनेन "मदो

(टि०) १ अयं भट्टोजिसम्मतधातुपाठे न दृश्यते ।

दानम्" इत्यमरः । अन्धं स्वपरहिताहिताविवेकमूढम् **अक्लीनशक्तिम्** अक्लीना अनावृता प्रकटीभूता शक्तिः सामर्थ्यं यस्य तम् **अतिघोरजवं** अत्यर्थं घोरो भयानको जवो वेगा यस्मिंस्तद्यथा स्यात्तथा ( गजविशेषणं वा ) **प्लिनन्तं** गच्छन्तं **गजं** हस्तिनम् **अचोदयत्** हन्तुं प्रेरितवान् ॥ ८ ॥

**गृणतीति** । १४९९ गृ-शब्दे । शता । शॄप्रभृतय उदात्ताः परस्मैभाषाः । **जीनः** । १५०० ज्या-वयोहानौ । कर्मणि क्ते 'ग्रहिज्या' ( ६।१।१६ ) इति संप्रसारणे 'हलः' ( ६।४।२ ) इति दीर्घे ल्वादित्वान्नत्वम् । **रिणामि** । १५०१ री-गतिरेषणयोः । रेषणं वृकशब्दः । लट् । **लिनन्** । १५०२ ली-श्लेषणे । शता । **अक्लीनेति** १५०३ व्ली-वरणे । गतौ श्लेषणे च द्रुमे । कर्मणि क्तः । **प्लिनन्तम्** । १५०४ प्ली-गतौ । शता । वृत् प्वादयो वृत्ताः । ल्वादिस्तु गणान्तः ॥ ८ ॥

**व्रीताशबृंहितजुषाभ्रिणता गजेन**
**प्रक्षेतुमज्ञमनसा समनुद्रुतेन ।**
**बद्धः करेण भगवान्विहृतिं वृणानः**
**श्रथ्नन्निबद्धममुमाशु तलैरमथ्नात् ॥ ९ ॥**

**व्रीताशेति व्रीताशबृंहितजुषा** व्रीता आच्छादिता आशा दिशो येन तद्व्रीताशं बृंहितं गर्जितं "बृंहितं करिगर्जितम्" इत्यमरः । जुषति सेवते इति तेन दिक्तटपूरकशब्दकारिणेत्यर्थः । **अभ्रिणता** अबिभ्यता **अज्ञमनसा** मूढचेतसा प्रक्षेतुं हिंसितुं **समनुद्रुतेन** वेगादनुगतेन **गजेन** हस्तिना **करेण** शुण्डादण्डेन **बद्धः** परिवेष्टितः **विहृतिं** स्वतन्त्रविहारं **वृणानः** स्वीकुर्वन् इच्छन्नित्यर्थः । **भगवान्** श्रीकृष्णः **निबद्धं** करपरिवेष्टितमात्मानं **श्रथ्नन्** मोचयन् सन् **अमुं** गजम् **आशु** क्षिप्रकारितया **तलैः** चपेटाभिरित्यर्थः **अमथ्नात्** ताडयामास ॥ ९ ॥

**व्रीतेति** । १५०५ व्री-वरणे । गतौ च द्रुमे । कर्मणि क्तः । **अभ्रिणता** । १५०६ भ्री-भये । भरणे इति केचित् । शता । अस्य ल्वादित्वमप्यस्ति तेन ह्रस्वः द्रुमे । **प्रक्षेतुम्** । १५०७ क्षीष्-हिंसायाम् तुमन् । **अज्ञेति** १५०८ ज्ञा-अवबोधने । 'इगुपधज्ञाप्रीकिरः कः' ( ३।१।१३५ ) इति कः । **बद्धः** । १५०९ बन्ध-बन्धने । कर्मणि क्तः । ज्यादयोऽनुदात्ताः परस्मैभाषाः । **वृणानः** । १५१० वृङ् संभक्तौ । संभक्तिः स्वीकारः । उदात्त

आत्मनेभाषः । शानच् । **अश्नन्** । १५११ श्रन्थ-विमोचनप्रतिहर्षयोः । प्रतिहर्षो न ज्ञातः । अस्माच्छता । **अमश्नात्** । १५१२ मन्थ-विलोडने । लङ् ॥ ९ ॥

**तद्ग्रन्थनं परिहरन्गतिभिर्विकुथ्य**
**पृष्ठे करोन्मृदितपुच्छमकर्षदेनम् ।**
**भूयो निपात्य मृडितस्वजनः स गुध्न-**
**न्दन्तौ विकुष्य गजमुत्क्षुभितं व्यनभ्नात् ॥ १० ॥**

**तद्ग्रन्थनमिति मृडितस्वजनः** मृडिताः सुखिताः स्वजना बन्धुलोका येन **सः** श्रीकृष्णः **गतिभिः** सञ्चारभेदैः **तद्ग्रन्थनं** तस्य नागस्य ग्रन्थनं बन्धनं **परिहरन्** परिवर्जयन् **पृष्ठे** अस्य पुच्छभागे **विकुथ्य** संश्लिष्य **करोन्मृदितपुच्छं** करेण हस्तेन उन्मृदितं संक्षुण्णं पुच्छं लाङ्गूलं यस्य तादृशं सन्तम् ( क्रियाविशेषणं वा ) **एनं** गजम् **अकर्षत्** पश्चाद्भागे आकृष्टवान् । **भूयः** पुनः **गुध्नन्** रोषं प्राप्नुवन् सन् **निपात्य** भुवि प्रसार्य च **दन्तौ** अग्रदशनौ **विकुष्य** निष्कृष्य तं **गजं** हस्तिनम् **उत्क्षुभितम्** उत्कृष्टक्षोभयुक्तं सन्तं ( क्षोभः सञ्चलनं ) **व्यनभ्नात्** हिंसितवान् ॥ १० ॥

**ग्रन्थनमिति** । १५१३ ग्रन्थ-संदर्भे । ग्रन्थमपि केचित् पठन्ति । ग्रन्थेर्ल्युट् । **विकुथ्य** । १५१४ कुन्थ-संश्लेषणे । संश्लेषे इति केचित् । कुथ-इत्येके । द्वयोस्तन्त्रेण ल्यप् । **उन्मृदितेति** । १५१५मृद-क्षोदे । संचूर्णनं तत् । कर्मणि क्तः। १५१६मृड-च । क्षोदे इति शेषः । सुखे चेति केचित् । सुखने इत्यन्ये । अस्मात् कर्मणि क्तः । **गुध्नन्** । १५१७ गुध-रोषे । शता । **विकुष्य** । १५१८ कुष-निष्कर्षे । स च बहिर्निःसारणम् । ल्यप् । **उत्क्षुभितम्** । १५१९ क्षुभ-संचलने । कर्तरि क्तः **व्यनभ्नात्** । १५२० णभ १५२१ तुभ-हिंसायाम् । लङ् ॥ १० ॥

**आधोरणानपि च दन्तवरेण तुभ्नन्**
**क्लिश्नन्मतिं पलक्षुरादिकमश्नतां सः ।**
**ध्वस्तं फलप्रकरमुद्ग्रसितांश्च शाली-**
**न्प्रादद्भिरैष्यत गिरा परिविष्टपापैः ॥ ११ ॥**

**आधोरणानिति सः** श्रीकृष्णः **आधोरणान्** हस्तिपकान् आधोरणा हस्तिपका इत्यमरः। **अपि च** (हस्तिसमुच्चयार्थौ) **दन्तवरेण** श्रेष्ठहस्त्यग्रदशनेन **तुभ्नन्** हिंसन्

**पलङ्कुरादि** ं मांसमद्यादिकं "स्याच्चामिषे पलम्" इत्यमरः । **अश्नतां** भुञ्जनानां **मतिं** बुद्धिं **क्लिश्नन्** विबाधमानः पीडयन् च सन् **ध्रस्तम्** उञ्छितं **फलप्रकरं** फलसमूहम् **उध्रासितान्** उञ्छनार्जितान् **शालीन्** कलमादीन् **च** **प्राश्नद्भिः** भक्षयद्भिः **परिविष्टपापैः** परिविष्टं विप्रयुक्तं पापं किल्बिषं येभ्यः तैः सत्पुरुषैः **गिरा** वाचा **वेष्यत** आभीक्ष्ण्येन (पुनः २ भृशं वा) स्तुतः ॥ ११ ॥

**तुस्नन्निति** । तुसेः शता । **क्लिश्नन्** । १५२२ क्लिश्-विबाधने । **अश्नताम्** १५२३ अश-भोजने । द्वयोः शता । **ध्रस्तम्–उध्रासितान्** । १५२४ उध्रस-उञ्छे । उकार इदित्येके । मतद्वये कर्मणि निष्ठा । **वेष्यत** । १५२५ इष-आभीक्ष्ण्ये । पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम् । तच्च प्रकरणादिप्राप्तायाः क्रियाया इत्यौचित्याज्ज्ञेयम् । अस्मात्कर्मणि लङ् । **परिविष्टेति** । १५२६ विष-विप्रयोगे । कर्तरि क्तः ॥ ११ ॥

**प्रुष्णन्सतां प्रियमयं प्लुषिताङ्गरागः**
**पुष्णन्मुदं मृगदृशां रिपुधाम मुष्णन् ।**
**वक्त्रारविन्दखचितस्मितखौनदाभो**
**रङ्गं गतोऽसभुवि दन्तवरं प्रगृह्णन् ॥ १२ ॥**

**प्रुष्णन्निति** **प्लुषिताङ्गरागः** प्लुषितः स्निग्धः अङ्गरागो चन्दनतैलादिलेपो यस्य सः **वक्त्रारविन्दखचितस्मितखौनदाभः** वक्त्रारविन्दात् मुखकमलात् खचितेन प्रादुर्भूतेन स्मितेन मन्दहासेन खौनती नितान्तोत्पद्यमाना आभा द्युतिर्यस्य सः **अयं** श्रीकृष्णः **सतां** श्रेष्ठपुरुषाणां **प्रियम्** इष्टं **प्रुष्णन्** पूरयन् । **मृगदृशां** हरिणलोचनानां स्त्रीणां **मुदं** हर्षं "मुत्प्रीतिः प्रमदो हर्षः" इत्यमरः । **पुष्णन्** पुष्टीकुर्वन् वर्द्धयन् । **रिपुधाम** शत्रुतेजः **मुष्णन्** अपहरन् **असंभुवि** स्कन्धदेशे **दन्तवरं** गजाग्रदशनं **प्रगृह्णन्** उपाददानः **रङ्गं** मल्लयुद्धशालां **गतः** प्राप्तवान् ॥ १२ ॥

**प्रुष्णन्** । १५२७ प्रुष–१५२८ प्लुष-स्नेहनसेचनपूरणेषु[1] । मोहनदाहनयोरप्याह शंकरः । प्रुषेः शता । **प्लुषितेति** । प्लुषेः कर्तरि क्तः । **पुष्णन्** । १५२९ पुष-पुष्टौ । **मुष्णन्** । १५३० मुष-स्तेये । द्वयोः शता । **खचितेति** । १५३१ खच-भूतप्रादुर्भावे । भूतप्रादुर्भावो नितान्तोत्पत्तिः । खव-इत्येके । हेठ-इत्यप्येके । खचेः कर्तरि क्तः । **खौनदिति** । खवेरतुनासिकादौ श्नि परे ऊठ् । तस्य शता । अन्धादय उदात्तेतः ।

( टि० ) १ 'सेवन' इति सि० कौ० ।

क्लिशिरिषिवर्जमुदात्ताश्च । **प्रगृह्णन्** । १५३२ ग्रह-उपादने । उदात्तः स्वरितेत् । अस्माच्छता । इति श्नाविकरणाः ॥ १२ ॥

**संचोरयन्तमरिगर्वमशेषभद्रं**
**चिन्तन्तमन्तकमिवाप्तमयन्त्र्यवीर्यम् ।**
**प्रस्फुण्डयन्नपि तमभ्युपलक्ष्य कंस-**
**स्तत्रास कुन्दकसुलालितमिन्दितश्रीः ॥ १३ ॥**

**सञ्चोरयन्तमिति कुन्दकसुलालितमिन्दितश्रीः** कुन्दकैः अनृतभाषिभिः सुलालिता स्नेहिता मिन्दिता स्निग्धा प्रवृद्धा च श्रीः राजलक्ष्मीः शोभा वा यस्य सः **कंसः** राजा **अरिगर्वं** शत्रूणामभिमानं "गर्वोऽभिमानोऽहङ्कारः" इत्यमरः । **सञ्चोरयन्तं** स्तेयेन गृह्णन्तं नाशयन्तम् **अशेषभद्रं** सर्वेषां सतां मङ्गलस्वरूपं **चिन्तन्तं** निरूपयन्तम् **अयन्त्र्यवीर्यम्** अयन्त्र्यमसंकोच्यम् अनिवारणीयं वीर्यं बलं यस्य तम् **आप्तं** प्राप्तं तं श्रीकृष्णम् **अन्तकं** यमराजं "यमराड्यमः । कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः" इत्यमरः । **इव उपलक्ष्य** उद्दिश्य समीक्ष्य वा **अपि प्रस्फुण्डयन्** उपरिष्टात् परिहसन् **अपि तत्रास** मनसि भीतो बभूव ॥ १३ ॥

**संचोरयन्तमिति** । १५३३ चुर–स्तेये । अकार उच्चार्यर्थः[१] । 'णिचश्च' । (१।३।७४) इति तङ् चुरादेर्नेति मतं माधवदूषितं तेनोभयपदित्वमेव । अस्माच्चुरेर्णिचि शता ।

" केचित्सर्वचुरादीनामनित्यण्यन्ततां जगुः ।
येषां विकल्पाचिन्हं स्यात्तेषामेवेति माधवः ॥ "

**चिन्तन्तम्** । १५३४ चिति–स्मृत्याम । णिचि 'अनिदितां हलः' (६।४।२४) इति नलोपाप्रसङ्गात् तन्निषेधार्थमिदित्वानुपयोगादिदितां णिजनित्यः । तेन णिजभावे शपि शता । **अयन्त्र्येति** । १५३५ यन्त्रि–संकोचने । णिजन्तात् ' अचो यत् ' ( ३ । १ । ९७ ) **प्रस्फुण्डयन्** । १५३६ स्फुडि–परिहासे । स्फुटि इत्येके । स्फुण्डेः शता । **अभ्युपलक्ष्य** । १५३७ लक्ष–दर्शनाङ्कनयोः । ल्यप् । **कुन्दकेति** । १५३८ कुद्द–अनृतभाषणे । कुट्ट–इत्येके । कुन्देर्ण्वुल् । **सुलालितेति** । १५३९ लड–उपसेवायाम् । कर्मणि क्तः । **मिन्दितेति** । १५४० मिदि–स्नेहने । मिदि–इत्येके । मिन्देः कर्तरि क्तः ॥ १३ ॥

( टि० ) १ उच्चारणार्थ इति यावत् ।

ओलण्डिताद्रिरपि जालितदिव्यधामा

निष्पीडितारिरनुनाटितमर्त्यभावः ।

अश्राथबाधितमनाः स निरीक्षकाणा-

मानन्दमन्तरपरत्परमूर्जयन्तम् ॥ १४ ॥

**ओलण्डिताद्रिरिति ओलण्डिताद्रिः** ओलण्डित उत्क्षिप्तः अद्रिः गोवर्धनाख्यो गिरिर्येन सः "अद्रिगोत्रगिरिग्राव–" इत्यमरः । तादृशः **अपि जालितदिव्यधामा** जालितमपवारितं दिव्यममानुषं धाम प्रभावो येन सः । **निष्पीडतारिः** निष्पीडिता बाधिताः अरयः शत्रवो येन **अनुनाटितमर्त्यभावः** अनुनाटितोऽवस्यन्दितोऽनुकृतो मर्त्यभावो मनुष्यस्वभावो येन सः **निरीक्षकाणां** दर्शकानाम् **अश्राथबाधितमनाः** अश्राथेन विनैव प्रयत्नं बाधितं संयमितं वशीकृतं मनः चेतो येन **सः** श्रीकृष्णः **अन्तः** मनसि **ऊर्जयन्तं** बलीभवन्तं वर्द्धमानं **परम्** अधिकम् **आनन्दं** हर्षम् **अपरत्** अपूरयत् ॥ १४ ॥

**ओलण्डितेति । जालितेति । निष्पीडितेति । अनुनाटितेति ।** १५४१ ओलडि–उत्क्षेपणे । ओकार इदित्येके । १५४२ जल–अपवारणे । १५४३ पीड–अवगाहने । तच्च बाधनम् । बाधगाहनयोरिति द्रुमे । १४४ नट–अवस्यन्दने । तच्च नाट्येनार्थप्रकाशनम् । एषां कर्मणि क्तः । **अश्राथेति ।** १५४५ श्रथ–प्रयत्ने । प्रस्थाने इति केचित् । 'एरच्' ( ३ । ३ । ५६ ) 'एरजण्यन्तानाम्' इति मते घञ् । **बाधितेति ।** १५४६ बध–संयमने । बन्धे इति केचित् । बाधेः कर्मणि क्तः । **अपरत् ।** १५४७ पृ–पूरणे । दीर्घोक्तिफलं परितेतीडणिच्येव स्यादिति णिज्विकल्पः । णिजभावे शपि घञ् । **ऊर्जयन्तम् ।** १५४८ ऊर्ज–बलप्राणनयोः । शता ॥ १४ ॥

श्रीकृष्णदर्शनसंजातानन्दानां संभाषणमाहाष्टभिः श्लोकैः —

संपक्ष्य तन्निजदृशैवमवर्णि लोकै-

रेषोऽजनिष्ट किल दुष्टविचूर्णनार्थम् ।

अप्राथितो व्रजगृहेऽपि च पर्थितोऽभू-

दासम्वयञ्जनमतिं निजशास्वरीभिः ॥ १५ ॥

**संपक्ष्येति लोकैः** जन समवेतैर्जनैः **निजदृशा** स्वचक्षुषा **तं** श्रीकृष्णं

**संपद्य** परिगृह्य साक्षात्कृत्य पूर्वन्तु श्रोत्रपरम्परयेति भावः । **एवं** वक्ष्यमाण प्रकारेण **अवर्णि** वर्णितं प्रकथितं । यत् **एष** श्रीकृष्णः **दुष्टावचूर्णनार्थं** कंसादिपापि संपेषणाय **अजनिष्ट** उत्पन्नः **किल** ( इति सम्भावनं ) । **अपि च** अथ च **निज शाम्बरीभिः** स्वमायाभिः **जनमतिं** पुरुषबुद्धिं **आसम्बयन्** स्वसम्बद्धां कुर्वन् **अप्राथितो**ऽप्रख्यातः सन् **व्रजगृहे** नन्दगोष्ठवेश्मनि **प्रर्थितः** प्रक्षिप्तः **अभूत्** ॥१५॥

**संपद्येति** । १५४९ पद्-परिग्रहे । ल्यप् । **अवर्णि** । १५५० वर्ण-वर्णने । प्रेरणेऽपीति केचित् । भावे चिण् । **विचूर्णने**ति । १५५१ चूर्ण-प्रेरणे । अस्य चोदनमप्यर्थः । तदेव वा प्रेरणमित्युक्तम् । अस्माल्ल्युट् । **अप्राथितः** । १५५२ प्रथ-प्रख्याने । क्षेपे च द्रुमे । कर्तरि क्तः । **पर्थितः** । १५५३ पृथ-प्रक्षेपे । पथ-इत्येके । कर्मणि क्तः । **आसम्बयन्** । १५५४ षम्ब-संबन्धने । १५५५ शम्बेत्येके । साम्बेत्यन्ये । सम्बेः शता । शाम्बरीभिः । शम्बेर्बाहुलकादरप्रत्यये शम्बरः । तस्येयं शाम्बरी ॥ १५ ॥

सा पूतना च शिशुभक्षणकुट्टनोत्का
जघ्ने प्रपुट्टितकृपेण विचुट्टिताघा ।
वात्यासुरः पुनरनट्टयविसुट्टकः स-
न्नेतेन लुण्ठितवलोऽजनि शाठितात्मा ॥ १६ ॥

सेति **प्रपुट्टितकृपेण** प्रपुट्टिताऽल्पीभूता कृपा दया यस्य तेन **एतेन** श्रीकृष्णेन **च शिशुभक्षणकुट्टनोत्का** शिशूनां बालानां भक्षणेऽदने कुट्टने छेदने चोत्का उत्कण्ठिता **प्रचुट्टिताघा** प्रचुट्टितम् अल्पीभूतं प्रणष्टं भगवता स्तनपानेनेति भावः अघं पापं यस्याः **सा** प्रसिद्धा **पूतना** नाम राक्षसी **जघ्ने** व्यापादिता मारिता । तथा **पुनः** भूयः **शाठितात्मा** शाठितोऽसंस्कृत आत्मा यस्य सः **वात्यासुरः** वात्याख्यो दैत्यः **अनट्टयविसुट्टकः** अनट्टयानाम् अनादरणीयानां विसुट्टकः आदरकृत् **सन्** भवन् **लुण्ठितवलः** अपहृतौजाः विगतप्राण इति यावत् **अजनि** जनितः अकारि ॥ १६ ॥

**भक्षणे**ति । १५५६ भक्ष-अदने **कुट्टने**ति १५५७ कुट्ट-छेदनभर्त्सनयोः । पूरणे इत्येके । द्वयोर्ल्युट् । **प्रपुट्टितेति-विचुट्टिते**ति । १५५८ पुट्ट-१५५९ चुट्ट-अल्पीभावे । द्वयोः कर्तरि क्तः । अनट्टयविसुट्टक । अट्ट १५६० षुट्ट १५६१ अनादरे । अल्पी-

भावे च द्रुमे। क्रमात् 'अचो यत्' (३।१।९७) इति यत्, ण्वुल् च। लुण्ठितेति। १५६२ लुण्ठ-स्तेये। अनादरे च द्रुमे। शाठितेति। १५६३ शठ-१५६४ श्वठ-असंस्कारगत्योः। श्वठि-इति केचित्। संस्कारे च द्रुमे। आद्य आलस्ये च। लुण्ठिशाठ्योः कर्मणि क्तः॥ १६॥

अश्वाठितारिकुलतुञ्जविपिञ्जशीलः
रूपेसयन्गृहमसान्त्वयदेष गोपीः।
सुश्वल्कनाः सुमधुरप्रियवल्कनाभिः
प्रस्नेहयन्न च कदाचिदसिस्मटत्ताः॥ १७॥

आश्वाठितेति आश्वाठितारिकुलतुञ्जविपिञ्जशीलः आश्वाठितस्य आगतस्य अरिकुलस्य शत्रुसङ्घस्य तुञ्जस्य हिंसाया विपिञ्जे आदाने शीलः स्वभावो यस्य स एषः श्रीकृष्णः गृहं वेश्म संपेसयन् गच्छन् सन् सुश्वल्कनाः शोभनं श्वल्कनं भाषितं यासां ताः गोपीः वल्लवीः सुमधुरप्रियवल्कनाभिः सुमधुराभिः सुन्दरमाधुर्यगुणयुक्ताभिः प्रियाभिः इष्टाभिः वल्कनाभिः भाषणैः प्रस्नेहयन् स्निग्धाः कुर्वन् असान्त्वयत् आश्वासितवान्। च पुनः ताः गोपीः कदाचित् कस्मिन्नपि काले न असिस्मटत् अनादृतवान्॥ १७॥

आश्वाठितेति। श्वठेः कर्तरि क्तः। तुञ्ज–विपिञ्जेति। १५६५ तुजि-१५६६ पिजि-हिंसाबलादाननिकेतनेषु। दाने च द्रुमे। तुज–पिज इत्येके। लजि-लुजि इत्यन्ये। तुजिपिञ्जोर्घञ्। संपेसयन्। १५६७ पिस-गतौ। शता। असान्त्वयत्। १५६८ षान्त्व-सामप्रयोगे। लङ्। सुश्वल्कनेति। १५६९ श्वल्क-१५७० वल्क-परिभाषणे। श्वल्केर्ल्युट्। वल्कनाभिः। वल्केः 'ण्यासश्रन्थः–' (३।३।१०७) इति युच्। प्रस्नेहयन्। १५७१ ष्णिह-स्नेहने। शता। असिस्मटत्। १५७२ स्मिट-अनादरे। लुङि चङ्॥ १७॥

कः स्माययेत चिसुमेनमशिश्लिषद्यः
पन्थन्व्रजेऽत्र भवपिच्छनभागिरेव।
छन्दश्छुचं वरमशिश्रियणदाश्रितानां
अंताडतैर्वृषमदैर्यमसाडयत्त॥ १८॥

क इति यः श्रीकृष्णः अत्र अस्मिन् व्रजे नन्दगोष्ठप्रदेशे **पन्थन्** गच्छन् **भवपिच्छन-भाग्भिः** भवस्य संसारस्य पिच्छनं छेदनं भजन्ति सेवन्ते इति तादृशैः मुमुक्षुभिरित्यर्थः **एव अशिश्लिषत्** सम्पर्कं प्राप्तवान्। तथा **आश्रितानां** शरणागतानां **शुचं** शोकं दुःखं **छन्दन्** संवृतीकुर्वन् नाशयन् **वरम्** अभिलषितम् **अशिश्रिणत्** प्रदत्तवान्। **च** पुनः **संताडनैः** प्रहारैः **वृषभदैत्यं** तदाख्यासुरम् **अखाडयत्** भिनत्तिस्म। **एनं** विभुं व्यापकं श्रीकृष्णरूपमीश्वरं **कः** पुरुषः **स्माययेत** अनादर्तुं शक्नुयात्॥ १८॥

**स्माययेत**। १५७३ स्मिङ्-अनादरे इत्येके। ङित्वात्तङ्ङेव। अस्माल्लिङ्। अट-स्मिट-गतावित्यप्यन्ये। **अशिश्लिषत्**। १५७४ श्लिष-श्लेषणे। लुङि चङ्। **पन्थन्**। १५७५ पथि-गतौ। शपि शता। **पिच्छनेति**। १५७६ पिच्छ-कुट्टने। ल्युट्। **छन्दन्**। १५७७ छदि-संवरणे। शपि शता। **अशिश्रणत्**। १५७८ श्रण-दाने प्रायेण विपूर्वः। अस्माल्लुङि चङ्। **संताडनैः**। १५७९ तड-आघाते। शोभार्थश्च द्रुमे। ल्युट्। **अखाडयन्**। १५८० खड-१५८१ खडि-१५८२ कडि-भेदने। अन्यो रक्षणे च द्रुमे। खडेर्लङ्॥ १८॥

अश्वं व्यखण्डदचकण्डदघासुरादी-
न्धेनूरकुण्डदभिगुण्डितपीतचेलः।
किंच स्वगात्रमवकुण्ठयतो महाहे-
र्दर्पं चुखुण्ड विषमेष मुखाद्विवण्टन्॥ १९॥

**अश्वमिति किञ्च अभिगुण्डितपीतचेलः** अभिगुण्डितं परिवेष्टितं परिहितं पीतं हरिद्राभं चेलं वस्त्रं येन सः। "वस्त्रमाच्छदनं वासश्चेलं वसनमंशुकम्" इत्यमरः। **एष** श्रीकृष्णः **अश्वं** तदाख्यराक्षसं **व्यखण्डत्** अभिनत्। **अघासुरादीन्** अघाभिधोऽसुर आदिर्येषां तान् **अचकण्डत्** भिन्नवान्। **धेनूः** गाः **अकुण्डत्** पालितवान्। **स्वगात्रं** निजभोगम् **अवकुण्ठयतः** रक्षतः **महाहेः** महानागस्य कालियाख्यस्य **मुखात्** आननात् **विषं** गरलम् **विवण्टन्** विभाजयन् छर्दयन् **दर्पम्** अभिमानं **चुखुण्ड** अखण्डयत्॥ १९॥

**व्यखण्डदिति**। खण्डेः शपि लङ्। **अचकण्डत्**। कण्डेर्णिचि चङ्। **अकुण्डत्**। १५८३ कुडि-रक्षणे। शपि लङ्। **अभिगुण्डितेति**। १५८४ गुडि-

वेष्टने । रक्षणे चैके । कुठि-इत्यन्ये । गुण्ठेः कर्मणि क्तः । **अवकुण्ठयतः** । कुण्ठेः शता । **चुखुण्ड** । १५८५ खुडि-खण्डने । णिजभावे लिट् । **विवण्टन्** । १५८६ वटि—विभाजने । डाडि—इत्येके । वण्टेः शपि शता ॥ १९

**बर्हादिमण्डितसुभाण्डितविग्रहोऽसौ**
**प्रच्छर्दितः किल बकेन च पुस्तितार्तिः ।**
**संबुस्तिते गिरिमखे परिचोद्य गोपा-**
**न्प्रानक्कयद्धरिमखं मदधक्कनार्थी ॥ २० ॥**

**बर्हादीति बर्हादिमण्डितसुभाण्डितविग्रहः** बर्हादिभिः मयूरपिच्छादिभिः मण्डितः भूषितः सुभण्डितः अतिकल्याणीभूतः विग्रहः शरीरं यस्य सः । **बकेन** तदाख्यासुरेण **प्रच्छर्दितः** प्रकर्षेण उद्वमितः **किल** ( इति वार्तायां ) **पुस्तितार्तिः** पुस्तिता दत्ता बकस्यार्तिः पीडा येन तादृशः **च असौ** श्रीकृष्णः **मदधक्कनार्थी** मदस्य इन्द्राऽभिमानस्य धक्कनार्थी नाशनशीलः सन् । **संबुस्तिते** आदृते **गिरिमखे** गोवर्धनपर्वतयज्ञे " यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः " इत्यमरः । **गोपान्** बल्लवान् **परिचोद्य** प्रेरणं कृत्वा **हरिमखम्** इन्द्रयज्ञं "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः । **प्रानक्कयत्** प्रणाशितवान् इन्द्रयागस्थाने गोवर्द्धनयागं कारितवानिति भावः ॥ २० ॥

**मण्डितेति** । १५८७ मडि-भूषायां हर्षे च । **सुभण्डितेति** । १५८८ भडि-कल्याणे । कर्तरि क्तः । **प्रच्छर्दितः** । १५८९ छर्द-वमने । कर्मणि क्तः **पुस्तितेति** । १५९० पुस्त-१५९१ बुस्त-आदरानादरयोः । अनादरे च द्वमे । कर्मणि क्तः । **संबुस्तितेति** प्राग्वत् क्तः । **परिचोद्य** । १५९२ चुद-संचोदने । संचोदनं प्रश्नः प्रेरणा च । ल्यप् । **प्रानक्कयत्** । १५९३ नक्क-१५९४ धक्क-नाशने । नक्केर्लङ् । **धक्कनेति** । धक्केर्ल्युट् ॥ २० ॥

**दुर्दान्तचक्रपशुपचुक्कनमध्यरौत्सी-**
**त्प्रक्षालितक्षितितलातुलवर्षरोधी ।**
**संदोलयन्नधिकपोलितमद्रिराजं**
**संचोलितं सुबहुमूलितशाखिवृन्दैः ॥ २१ ॥**

( टि० ) १ आदरानादरयोः इति सि० कौ० ।

**दुर्दान्तचगिति दुर्दान्तचक्** दुर्दान्तानाम् अवशेन्द्रियाणां चक् नाशकः श्रीकृष्णः **अधिकपोलितम्** अतिमहान्तं **सुबहुमूलितशाखिवृन्दैः** सुबहुभिः अत्यधिकैः शाखिवृन्दैः वृक्षलतागुल्मादिसमूहैः **संचोलितं** समुच्छ्रितम् **अद्रिराजं** गोवर्द्धनं **सन्दोलयन्** उत्क्षिपन् **प्रक्षालितक्षितितलातुलवर्षरोधी** प्रक्षालितं शस्यादिप्रवहनेन शुचीकृतं क्षितितलं भूपृष्ठं येन तादृशम् अतुलं मुसलधारादिपातनेन अनुपमं वर्षं वृष्टिं रुणद्धि निवारयतीति सः तादृशः सन् **पशुपचुक्कनम्** गोपपीडाम् **अपि अरीरसीत्** निवारयामास ॥ २१ ॥

**दुर्दान्तचगिति** । १५९५ चक्क-१५९६ चुक्क-व्यथने । चिक्क-इति चैके । चक्केः क्विप् । **चुक्कनम्** । चुक्केर्ल्युट् । **प्रक्षालितेति** । १५९७ क्षल-शौचकर्मणि । कर्मणि क्तः । **तलेति** । १५९८ तल-प्रतिष्ठायाम् । अच् । **अतुलेति** । १५९९ तुल-उन्माने । कः । चुरादिणिचोऽनित्यत्वात् तदभावः । **संदोलयन्** । १६०० दुल-उत्क्षेपे । शता । **पोलितम्** । **संचोलितम्** । **मूलितम्** । १६०१ पुल-महत्वे । १६०२ चुल-समुच्छ्राये । १६०३ मूल-रोहणे । त्रिभ्यः कर्तरि क्तः ॥२१॥

**काल्यप्रवेलनकरोऽयमवेलयद्द्रा-**
**गन्यांश्च तेलितकृपः खलु कंसचाल्यान् ।**
**संपालयेद्विमतलूष्यपशुल्वभूमा**
**क्ष्मामेष राम इव शूर्पणखाविचोटी ॥ २२ ॥**

**काल्येति काल्यप्रवेलनकरः** काल्यानां क्षेप्यानां निरसनीयानां प्रवेलनकरः प्रक्षेपकः **तेलितकृपः** स्निग्ध(निबिडीभूत) दयः **विमतलूषी** शत्रुघाती **अपशुल्वभूमा** अपशुल्वः अपरिमाणः भूमा महत्वं यस्य सः **अयं** श्रीकृष्णः **खलु अन्यान्** पूतताऽघाऽसुरेतरानपि **कंसचाल्यान्** कंसस्य भृत्यान् **च द्राक्** झटिति **अवेलयत्** क्षिप्तवान् । तथा **एषः** श्रीकृष्णः **शूर्पणखाविचोटी** शूर्पणखायाः तदाख्याया रावणभगिन्या विचोटी नासिकाच्छेदी **रामः** दाशरथिः **इव क्ष्मां** पृथिवीं "गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही" इत्यमरः । **संपालयेत्** संरक्षणं कुर्यात् ( सम्भावनायां लिङ् ) अत्रोपमाऽलङ्कारः ॥ २२ ॥

**काल्येति** । **प्रवेलनेति** । १६०४ कल-१६०५ विल-क्षेपे । द्वयोर्ण्यल्ल्युटौ । किल-इत्यप्येके । **अवेलयत्** । १६०६ बिल-भेदने । लङ् । **तेलितेति** ।

१६०७ तिल-स्नेहने । कर्तरि क्तः । **चाल्यान्** । १६०८ चल-भृतौ । ण्यत् । **संपालयेत्** । १६०९ पाल-रक्षणे । लिङ् । **विमतलूषी** । १६१० लूष-हिंसायाम् । णिनि । **शुल्बेति** । १६११ शुल्ब-माने । घञ् । **शूर्पणखेति** । १६१२ शूर्प-चेत्येके । तस्माद् घञि शूर्पः । शूर्पसदृशं नखमस्या इति शूर्पणखा । "नखमुखात्संज्ञायाम्" । (४ । १ । ५८) इति [न] ङीष् । "पूर्वपदात्संज्ञायामगः" (८ । ४ । ३) इति णत्वं च । संज्ञायामेवेति [1]णत्वाभावष्टाप् च । **विचोटी** १६१३ चुट-छेदने । णिनिः ॥ २२ ॥

**इत्यादिवादिषु जनेषु विमोटितारिः**
**पापप्रपण्डिपद्पांसुरव्राज्यधामा ।**
**सुव्राजितेन मनसा परिमार्ग्य एषां**
**तोषं व्यशुल्कयदसौ नयनप्रचम्पैः ॥ २३ ॥**

**इत्यादीति** **जनेषु** लोकेषु **इत्यादिवादिषु** पूर्वोक्तरूपवचांसि कथयत्सु सत्सु **विमोटितारिः** विमोटिताः संचूर्णिता अरयः शत्रवो येन सः **पापप्रपण्डिपदपांसुः** पापानां दूषणानां प्रपण्डी नाशकः पदपांसुः चरणधूलिः यस्य सः । **अवाज्यधामा** अव्राज्यम् अमार्ग्यं धाम स्वरूप यस्य सः किन्तु **सुव्राजितेन** सम्यक् संस्कृतेन **मनसा** चेतसा **परिमार्ग्यः** लभ्यः **असौ** श्रीकृष्णः **नयनप्रचम्पैः** नेत्रसञ्चारैः कटाक्षविक्षेपैः **एषां** कथयतां जनानां **तोषम्** आनन्दं **व्यशुल्कयत** संपादितवान् ॥ २३ ॥

**विमोटितेति** । १६१४ मुट-संचूर्णने । कर्मणि क्तः **प्रपण्डि** इति । १६१५ पडि-१६१६ पसि-विनाशने । पण्डेर्णिनिः । **पांसुरिति** । अजिदृशिकम्यमिपसिबाध-' (उ०) इत्यादिना पसेः कुप्रत्ययो दीर्घश्च । **अवाज्येति** । १६१७ व्रज-मार्गसंस्कारगत्योः । व्रज इत्येके । वाजेर्ण्यत् । **व्राजितेनेति** । व्राजेः कर्मणि क्तः । **परिमार्ग्यः** । मार्गेर्ण्यत् । मार्गसंस्कारो धात्वर्थ इत्येके । **व्यशुल्कयत** । १६१८ शुल्क-[2]सर्जने । आर्जनं तत् । [3]वर्जनभाषणयोश्च द्रुमे । लङ् । **प्रचम्पैः** । १६१९ चपि-गत्याम् । घञ् ॥ २३ ॥

(टि०) १ 'अन्यत्र' इति पाठः त्रुटितः प्रतिभाति अत्र संज्ञाया एव सत्वात् महावैयाकरणस्याऽस्य भ्रमत्वायोगात् मूले नत्वन्तु लेखकप्रमादेन ।

२ अतिस्पर्शने इति सि० कौ० । ३ वर्णनेत्यपि पाठः ।

क्षम्पद्धियामभिमतः स च कंसपीडा
प्रक्षाञ्जितस्वजनचिन्तनजातरोषः ।
आश्वर्तितो रणभुवं सबलोऽत्र रेजे
विश्वभ्रिताभ्रकुहरे सति तूर्यनादे ॥ २४ ॥

**क्षम्पद्धियामिति तूर्यनादे** वाद्यध्वनौ **विश्वभ्रिताभ्रकुहरे** व्याप्ताकाशच्छिद्रके **सति क्षम्पद्धियां** क्षम्यन्ती क्षाम्यन्ती धीर्बुद्धिर्येषां तेषाम् **अभिमतः** इष्टः प्रियः **कंसपीडाप्रक्षञ्जितस्वजनचिन्तनजातरोषः** कंसपीडया कंसभूपोत्पादितदुःखेन प्रक्षञ्जितानां कृच्छ्रेण जीवतां स्वजनानाम् आत्मसम्बन्धिनां चिन्तनेन जात उत्पन्नो रोषो यस्य सः **सबलः** बलभद्रेण सह वर्तमानः **रणभुवं** युद्धभूमिम् **आश्वर्तितः** समागतः सन् **अत्र** रणभुवि **रेजे** शुशुभे ॥ २४ ॥

**क्षम्पादिति** । १६२० क्षपि-क्षान्त्याम् । शपि । शता । **प्रक्षञ्जितेति** । **आश्वर्तितेति** । **विश्वभ्रितेति** । ७६२१ [1]क्षजि-कृच्छ्रजीवने । १६२२ श्वर्त-गत्यां च[2] । १६२३ [3]श्वभ्र-च । आद्ययोः कर्तरि क्तः । श्वभ्रेः कर्मणि क्तः । श्वभ्रि विलार्थे च द्रुमे ॥ २४ ॥

चाणूर एनमथ विज्ञपयन्नृपाज्ञां
चण्डातकं सुयमयंश्चक्कको बभाषे ।
युध्यस्व भीतिरहितो बलयन्खलु त्वं
कीर्तिं चयस्व चपयापि नृपप्रसादम् ॥ २५ ॥

**चाणूर** इति **अथ** रणभूप्रवेशानन्तरं **चक्कक**ः परिकल्कनकर्ता ( परिकल्कनं शाठ्यं ) **चाणूरः** तदाख्यमल्लः **चण्डातकं** अर्द्धोरुकं मल्लयुद्धोचितं वासः **सुयमयन्** दृढं वेष्टमानः बध्नान्निति यावत् **नृपाज्ञां** राजशासनम् **एनं** श्रीकृष्णं **विज्ञपयन्** बोधयन् ( हेतौ शतृप्रत्ययः ) **बभाषे** कथयामास । यत् भोः कृष्ण ! **भीतिरहितः** निर्भयः **त्वं खलु** ( वाक्यालङ्कारे ) **बलयन्** प्राणन् शक्तो भवन् सन् **युध्यस्व कीर्तिं** यशः **चयस्व** चिनु **नृपप्रसादं** कंसभूपकृपाम् **अपि चपय** अर्जय ॥ २५ ॥

इतः परं सप्त मितः । ज्ञप-मिच्च । अस्य ज्ञानज्ञापने अर्थाविति स्थितम् । **विज्ञपयन्निति** । ( १६२४ ज्ञप-ज्ञानज्ञापनमारणतोषणनिशाननिशामनेषु । ) ज्ञपेः शता । **सुयमयन्** । १६२५ यम-च, परिवेषणे । तच्चात्र वेष्टनम् । चकारान्मिदित्यनुषङ्गः

(टि०) १ क्षजि-इति सि० कौ० । २ नास्ति सि० कौ० । ३ श्वभ्र-इति सि० कौ० ।

अस्माच्छता । **चहकः** । १६२६ चह-परिकल्कने । ण्वुल् । चप-इत्येके तस्य वा मित्वं द्रुमे । **रहितः** । १६२७ रह-त्यागे । कर्तरि क्तः **बलयन्** । १६२८ बल-प्राणने । शता । **चयस्वेति** । **चपयेति** १६२९ चिञ्-चयने । णिच्युभयपदित्वेन ञित्वफलाभावादस्य णिज्विकल्पः । तत्र णिचि 'चिस्फुरोर्णौ' (६।१।५४) इति वा आत्वे पुक् । अन्यत्र वृद्धिः । उभयत्र मित्वाद्ध्रस्वः । अणिचि णिचि च लोट् । मितो गताः । 'नान्ये मितोऽहेतौ' । अहेतुमण्ण्यन्तेषु एभ्योऽन्ये मितो न स्युः (इत्यर्थः) । तेन चुरादिषु अमन्तादीनां मित्वं न २५ ॥

**बुद्धिर्न घट्टयतु तेऽस्तयतां जनानां**
**मध्ये न खट्टय बलं गजसट्टकोऽसि ।**
**न स्फिट्टयामि किमु चुम्बभिया स्थितोऽसि**
**किं पूलितान्नकृतपुंसनयात्र पुंसाम् ॥ २६ ॥**

**बुद्धिरिति** भोः कृष्ण ! **अस्तयतां** संघातीभवतां **जनानां** मनुष्याणां **मध्ये** अन्तः **ते** तव **बुद्धिः** मतिः **न घट्टयतु** चलतु । **बलम्** ओजश्च **न खट्टय** छादय । यतः त्वं **गजसट्टको** हस्तिहिंसकोऽसि । अहञ्च त्वां **न स्फिट्टयामि** हिनस्मि । **चुम्बभिया** हिंसनभयेन " भीतिर्भीः साध्वसं भयम् " इत्यमरः । **किमु** कुतः **स्थितोऽसि** तिष्ठति । **अत्र** अस्मिन् संसारे **पुंसां** जनानां **पूलितान्नकृतपुंसनया** पूलितेन संघातीभूतेन अन्नेन कृतया जनितया पुंसनया देहाभिवर्द्धनेन **किं** फलं युद्धादिना स्वामितोषं मुक्त्वा नान्यत्किमपीत्यर्थः ॥ २६ ॥

**घट्टयत्विति** । १६३० घट्ट-चलने । लोट् । **अस्तयताम्** । १६३१ अस्त-[1] संघाते । शता । **खट्टय** । १६३२खट्ट-संवरणे । लोट् । **सट्टकः** । १६३३षट्ट-१६३४ स्फिट्ट-१६३५ चुबि-हिंसायाम् । आद्यो बलादाननिवासेषु च द्रुमे । अन्त्यश्चुम्बने च । सट्टेः ण्वुल् । **स्फिट्टयामि** । स्फिट्टेर्लट् । **चुम्बेति** । चुम्बेर्घञ् । व्यय-व्यव-क्षये । इति चैके । आद्यः प्रेरणे च द्रुमे । **पूलितेति** । १६३६ पूल-संघाते । कर्तरि क्तः । **पुंसनया** । पुंस-अभिवर्धने । युच् ॥ २७ ॥

**सौधे विटङ्कजुषि पश्यति धूसितोऽस्त्वं**
**राजारिकीटबलचूर्णनयातिपूज्यः ।**

(टि०) १ मुस्त-इति सि० कौ० । ३ पूल-इति सि० कौ० ।

**अर्च्येण तेन समरेष्वविशोठितस्त्वं**
**संशुण्ठिताहितमदेन विजोडितोऽसि ॥ २७ ॥**

**सौधे** इति **अरिकीटबलचूर्णनया** अरिकीटानां दुर्बलशत्रूणां चूर्णनया सङ्कोचनेन **अतिपूज्यः** अधिकं मान्यः **धूसितः** भूषणैः कृतकान्तिः **अयं राजा** कंसो भूपः **विटङ्कयुषि** कपोतपालकादिशिल्पशालिनि "कपोतपालिकायान्तु विटङ्कं पुन्नपुंसकम्" इत्यमरः । **सौधे** राजभवने "सौधोऽस्त्री राजसदनम्" इत्यमरः । स्थितः सन् **पश्यति** समीक्षते । **अर्च्येण** स्तुत्येन **संशुण्ठिताऽहितमदेन** संशुण्ठितः सम्यक् शोषितः नाशितः अहितानां शत्रूणां मदो बलादिगर्वो येन **तेन** राज्ञा कंसेन **समरेषु** रणेषु "अस्त्रियां समरानीकरणाः कलहविग्रहौ" इत्यमरः । **अविशोठितः** आलस्यरहितः **त्वं विजोडितः** प्रेरितः **असि** ॥ २७ ॥

**विटङ्केति** । १६३८ टकि–बन्धने । वीन् पक्षिणष्टङ्कयति शिलेनै बध्नाति इति विटङ्कः । पचाद्यच् । **धूसितः** । १६३९ धूस–कान्तिकरणे । धूष–इत्येके । धूश–इत्यन्ये । धूसेः कर्तरि क्तः । **कीटेति** । १६४० कीट–वर्णे । नानावर्णो भवतीत्यच् । **चूर्णनया** । १६४१ चूर्ण–सङ्कोचने । युच् । **अतिपूज्यः** । **अर्च्येण** । १६४२ पूज–पूजायाम् । १६४३ अर्क–स्तवने । तापगत्योश्च द्रुमे । द्वयोर्ण्यत् । **अविशोठितः**। १६४४ शुठ–आलस्ये । कर्तरि क्तः। **विजोडितेति** । **संशुण्टितेति**। १६४५ शुठि–शोषणे । १६४६ जुड–प्रेरणे । द्वयोः कर्मणि क्तः ॥ २७ ॥

**इत्थं सुगाजितमृदङ्गविमार्जनानि**
**संवार्य मर्चयति घारितशङ्कमस्मिन् ।**
**कृष्णः प्रपञ्चरहितां धृततेजितास्त्रै-**
**र्वीरैः स्तुतां गिरमकीर्तदरातिवर्धी ॥ २८ ॥**

**इत्थमिति अस्मिन्** चाणूरे **सुगाजितमृदङ्गविमार्जनानि** सुगाजितानां सम्यक् वादितानां मृदङ्गानां वाद्यविशेषाणां विमार्जनानि शब्दान् **संवार्य** स्वशब्देनाक्रम्य **इत्थम्** अनेन प्रकारेण **घारितशङ्कं** घारिता प्रसृता छादिता वा विगतेत्यर्थः शङ्का लज्जा भीर्वा यस्मिन् कर्मणि तद्यथा स्यात्तथा **मर्चयति** शब्दायमाने सति ।



(टि०) १ धान्यकणादिप्रक्षेपेणेत्यर्थः ।

**अरातिवर्धी** शत्रुच्छेदी **कृष्णः** भगवान् **प्रपञ्चरहितां** विस्तारहीनाम् अल्पाक्षरां बह्वर्थामित्यर्थः अत एव **धृततेजितास्त्रैः** धृतानि उत्थापितानि तेजितानि तीक्ष्णीकृतानि अस्त्राणि शस्त्राणि यैः तैः "आयुधं प्रहरणं शस्त्रमस्त्रम्" इत्यमरः । **वीरैः** विक्रान्तैः जनैः **स्तुतां** कृतप्रशंसां **गिरं** वाणीम् **अकीर्तत्** संशब्दितवान् उक्तवान् ॥ २८ ॥

**सुगाजितेति** । १६४७ गज–१६४८ मार्ज–शब्दार्थौ । १६४९ मर्च–चेत्येके । मार्जिः शुद्धौ च द्रुमे । गजेः कर्तरि क्तः । **विमार्जनानि** । मार्जेर्ल्युट् । **मर्चयति** । मर्चेः शता । **घारितेति** । १६५० घृ–प्रस्रवणे । स्रावणे इत्येके । छादने च द्रुमे । अस्मात् कर्मणि क्तः । **प्रपञ्चेति** । १६५१ पाचि-विस्तारवचने । विस्तारमात्रे च द्रुमे । घञ् । **तेजितेति** । १६५२ तिज–निशा(त)ने । कर्मणि क्तः । **अकीर्तत्** । १६५३ कृत–संशब्दने । 'ऋदुपधाच्चाक्लृपिचृतेः' ( ३।१।११० ) इत्यत्र तपरत्वेन ऋदुपधस्य व्यावर्त्यत्वाण्णिचि त्वृदुपधत्वफलाभावादस्य णिज्विकल्पः । तत्र णिजभावे शपि लङ् । **अरातिवर्धी** । १६५४ वर्ध–छेदनपूरणयोः । णिनिः ॥ २८ ॥

**किं कुम्ब्यते सदसि तुम्बितवैभवोऽहं**
**बालोऽस्मि तुम्बितविरोधिभयाश्च यूयम् ।**
**प्रह्लापये किमपरं परिचुण्टितारि–**
**र्भूयोऽयमेलयति चेदिह को निषेद्धा ॥ २९ ॥**

**किमिति** अत्र **सदसि** नृपसभायां "समज्या परिषद् गोष्ठी सभासमितिसंसदः । आस्थानी क्लीबमास्थानं स्त्री नपुंसकयोः सदः" इत्यमरः । **किं कुम्ब्यते** अच्छाद्यते न किमपि सर्वमेव प्रकाश्यते इत्यर्थः । **तुम्बितवैभवः** तुम्बितम् अदृष्टं वैभवं युष्मत्सामर्थ्यं येन तादृशः **अहं बालः** कुमारोऽस्मि । **यूयं च तुम्बितविरोधिभयाः** तुम्बितं नाशितं विरोधिभयं शत्रुभीर्यैस्तादृशाः भवथ । अतोहम् **अपरम्** अतोऽधिकं **किं प्रह्लापये** व्यक्तं वदामि **परिचुण्टितारिः** परिचुण्टिताः परितः छिन्ना अरयः शत्रवो येन सः **अयं भूपो** राजा कंस एव **चेद्** यदि **एलयति** प्रेरयति । तर्हि **इह** अस्यां सभायां **कः** पुरुषः **निषेद्धा** निरोधकोऽस्ति न कोपीत्यर्थः ॥ २९ ॥

**कुम्ब्यते** इति । १६५५ कुबि-आच्छादने । कुभि-इत्येके । कुम्बेः कर्मणि लट् । **लुम्बितेति** । ( **तुम्बितेति** । ) १६५६ लुबि-१६५७ तुबि-आदर्शने । अर्दन इति केचित् । कर्मणि क्तः । **प्रह्लापये** । १६५८ ह्लप-व्यक्तायां वाचि । क्लप-इत्येके । (लट्) **परिच्चुटितारिः** । १६५९ चुटि-छेदने । कर्मणि क्तः । **पलयति** । १६६० इल-प्रेरणे । लट् ॥ २९ ॥

**यद्वा भियात्र किमम्बृक्षकसूरिसेव्यो**
**धर्मतरस्यगनयम्रगयं ह्वि राजा ।**
**अम्लेच्छलोकसहिते सदसीह तस्मा-**
**त्को बूसयिष्यति शिशूननिवर्हणीयान् ॥ ३० ॥**

**यद्वेति यद्वा** अथवा **अत्र** विषये **भिया** भयेन **किं** न किमपीत्यर्थः । **ह्वि** यस्मात् **अम्बृक्षकसूरिसेव्यः** अमृक्षकाणाम् अम्लेच्छनशीलानां साधुशब्दभाषिणा-मित्यर्थः सूरीणां विदुषां "धीमान्सूरिः कृतिः कृष्टिः" इति विद्वन्नामस्वमरः । सेव्यः शुश्रूषणीयः **धर्मतरम्यक्** धर्मेतरं पापं म्यक्षयति छिनत्तीति तादृशः तथा **अनयम्रक्** अन्यायच्छेदकः **अयं राजा** कंसो भूपः आस्ते इति शेषः । **तस्मात्** कारणात् **अम्लेच्छलोकसहिते** अपशब्दवक्तृजनैर्युक्ते सज्जनपूर्णे इति यावत् **इह** अस्मिन् **सदसि** सभायां (पृ० २५८ प०२०) **अनिवर्हणीयान्** अहिंस्यान् **शिशून्** बालान् **कः** जनः **बूसयिष्यति** हिंसिष्यति न कोपीत्यर्थः ॥ ३० ॥

**अम्बृक्षकेति** । १६६१ मृक्ष-म्लेच्छने । अपशब्दनं तत् । ण्वुल् । **धर्मतरम्यक्** । **अनयम्रक्** । म्यक्ष-म्रक्ष-छेदने इति चैके । द्वयोः क्विपि संयोगान्तलोपः । **अम्लेच्छेति** १६६२ म्लेच्छ-अव्यक्तायां वाचि । अपशब्दोक्तिः सा । अच् । **बूसयिष्यति** । १६६३ बूस-१६६४ वर्ह-हिंसायाम् । बूसेर्लट् । अनिवर्हणीयान् । वर्हेरनीयर् ॥ ३० ॥

**खेदस्त्वियान्पटहगर्दनगार्जिताशे**
**रङ्गे सगर्धमुगुर्दितवीरलोके ।**
**मञ्चाग्रपूर्वितनृपे शिशुना रणं वः**
**स्यादेव मानपारजिंलकमाड्यधाम्नाम् ॥ ३१ ॥**

**खेद** इति तु पुनः अस्माकम् **इयान्** एतावन्मात्रं **खेदः** दुःखं **पटहगर्दन**

(टि०) १ 'म्रक्ष' इति सि० कौ० ।

**गर्जिताशे** पटहानाम् आडम्बराणां "पटहाडम्बरौ समौ" इत्यमरः। गर्द्दनेन गर्जिता आशा दिशो यस्मिन् तादृशे **सगर्धनसुगुर्दितवीरलोके** सगर्धनं साभिकाङ्क्षं सुगुर्दिताः पूर्वमेव निकेतिताः स्थिताः वीरलोकाः शूरजना यत्र तस्मिन् **मञ्चाग्रपूर्वितनृपे** मञ्चाग्रे काष्ठ खट्वापुरोभागे पूर्वितः निकेतितः स्थितः नृपो यस्मिन् तस्मिन् अस्मिन् **रङ्गे** युद्धशालायाम् **ईड्यधाम्नां** प्रशस्यप्रभावाणां **वः** युष्माकं **शिशुना** बालेन मया **रणं** युद्धं **मानपरिंजसकं** मानस्य तौल्यस्य परिंजसकं मोक्षणकरं नाशकं **स्यादेव** अवश्यं भवेत् ॥ ३१ ॥

**गर्द्दनेति** । **गर्जितेति** गर्द-गर्ज-शब्दे । द्वयोर्ल्युट् कर्मणि क्तश्च । **गर्धनेति** । गर्ध-अभिकाङ्क्षायाम् इति चैके । ल्युट् । **गुर्दितेति** १६६५ गुर्द-पूर्वनिकेतने । पूर्वनिकेतनं पूर्वव्यवहार इत्येके । निवासपूर्वभाव इत्यन्ये । अस्य दीर्घविकल्पः । क्रीडार्थश्चास्ति द्रुमे । तस्मात् कर्तरि क्तः । पूर्व—निकेतने इति केचित् । अर्थः प्रागुक्त एव । प्राग्वत् क्तः । 'उपधायां च' ( ८।२।७८ ) इति दीर्घः । **परिंजसकम्** । १६६६ जसिरक्षणे । मोक्षणे इति केचित् । ण्वुल् । **ईड्येति** । १६६७ ईड-स्तुतौ । ण्यत् ॥ ३१ ॥

**इत्थं वदत्यसुरजासिनि पिण्डितायः-**
**स्थेमाथ रोषितमतिः प्रतिमल्लडेपी ।**
**प्रस्तूपितेन वपुषा हरिमाससाद**
**चाणूर आशु हलिनं खलु मुष्टिकोऽपि ॥ ३२ ॥**

**इत्थमिति अथ** अनन्तरम् **असुरजासिनी** राक्षसहिंसके भगवति **इत्थम्** अनेन प्रकारेण **वदति** सति **पिण्डितायःस्थेमा** पिण्डितस्य दृढं सन्ताड्य संघातीकृतस्य अयसः लोहस्य इव "लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी" इत्यमरः। स्थेम स्थैर्यं यस्य सः **रोषितमतिः** श्रीकृष्णवचसा क्रोधितबुद्धिः **प्रतिमल्लडेपी** प्रतिमल्लानां शत्रुयोद्धॄणां डेपी प्रक्षेपणशीलः **चाणूरः प्रस्तूपितेन** समुच्छ्रितेन **वपुषा** शरीरेण "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः" इत्यमरः । योद्धुमिति शेषः **हरिं** श्रीकृष्णम् **आशु** झटिति **आससाद** प्राप । **मुष्टिकः** तदाख्यो मल्लः **अपि खलु** ( वाक्यालङ्कारे ) **हलिनं** बलभद्रं "तालाङ्को मुसली हली" इति बलभद्रनामसु अमरः । **आससाद** ॥ ३२ ॥

**असुरजासिनीति** । १६६८ जसु-हिंसायाम् । क्त्वायामिडूविकल्पार्थादुदित्करणादस्य णिज्विकल्पः तस्माण्णिनिः । **पिण्डितेति** । १६६९ पिडि-संघाते । हेतुमण्ण्यन्तात् कर्मणि क्तः । **रोषितेति** । १६७० रुष-रोषे । रुट-इत्येके । रोषेः कर्तरि क्तः । **प्रतिमल्लडेपी** । १६७१ डिप-क्षेपे । णिनिः । **प्रस्तूपितेति** । १६७२ ष्टूप-समुच्छ्राये । कर्तरि क्तः ॥ ३२ ॥

**लोको हरेर्बलमचेतयमान एत-**
**द्युद्धं मृगेन्द्रशशदंशनवत्प्रदंसन् ।**
**संडापितः सदसि डेपितवृष्णिवीरे**
**भोजेन्द्रतन्त्रणविनिन्द्यममन्त्रतैवम् ॥ ३३ ॥**

**लोक** इति **हरेः** श्रीकृष्णस्य **बलं** वीर्यम् **अचेतयमानः** अजानन् **डेपितवृष्णिवीरे** डेपिताः संघातीभूता वृष्णिवीरा वृष्णिकुलोत्पन्नाः विक्रान्ता जना यत्र तस्मिन् **सदसि** सभायां (पृ० २५८ प० २०) **संडापितः** संघातीभूतः **लोकः** दर्शको जनः **एतत् युद्धं** विग्रहः **मृगेन्द्रशशदंशनवत्** मृगेन्द्रः सिंहः शशः लम्बकर्णः क्षुद्रमृगविशेषः तयोः परस्परं दंशनवत् दन्तव्यापारवत् अतिविषमं **प्रदंसन्** प्रकर्षेण पश्यन् ततः **भोजेन्द्रतन्त्रणविनिन्दी** भोजेन्द्रस्य कंसस्य तन्त्रणस्य राज्यकार्यस्य विनिन्दी निन्दाशीलः **एवम्** अनेन प्रकारेण **अमन्त्रत** गूढं भाषितवान् ॥ ३३ ॥

'आकुस्मादात्मनेपदिनः' कुस्मधातुपर्यन्तं णिच्यात्मनेपदिन एव (इत्यर्थः)। **अचेतयमान** इति । १६७३ चित-संचेतने । तच्च ज्ञानम् । अस्माच्छानच् । **दंशनेति** । १६७४ दाशि-दंशने । ल्युट् । **प्रदंसन्** १६७५ दसि-दंसनदर्शनयोः । दस-इत्येके । दंसनं वर्मग्रहणम् । दंशनदर्शनयोरित्यन्ये । अत्राकुस्मीयस्तङ् णिज्योग एवेति इदित्वाण्णिजभावे तङ् न । तेन दंसेः शपि शता । **संडापितः** । १६७६ डप-१६७७ डिप-संघाते । डापेः कर्तरि क्तः । **डेपितेति**। डिपेश्च पूर्ववत् क्तः। **तन्त्रणेति**। १६७८ तन्त्रि-कुटुम्बधारणे । कुटुम्ब-इति पृथक् धातुरित्येके । तन्त्रेर्ल्युट्। **अमन्त्रत**। १६७९ मन्त्रि-गुप्तभाषणे लुङि चङ् ॥ ३३ ॥

**प्रस्पाश्य मुष्टिमभितर्जयते प्रभर्त्स्यौ**
**मल्लो विवस्तायिषुरेनमगन्धनीयम् ।**

( टि० ; १८८० इति सं० कौ० । २ परिभाषणे सिं० कौ० ।

**किष्क्येत निष्कृपमनिष्कितकान्तिरेष**
**बालोऽमुना नृपतिलालनयाऽद्य कष्टम् ॥ ३४ ॥**

**प्रस्पाश्येति प्रभर्त्स्यः** तर्जयितुं योग्यः **मल्लः** योद्धा **अगन्धनीयम्** अर्दयितुं पीडयितुमयोग्यम् **एनं** श्रीकृष्णं **विवस्तयिषुः** अर्दयितुमिच्छुः सन् **मुष्टिं** बद्धकरं **प्रस्पाश्य** दृढं गृहीत्वा संश्लेष्य ( बद्ध्वा ) वा **अभितर्जयते** तर्जनं (भर्त्सनं) करोति । **अद्य** अस्मिन् दिने **अनिष्कितकान्तिः** अपरिमाणदीप्तिः **एष बालः** कुमारः **अमुना** मल्लेन **नृपतिलालनया** राजेप्सया **निष्कृपं** निर्दयं यथा तथा **किष्क्येत** हिंस्यतेति **कष्टं** महद्दुःखम् ॥ ३४ ॥

**प्रस्पाश्येति** । १६८० स्पश–ग्रहणश्लेषणयोः । ल्यप् । **अभितर्जयते** । १६८१ तर्ज–१६८२ भर्त्स–तर्जने । तर्जेर्लट् । **प्रभर्त्स्यः** । भर्त्सेर्ण्यत् । **विवस्तयिषुः** । १६८३ वस्त–१६८४ गन्ध–अर्दने । वस्तेः सन्युः । **अगन्धनीयम्** । गन्धेरनीयर् । **किष्क्येत** । १६८५ किष्क[1]–हिंसायाम् । हिष्क–इत्येके । किष्केः कर्मणि लिङ् । **अनिष्कितेति** । १६८६ निष्क–परिमाणे । कर्मणि क्तः । **लालनया** । १६८७ लल–ईप्सायाम् । युच् ॥ ३४ ॥

**आकूणिताक्षमपि च स्मिततूणितास्यं**
**भ्रूणस्य शाब्यजनयक्ष्यमवेक्ष्य गात्रम् ।**
**अस्यामनः क इव गूरयतेऽत्र मुष्टिं**
**नो खल्वशास्यमिह लक्षयितुं क्षमाः स्मः ॥ ३५ ॥**

**आकूणिताक्षमिति अत्र** जगति **अस्यामनः** वितर्करहितः **क इव** पुरुषः **आकूणिताक्षम्** आकूणिते भयेन ईषत्संकोचिते अक्षिणी नयने यस्मिन् तत् **अपि च स्मिततूणितास्यं** स्मितेन मन्दहासेन तूणितं पूरितम् आस्यं मुखं यत्र **शाब्यजनयक्ष्यं** शाब्यजनैः श्लाघ्यपुरुषैः यक्ष्यं पूज्यं च **भ्रूणस्य** बालस्य **गात्रं** शरीरम् **अवेक्ष्य** दृष्ट्वा **मुष्टिं गूरयते** प्रहरणार्थम् उद्यच्छति न कोपीत्यर्थः । **इह** अस्यां सभायाम् । **अशास्यम्** आलोचयितुमयोग्यं **लक्षयितुम्** आलोचितुं द्रष्टुं **नो खलु** नैव **क्षमाः** समर्थाः **स्मः** ॥ ३५ ॥

**आकूणितेति** । **तूणितेति** । १६८८ कूण–संकोचने । १६८९ तूण–

( टि० ) १ 'विष्क' इति सि० कौ० ।

पूरणे। द्वयोः कर्मणि क्तः। **ऊणस्य**। १६९० ऊण-आशंसायाम्। आशास्यते प्रार्थ्यते इति घञर्थे कः। **शाठ्यात**। १६९१ शठ-श्लाघायाम्। **यक्ष्येति**। १६९२ यक्ष-पूजायाम्। द्वयोर्ण्यत्। **अस्यामनेति**। १६९३ स्यम-वितर्के। ल्युट्। **गूरयते**। १६९४ गूर-उद्यमने। लट्। **अशाम्यम्**। १६९५ शाम-१६९६ लक्ष—आलोचने। शामेर्ण्यत्। **लक्षयितुम्**। लक्षेस्तुमुन्॥ ३५॥

**कुत्स्या हि गालनपटा इव कष्टमेते**
**दुष्कीर्तिभालनपराः खलु कूटवृत्त्या।**
**तद्वञ्चनं निरसितुं नहि वर्षिताः स्मः**
**किं कुर्महे खलजना इह मादयन्ताम्॥ ३६॥**

**कुत्स्या** इति **एते** मारणेच्छवः **गालनपटाः** स्रवणयुक्तवस्त्राणि (यैःप्रपाणक दि पूयते) **इव** दोषग्रहणात् **कुत्स्या** अधिक्षेप्या निन्द्या **हि** इति **कष्टम्** अतिदुःखं। **कूटवृत्त्या** अप्रदान(व्याज)व्यापारेण **दुष्कीर्तिभालनपराः** दुष्कीर्त्या निन्दाया भालने आभण्डनेऽर्जने पराः तदेकनिश्चयाः वयं **खलु** इति निश्चयेन **तद्वञ्चनं** तेषां वञ्चनं प्रलम्भन व्याजेन शिशुवधरूपं व्यापारं **निरसितुम्** अपनेतुं **नहि वर्षिताः स्मः** नैव शक्तिसंबद्धा भवामः। अतो वयमत्र **किं कुर्महे** सम्पादयामहे **इह** अस्यां सभायां **खलजनाः** दुष्टपुरुषाः **मादयन्तां** तृप्ता भवन्तु॥ ३६॥

**कुत्स्या** इति। १६९७ कुत्स-अवक्षेपणे। ण्यत्। **गालनेति**। १६९९ गल-स्रवणे। **भालनेति** १७०० भल-आभण्डने। आभण्डनं मार्जनम्। द्वयोर्ल्युट्। **कूटेति**। कूट-अप्रदाने। अप्रसादे इत्यन्ये। अप्रसादकृत्वाद्व्याजः। कूटेरप्। १७०२ कुट्ट-प्रतापने। इत्यन्ये। **वञ्चनेति**। १७०३ वञ्चु-प्रलम्भने। ल्युट्। ऊदिदित्येके। तत्र णिजभावे सर्वत्रेह विकल्पः। **वर्षिताः**। १७०२ वृष-शक्तिबन्धने। तच्च गर्भाधानसामर्थ्यम् शक्तिसम्बन्धे इति केचित्। अस्मात् कर्तरि क्तः। **मादयन्ताम्**। १७०५ मद-तृप्तियोगे। लोट्॥ ३६॥

**इत्यादि वाद्यशतदेवनमध्य एव**
**लोकः समालपदगारितकृष्णवीर्यः।**

(टि०) १ आशाविशङ्क्याः सि० कौ०। २ यथा पवनवस्त्रखण्डम् ऋजीषं गृह्णाति सद्वस्तु त्यजति एवं दोषमात्रग्राहकाः खला निन्दनीयाः इति भावः। ३ अत्र (१६९८) त्रुट-छेदने नोदाहारि। ४ आप्रदाने इति सि० कौ०।

**कंसस्त्ववेदयमतिर्भयमानितोऽपि**
**निर्यावनः कुयुधि कुस्मयमान आस्त ॥ ३७ ॥**

**इत्यादी**ति **अगारितकृष्णवीर्यः** अगारितोऽविज्ञातः कृष्णस्य भगवतः वीर्यं पराक्रमो येन सः **लोकः** जनः **वाद्यशतदेवनमध्ये** मृदङ्गादितूर्यशतस्य देवनमध्ये घोषान्तः **एव इत्यादि** अस्पार्श्येत्यादिश्लोकोक्तरूपं वचः **समालपत्** कथयामास । **तु** पुनः **अवेद्यमतिः** अज्ञधीः **निर्यावनः** जुगुप्सारहितः **भयमानितः** भयेन स्तब्धः **कंसः अपि** राजा अस्यां **कुयुधि** विषमयोद्धत्वात् निन्दिते युद्धे **कुस्मयमानः** कुत्सितं स्मयमानः निन्दितं मन्दं हसन् **आस्त** उपविष्टवान् ॥३७॥

**देवने**ति । १७०६ दिवु–परिकूजने । ल्युट् । **अगारि**तेति । १७०७ गृ–विज्ञापने । विज्ञानं इति द्रुमे । कर्मणि क्तः । **वेद्ये**ति । १७०८ विद–वेदनाख्याननिवासनेषु । परिवादे चैके । वेदनं ज्ञानम् । "अनुपसर्गाल्लिम्प—" (८ । २ । ५५) इति शः । **मानितः** । १७०९ मान–स्तम्भे । कर्तरि क्तः । **यावने**ति । १७१० यु–जुगुप्सायाम् । ल्युट् । **कुस्मयमानः** । १७११ कुस्म–नाम्नो वा कुत्सितस्मयने । कुत्सितस्मयनार्थो धातुरत्र पठितव्यः । तस्माण्णिचि शानचि । कुस्मयमानः ? कुस्ममित नामपदाद्वा तत्करोतीति णिचि । तत्सिद्धिरित्यर्थः । कुस्ममिति दृष्टं कुस्मयतिरकारितमिति[2] चेत् कोनित्यसमासत्वात् उपसर्गस्य च बाह्यत्वात् कारितमेव । एषामर्थो धातुखण्डे एव द्रष्टव्यः ॥ ३७ ॥

**संचर्चयन्नपनयानथ बुक्कयिष्णुः**
**श्वेवोग्रशब्दनपरः कररुद्धकाणः ।**
**मल्लो जिजम्भिषुरसूदितवीर्यमीशं**
**मुष्ट्या जजास बहु पाशितवांश्च दोष्णा ॥ ३८ ॥**

**संचर्चयन्नि**ति **अथ** श्रीकृष्णवचःश्रवणोत्तरम् **अपनयान्** छलप्रक्षेपणानि **संचर्चयन्** आवर्तयन् **श्वा** कुक्कुर **इव बुक्कयिष्णुः** भषणशीलः **उग्रशब्दनपरः** रौद्रवाण्या तर्जनादितत्परः **कररुद्धकाणः** करेण हस्तेन रुद्धं काणं निमीलितैकनेत्रमग्नमेकं नेत्रं वा येन सः **मल्लः** चाणूरः **असूदितवीर्यं** न सूदितं चारितं क्षीणं वीर्यं बलं यस्य तम् **ईशं** श्रीकृष्णं **जिजम्भिषुः** हन्तुमिच्छुः सन् **मुष्ट्या** बद्धकरेण **जजास**

(टि०) १ चेतनाख्याननिवासेषु इति सि० कौ० । २ अण्यन्तम् ।

ताडितवान् **दोष्णा** बाहुना "भुजबाहू प्रवेष्टो दोः" इत्यमरः । **बद्धु** बहुकृत्वः **पाशितवान्** बद्धवान् **च** ॥ ३८ ॥

इतः परं विकरणान्तरोक्ता एवोच्यन्ते । **संचर्चयन्निति** । १७१२ चर्च-अध्ययने । अस्माच्छता । लक्षणया आवर्तनार्थता । **बुक्कयिष्णुः** । १७१३ बुक्क-भषणे । श्वरवत्तत् । इष्णुच् । **शब्दनेति** । १७१४ शब्द-शब्दक्रियायाम् । ल्युट् । सोपसर्गस्त्वयमाविष्कृताविति द्रुमे । **काणः** । १७१५ कण-निमीलने । एकनेत्रनिमीलने चेदम् । अस्मादच् । **जिजम्भिषुः** । १७१६ जभि-नाशने । णिजभावे सन्युः । **असूदितेति** । १७१७ सूद-क्षरणे । कर्तरि क्तः । **जजास** । १७१८ जसु-ताडने णिजभावे लिट् । **पाशितवान्** । १७१९ पश-बन्धने । पाशेः क्तवतुः ॥ ३९ ॥

**द्रागामयन्विचटदस्थिकयाऽथ मुष्ट्या**
**प्रास्फोटयत्तमजितोऽपि च घाटिताङ्गम् ।**
**दिष्ट्यैष हिंसयति देव्यममुं युधीति**
**संमोदमर्जयति घोषति नाकिलोके ॥ ३९ ॥**

**द्रागिति** **अथ** मल्लकर्तृकमुष्टिप्रहारपाशनोत्तरं **नाकिलोके** देवजने '**एष** श्रीकृष्णः **देव्यं** मर्दनीयम् **अमुं** मल्लं **युधि** युद्धे **हिंसयति** व्यापादयति इति **दिष्ट्या** आनन्दोऽयम्' **इति** **घोषति** स्वाभिप्रायं प्रकाशयति सति तथा **संमोदं** हर्षम् **अर्जयति** प्रतियत्नयति वर्धयति सति **अजितः** केनापि नाभिभूतः श्रीकृष्णः **अपि च** **विचटदस्थिकया** विचटन्ति भिद्यमानानि अस्थीनि कुल्यानि यस्यां तया "कीकसं कुल्यमस्थि च" इत्यमरः । **मुष्ट्या** **घाटिताङ्गं** संघातीभूतावयवं मुष्टिभिन्नाङ्गं वा **तं** चाणूरम् **आमयन्** प्रहारैर्जर्जरिताङ्गत्वेन सरुजं कुर्वन् **द्राक्** झटिति **प्रास्फोटयत्** अभिनत् भिन्नाङ्गमकरोत् इति यावत् ॥ ३९ ॥

**आमयन्निति** । १७२० अम-रोगे । शता । **विचटदिति** । १७२१ चट-१७२२ स्फुट-भेदने । चटेर्गणोक्तत्वेन चुरादिर्णिचोऽनित्यत्वात् शपि शता । **प्रास्फोटयत्** स्फुटेर्लङ् । **घाटितेति** । १७२३ घट-संघाते । भेदने चेत्येके । कर्तरि क्तः । **हिंसयति** 'हन्त्यर्थाश्च' । एते च स्वार्थे णिचं भजन्तीत्यर्थः । तेन हिंसेर्णिचि लट् । चटस्फुटघटानामपि हन्त्यर्थत्वमिष्यते । दीप्त्यर्थानामपि स्वार्थिकणिजऽस्ति द्रुमे । **देव्यम्** । १७२४

दिवु-मर्दने । परिकूजने इति केचित् । एयत् । अर्जयति । १७२५ अर्ज-प्रतियत्ने । सतो गुणान्तराधानं तत् । आर्जनेऽप्यस्ति । अस्माच्छता । घोषति । १७२६ घुषिर-विशब्दने । शब्दने स्वाभिप्रायप्रकाशनं तत् । स्तुतौ च द्रुमे । अस्य णिज्विकल्पो भाष्योक्तः । तेन शपि शता ॥ ३९ ॥

**आक्रन्दयत्सु निभृतं नृषु लासिताशे-**
**षोत्तंसभूषणविमोक्षणयार्हिताभौ ।**
**आज्ञापनामिह विभाज्य नृपेण दृष्टौ**
**तौ शर्धनाय समयातयतां नियुद्धम् ॥ ४० ॥**

**आक्रन्दयत्सु** इति **नृषु** तत्रागतेषु जनेषु **निभृतम्** आच्छन्नं यथा तथा **आक्रन्दयत्सु** सततं रुदत्सु सत्सु **लासिताशेषोत्तंसभूषणविमोक्षणया** लासितेन स्वकौशलालङ्कृतेन अशेषाणां सर्वेषाम् अङ्गानां भूषणानाम् अलङ्काराणाम् उत्तंसस्य कर्णभूषणस्य च "पुंस्युत्तसावतंसौ द्वौ कर्णपूरे च शेखरे" इत्यमरः । विमोक्षणया असनेन त्यागेन **अर्हिताभौ** अर्हिता पूजिता सविशेषा आभाः कान्ति ययोःतौ **नृपेण** राज्ञा कंसेन **आज्ञापनां** नियोगं **विभाज्य** विश्राण्य दत्वा **इह** रङ्गभूमौ **दृष्टौ** अवलोकितौ **तौ** श्रीकृष्णचाणूरौ **शर्धनाय** अन्योन्यं प्रसहनाय अभिभवाय **नियुद्धं** बाहुयुद्धं "नियुद्धं बाहुयुद्धे स्यात्" इत्यमरः । **समयातयतां** संस्कृतवन्तौ सविशेषं कृतवन्तौ ॥ ४० ॥

**आक्रन्दयत्स्विति** । १७२७ 'आङः क्रन्द-सातत्ये । आङ्पूर्वः क्रन्दिः सातत्ये णिचं भजते(इत्यर्थः)। शता । शत्रु (व्यु) क्रयोराह्वानरोदनयोः सातत्यं चेदम् । **लासितेति** । १७२८ लस-शिल्पयोगे । शिल्पोपयोगे इति केचित् । अस्मात् कर्मणि क्तः । **उत्तंसेति** १७२९ तसि-१७३० भूष-अलंकारे । तसेर्घञ् । **भूषणेति** । भूषेर्ल्युट् । **विमोक्षणया** १७३१ मोक्ष-असने । युच् । **अर्हितेति** । १७३२ अर्ह-पूजायाम् । कर्मणि क्तः । **आज्ञापनाम्** । १७३३ ज्ञा-नियोगे । आङ्पूर्व एवायम् । अस्माद्युच् । **विभाज्येति** । १७३४ भज-विश्राणने । दानं तत् । ल्यप् । **शर्धनाय** । १७३५ शृधु-प्रसहने । अभिभवस्तत् । ल्युट् । **समयातयताम्** । १७३६ यत-निकारोपस्कारयोः । परिभव-संस्कारौ तौ । खेदे च द्रुमे । अस्माल्लङ् ॥ ४० ॥

( टि० ) १ अयं धातुः सिद्धान्तकौमुद्यां नोपलभ्यते ।

निर्यातितप्रहृतिमीशमतिप्रहृत्य
मल्लोऽथ वासितविचारमचुच्यवत्सः ।
रोषान्ध्यभावितमसृग्भिरकल्पयत्तं
कृष्णोऽपि नाकिजनराकितलाग्यवीर्यः ॥ ४१ ॥

निर्यातितेति अथ नियुद्धप्रवृत्त्युत्तरं सः पूर्वोक्तः मल्लः चाणूरः निर्यातितप्रहृतिं कृतप्रहारप्रतिप्रहारम् ईशं श्रीकृष्णम् अतिप्रहृत्य अतितरां प्रहारं कृत्वा वासितविचारं छिन्नसंशयं यथा तथा अचुच्यवत् अह्रासीत् । नाकिजनराकितलाग्यवीर्यः नाकिजनेन स्वर्गिलोकेन राकितम् आस्वादितमनुभूतं लाग्यम् आस्वादनीयं वीर्यं पराक्रमो यस्य सः कृष्णो वासुदेवोऽपि रोषान्ध्यभावितं क्रोधजनितेन आन्ध्येन मूढत्वेन भावितम् अवकल्कितं मिश्रीकृतं तं चाणूरम् असृग्भिः रुधिरैः "रुधिरेऽसृग्लोहितास्र रक्तक्षतशोणितम्" इत्यमरः । अकल्पयत् मिश्रीकृतवान् ॥ ४१ ॥

निर्यातितेति । निसश्च धान्यादिप्रतिदाने । अस्मात् कर्मणि क्तः । वासितेति १७३७ वस-स्नेहनच्छेदापहरणेषु । 'उपहरणेषु' इति वा पाठः । तस्मात् प्राग्वत् क्तः । विचारेति । १७३८चर-संशयने ।असंशये च द्रुमे । घञ् । अचुच्यवत् । १७३९च्यु-हसने। सहने इति केचित् । च्युस-इत्यन्ये । च्यावयतेर्लुङि चङ्। भावितम् । १७४०भुवोऽवकल्कने । अस्यावकल्कने णिच् स्यात् । तच्च मिश्रीकरणम् । अन्ये तु चिन्तने विपाचनेऽवकल्कने चेत्याहुः । विपाचनम् । विपक्वीकरणम् । अस्मात् कर्मणि क्तः । अकल्पयत् । १७४१ कृपेश्च मिश्रीकरणे णिच् स्यात् । अस्माल्लङ् । राकितेति । लाग्येति । १७४२ रक-१७४३ लग-आस्वादने । आद्योऽपि गान्त इत्येके । रघ-लघ-इत्यन्ये । राकेः कर्मणि क्तः । लागेर्ण्यत् ॥ ४१ ॥

शौर्याञ्चितेन धृतालिङ्गितचेलकेन
संमोदितो हलधरोऽपि च मुष्टिकेन ।
मुष्ट्या तुदन्मुहुरतित्रसदाशु दोर्भ्या-
मुद्वासयज्जमनुतस्तममोचयच्च ॥ ४२ ॥

शौर्य्याञ्चितेनेति शौर्य्याञ्चितेन शौर्येण वीर्येण अञ्चितेन अन्येभ्यः सविशेषेण धृतालिङ्गितचेलकेन धृतं परिहितं लिङ्गितं चित्रीकृतं चेलं वस्त्रं येन

" चेलं वसनमंशुकम् " इत्यमरः । **मुष्टिकेन** तदाख्यमल्लेन **सम्मोदितः** प्राप्त संसर्गः **उध्रासयज्जननुतः** उध्रासयद्भिः उञ्छवृत्तिभिर्जनैः नुतः स्तुतः **हलधरो** बलभद्रोऽपि **च तं** मुष्टिकं **मुष्ट्या** बद्धकरेण **मुहुः** वारम्वारं **तुदन्** व्यथयन् । **दोर्भ्यां** बाहुभ्यां " भुजबाहू प्रवेष्टो दोः " इत्यमरः । **आशु** शीघ्रम् **अतित्रसत्** धारितवान् गृहीतवान् वारितवान्वेत्यर्थः । **च** पुनः **अमोचयत्** यत् तद्बन्धनात् आत्मानं प्रमोचितवान् ॥ ४२ ॥

**अञ्चितेनेति** । १७४४ अञ्चु–विशेषणे । व्यावर्तनं तत् । कर्मणि क्तः । **लिङ्गितेति** । १७४५ लिगि–चित्रीकरणे । प्राग्वत् क्तः । **संमोदितः** । १७४६ मुद–संसर्गे । कर्तरि क्तः । **अतित्रसत्** । १७४७ त्रस–धारणे । तच्च ग्रहणं वारणं वा । लुङि चङ् । **उध्रासयदिति** । १७४८ उध्रस–उञ्छे । उकार इदित्येके । उध्रसेः शता । **अमोचयत्** । १७४९ मुच–प्रमोचने । लङ् ॥ ४२ ॥

**दोर्भ्यां ग्रासयतां प्रपोषितरुषां निर्दालनोद्योगिनां**
**तेषां विक्रमणैरपाटि पटिमा शिक्षाप्यपोटि स्फुटम् ।**
**स्थेमालोटि जवोऽप्यतुञ्जि लघिमा चाभिञ्ज्यपिञ्ज्यश्रमो**
**रोषोऽलुञ्जि रसो व्यभञ्जि बलवत्तालङ्घि चात्रस्यभीः ॥४३॥**

**दोर्भ्यामिति दोर्भ्यां** बाहुभ्यां **ग्रासयतां** गृहीतव्यरथानेषु गृह्णतां **प्रपोषितरुषां** प्रकर्षेण धारितक्रोधानां **निर्दालनोद्योगिनां** निःशेषेण विदारणे सोद्यमानां **तेषां** श्रीकृष्णबलभद्रचाणूरमुष्टिकानां **विक्रमणैः** पराक्रमोल्लासैः **पटिमा** युद्धकौशलम् **अपाटि** उक्तं स्पष्टं प्रकाशितमित्यर्थः विक्रमेषु उक्ति कर्तृत्वाभावात् एवमुत्तरत्रार्थः । **शिक्षा** युद्धोपदेशोऽपि **स्फुटं** स्पष्टम् **अपोटि** । **स्थेमा** शरीरस्थैर्यम् **अलोटि** । **जवो** वेगोऽपि **अतुञ्जि** । **लघिमा** क्षिप्रकारिता **च** " लघुक्षिप्रमरं द्रुतम् " इत्यमरः । **अभिञ्जि** । **अश्रमः** बलकार्यं कृत्वा पुनः करणे शैथिल्याभावः **अपि अपिञ्जि** । **रोषः** कोपः **अलुञ्जि** । **रसो** युद्ध कौतुकं **व्यभञ्जि** विशेषेणोक्तं । **बलवत्ता** वीर्यबाहुल्यम् **अलङ्घि** । **अभीः** भयाभावश्च **अत्रासि** स्पष्टमुक्ता । **शार्दूलविक्रीडितम्** छन्दः । " सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् " इति लक्षणात् ॥ ४३ ॥

"आ स्वदः सकर्मकात्" अतः परं स्वि(स्वद)पर्यन्तेभ्यः कर्मसम्भवे एव णिच् स्यात्। आसयतामिति। १७५० ग्रस–ग्रहणे। शता। प्रपोषितेति। १७५१ पुष–धारणे। [ कर्मणि क्तः ] निर्दालनेति। १७५२ दल–विदारणे। युच्। अपाटि। अपोटि। अलोटि। अतुञ्जि। अभिञ्जि। अपिञ्जि। अलुञ्जि। व्यभञ्जि। अलङ्घि। अत्रसि इति। १७५३ पट–१७५४ पुट–१७५५ लुट–१७५६ तुजि–१७५७ भिजि–१७५८ पिजि–१७५९ लुजि–१७६० भजि–१७६१ लघि–१७६२ त्रसि–१७६३ पिसि–१७६४ कुसि–१७६५ दशि–१७६६ कुशि–१७६७ घट–१७६८ घटि–१७६९ बृंहि–१७७० बर्ह–१७७१ वल्ह–१७७२ गुप–१७७३ धूप–१७७४ विच्छ–१७७५ चीव–१७७६ पुथ–१७७७ लोकृ–१७७८ लोचृ–१७७९ णद–१७८० कुप–१७८१ तर्क–१७८२ वृतु–१७८३ वृधु–भाषार्थाः। एते एकत्रिंशत्। भासार्था इत्येके। पुटिश्चूर्णनेऽपि द्रमे। पटादिदशानां कर्माणि। लुङि चिण्॥ ४३॥

**कश्चित्कष्टमर्वि (पिं) सयद्रणमिमं कुंस्यं त्वया दश्यतां**
**नाकुंश्यं परिघाटयेति च परेणोद्घण्टितोऽबृंहयत्।**
**नाहं वर्हयितास्म्यवल्ह्यमपि भोः सर्वैरिदं गोप्यते**
**तांस्त्वं धूपय विच्छयन्क इव न त्वच्चीवनात्पोथयेत्॥ ४४॥**

**कश्चिदिति** सभास्थलोकानां मध्ये **कश्चित** प्रेक्षकः **इमं रणं** युद्धं **कष्टं** क्लेशकरम् **अपिंसयत** अकथयत्। **च** पुनः 'त्वया **कुंस्यं** कथयितुमर्हं **दंश्यतां** कथ्यताम्। **अकुंस्यम्** वक्तुमयोग्यं **न परिघाटय** न ब्रूहि'। **इति** एवं **परेण** अन्येन प्रेक्षकेण **उद्घण्टितः** कथितः पूर्ववादी इति **अबृंहयत्** अकथयत्। यत् **अहं न वर्हयितास्मि** न वदिष्यामि। **भोः** मित्र! **इदं** मल्लकर्तृककृष्णराम मारणरूपमनर्थम् **अवल्ह्यमवक्तव्यमपि सर्वैः** समस्तैः प्रेक्षकैः **गोप्यते** उच्यते। **त्वं तान्** सर्वान् **धूपय** मां प्रतिश्रावयतेति कथय। **विच्छयन्** अन्येभ्यः कथयन् **कः इव** एव **त्वच्चीवनात्** तव कथनात् **न पोथयेत्** त्वां प्रति न कथयेत्॥ ४४॥

**अर्वि(पिं)सयदिति।** पिं(पि)सेर्लङ्। **कुंस्यम्।** कुंसेर्ण्यत्।

**दंश्यताम्** । दंशेः कर्मणि लोट् । **अकुंश्यम्** । कुंश्येर्ण्यत् । **परिघाटय** । घाटेर्लोट् । **उद्घण्टितः** । घण्टेः कर्मणि क्तः । **अबृंहयत्** । बृंहेर्लङ् । **बर्हयितास्मि** । बर्हेर्लुट् । **बल्ह्यम्** । बल्हेर्ण्यत् । **गोप्यते** । गोपेः कर्मणि लट् । **धूपय** । धूपेर्लोट् । **विच्छयन्** । विच्छेः शता । **चीवनेति** । चीवेर्ल्युट् । **पोथयेत्** । पोथेर्लिङ् ॥ ४४ ॥

**अलोचि चान्यैः समरेऽत्र कष्टतामलोकयन्दुष्यति नादयन्नपि ।**
**कोपः प्रभोः कोपयति प्रतर्क्यते पापश्च ह्री वर्त्यमवर्धयञ्जनः ॥४५॥**

**अलोचीति अन्यैः** परैः **च अलोचि** एवं कथितं । यत् **अत्र** अस्मिन् **समरे** रणे "अस्त्रियां समरानीकरणाः" इत्यमरः । **कष्टतां** दर्शनासह्यताम् **अलोकयन्** न कथयन् ( धर्मतः, ) **नादयन्** कथयन् **अपि** ( राजतः ) **दुष्यति** दोषं लभते । तदेवाह **कोपयति** जने वर्दति सति **प्रभोः** राज्ञः **कोपः** क्रोधः **प्रतर्क्यते** सर्वैः उच्यते प्रकाश्यते उह्यते । **वर्त्यं** वक्तव्यम् **अवर्धयन्** न कथयन् **जनः** पुरुषः **पापश्च** पापयुक्तश्च भवति **ह्री** अहो ! किं वा विधेयमित्याश्चर्यं । विस्मये ह्रीत्यव्ययम् " अहो ह्री च विस्मये " इत्यमरः । वंशस्थेन्द्रवज्रयोः **उपजातिः** ॥४५॥

**अलोचीति** लोचेः कर्मणि लुङि चिण् । **अलोकयन्** । **नादयन्** । **कोपयति** । लोकेर्नादेः कोपेश्च शता । **प्रतर्क्यते** । तार्किरूहेऽपि । तस्मात्कर्मणि लट् । **वर्त्यम्** । वर्तेर्ण्यत् । **अवर्धयन्** । वर्धेः शता ॥ ४५ ॥

**भीतिं रोटय लञ्जयाऽनयमसत्स्वाद्यञ्ज्यतां दंसय**
**क्रौर्यं भ्रंशय रुंसयाऽल्पमतितां भाग्यक्षयं रुंशय ।**
**मानं शीकय नाटयाऽकरुणतां दुर्वासनां घुण्टय**
**भ्रान्तिं जुङ्गय भूपतेरिति जना गूढं मिथोऽरङ्घयन् ॥ ४६ ॥**

**भीतिमिति जनाः** प्रेक्षकलोका **भीतिं** भयं **रोटय** अकथयन् प्राकाशयन्निति यावत् । एवमुत्तरत्रार्थः सर्वत्र । **अनयम्** अन्यायं **लञ्जय** । **असत्सु** दुष्टेषु **आद्यञ्ज्यतां** प्रथमप्रकाश्यतां **दंसय** । **क्रौर्यं** क्रूरतां **भ्रंशय** । **अल्पमतितां** तुच्छबुद्धितां **रुंसय** । **भाग्यक्षयं** दुर्दैवतां **रुंशय** । **मानम्** आत्ममहत्वं **शीकय** । **अकरुणतां** निर्दयत्वं **नाटय** । **दुर्वासनां** सदाचारविरुद्ध कुत्सिताशयं **घुण्टय** ।

भ्रान्तिं विपरीतज्ञानं जुञ्चय। इति एवं भूपतेः राज्ञः कंसस्य तमुद्दिश्येत्यर्थः। गूढं गुप्तं यथा तथा मिथः परस्परम् अरङ्घयन् अकथयन् ॥ ४६ ॥

रोटय। लञ्जय। अञ्ज्यताम्। दंशय। भ्रंशय। रुंसय। रुंशय। शीकय। नाटय। घुण्टय। जुञ्चय। इति। १७८४ रुट–१७८५ लजि–१७८६ अजि–१७८७ दसि–१७८८ भ्रशि–१७८९ रासि–१७९० रुशि–१७९१ शीकृ[1]–१७९२ नट–१७९३ घुटि–१७९४ जुचि[2]–१७९५ रघि–१७९६ लघि–१७९७ अहि–१७९८ रहि–१७९९ महि–चेति पञ्चदश चैके पठन्ति। १८०० लडि–१८०१ तड–१८०२ नड–चेत्यन्ये। अर्थः प्राग्वत्। तत्र रोट्याद्येकादशानां "समुच्चयेऽन्यतरस्याम्" इति सर्वलकारस्थाने विहितो लोट्। अञ्जेस्तु यत्। अरङ्घयन्निति। "समुच्चये सामान्यवचनस्य" इति अनुप्रयुक्तस्य रङ्घेर्लङ्। तेन लोडन्तानामपि भूतार्थता। अन्येषां भाषणीयविशेषवाचित्वात् रङ्घेस्तदभावात् सामान्यार्थता ॥ ४६ ॥

वीर्यं दुरंहमभिरंहय मंहयाभां
मौग्ध्यं प्रलण्डय च तोडय निर्भयत्वम्।
संनाडयन्त्य इति पूरितरोजशंका
नार्यो हरेः समरकेलिमसिष्वदन्त ॥ ४७ ॥

वीर्यमिति पूरितरोजशङ्काः पूरिता आप्यायिता भृता रोजस्य हरिभङ्गस्य शङ्का संदेहो याभ्युताः नार्यः प्रेक्षका योषितः श्रीकृष्णः दुरंहं दुःखेन वक्तुं शक्यं वीर्यं बलम् अभिरंहय कथयतीत्यर्थः एवमग्रेप्यर्थो योज्यः आभां कान्तिं मंहय। मौग्ध्यं युद्धेपि मनोहरत्वं "मुग्धः सुन्दरमूढयोः" इति कोशः। प्रलण्डय। च पुनः निर्भयत्वं भीतिराहित्यं तोडय। इति एवं हरेः श्रीकृष्णसम्बन्धं संनाडयन्त्यः कथयन्त्यः सत्यः समरकेलिं युद्धक्रीडां असिष्वदन्त आस्वादितवत्यः अनुभूतवत्यः ॥ ४७ ॥

दुरंहमिति। अंहेः खल्। अभिरंहय। मंहय। प्रलण्डय। तोडय। रंह्यादिचतुर्णां प्राग्वल्लोट्। संनाडयन्त्यः। नाडेः शतरि ङीप्। एते भाषार्थाः समुदिता एकोनपञ्चाशत् पूरितेति। १८०३ पूरी-आप्यायने। ईदित्वेन निष्ठायामनिट्त्वस्य णिच्येव संभवाण्णिज्विकल्पः। अस्मात् कर्मणि क्तः। रोजेति। १८०४ रुज-

(टि०) १ 'शीक' इति सि० कौ०। २ जि-चि-इति द्वौ भिन्नौ धातू क्वापि धातुपाठे।

हिंसायाम् । घञ् । असिष्विदन्त । १८०५ ष्वद—आस्वादने । संवरणे—इत्येके । स्वादे-इत्यन्ये । स्वदेश्चङ् । आष्वदीया गताः ॥ ४७ ॥

**कृष्णोऽथ बाहुयुगलैर्बहु योजयन्तं**
**दोष्णा प्रपर्च्य रिपुमार्चत मुष्टिघातैः ।**
**तच्चासहन्तममुमैरदलायितायः-**
**स्थैर्यं सुदूरमपवृक्तवृतिप्रभावः ॥ ४८ ॥**

कृष्ण इति **अथ** लोके एवं वदत्येव सति **अपवृक्तवृतिप्रभावः** अपवृक्ता अपार्जिता वृतिः आवरणायाच्छादनं यस्य तादृशः प्रभावो यस्य प्रकाशितसामर्थ्य इति यावत् । **कृष्णः बाहुयुगलैः** भुजद्वयेन ( जातौ बहुवचनं ) **बहु** अधिकं यथा तथा **योजयन्तं** संयमयन्तं बध्नन्तं **रिपुं** शत्रुं चाणूरं **दोष्णा** बाहुना **प्रपर्च्य** संयम्य **मुष्टिघातैः** मुष्ट्या संहननेन **आर्चत** पूजां कृतवान् लक्षणया प्रहृतवानित्यर्थः । **च** पुनः **तत्** मुष्टिप्रहरणम् **असहन्तम्** अमर्षयन्तं क्रुध्यन्तं विचेतनं वा **अलायितायः स्थैर्यम्** न अलायितं द्रवीकृतं कठिनमित्यर्थः यत् अयः लोहं तदिव स्थैर्यं स्थिरता ऽचलनशक्तिर्यस्य तादृशमपि **अमुं** चाणूरं **सुदूरम्** अतिविप्रकृष्टप्रदेशे **ऐरत्** प्रक्षिप्तवान् ॥ ४८ ॥

आ धृषाद्वा । परं सु(यु)जादीनां धृषिपर्यन्तानां वा णिच् स्यात् । **योजयन्तमिति** । १८०६ युज—१८०७ पृच—संयमने । आद्यो योगे च द्रुमे । अन्त्यः संपर्चने च योजेः शता । **प्रपर्च्य** । पर्चेर्ल्यप् । **आर्चत** १८०८ अर्च—पूजायाम् । अस्या णिचि तङ्वेत्येके । तेन तङि लङ् । **असहन्तम्** । १८०९ षह—मर्षणे । अणिचि शपि शता । **ऐरत्** । १८१० ईर—क्षेपे । गतौ च द्रुमे । शपि लङ् । **अलायितेति** । १८११ ली—द्रवीकरणे । णिचि कर्मणि क्तः । **अपवृक्तेति** । १८१२ वृजी—वर्जने । वृजेः कर्मणि क्तः । **वृतीति** । १८१३ वृञ्—आवरणे । क्तिन् ॥ ४८ ॥

**अजरद्वृषवद्विरिक्तपीडः पुनरभ्येत्य विशिष्टचित्ततापी ।**
**प्रजहार हरिं रणेष्वतर्पन्सुदृढं छर्दितमन्युरप्रदर्भन् ॥ ४९ ॥**

अजरदिति **विशिष्टचित्ततापी** विशिष्टानां श्रेष्ठपुरुषाणां चित्ततापी

मनसो दाहनशीलः खेदकर इति भावः **रणेषु** युद्धेषु **अतर्पन्** इदानीमपि तृप्तिम-प्राप्नुवन् **छर्दितमन्युः** छर्दितः सन्दीप्तः मन्युः क्रोधो येन सः "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः। **अप्रदर्भन्** भयरहितः प्रक्षिप्तोपि चाणूरः **अजरद्वृषवत्** अजरन् अवृद्धो यो वृषः बलीवर्दस्तद्वद् यौवनोन्मत्तमहावृषभ इवेत्यर्थः **विरिक्तपीडः** व्यथया वियुक्तः सन् **पुनः** भूयः **अभ्येत्य** आगत्य **हरिं** श्रीकृष्णं **सुदृढं** बहुबलेन यथा तथा **प्रजहार** प्रहारं कृतवान् ॥ ४९ ॥

**अजरदिति**। १८१४ जॄ–वयोहानौ। १८१५ झ्रि–इत्येके। जॄ–धातोः शता। **विरिक्तेति**। १८१६ रिच–वियोजनसंपर्चनयोः। कर्तरि क्तः। **विशिष्टेति**। १८१७ शिष–असर्वोपयोगे। विपूर्वोऽतिशये। तस्मात् कर्तरि क्तः। **तापी**। १८१८ तप–दाहे। णिनिः। रिच्यादयस्त्रयो णिजभावेऽनिटः। **अतर्पन्**। १८१९ तृप–तृप्तौ। प्रीणने च द्रुभे। शपि शता। **छर्दितेति**। १८२० छृदी–संदीपने। ईदित्वं नेति केचित्। अस्मात् कर्मणि क्तः। चृप–छृप–तृप–दृप–संदीपने इत्यप्येके। **अप्रदर्भन्**। १८२१ दर्भी–भये। शता ॥ ४९ ॥

**कृष्णोऽविश्रथितारिभीरभिमयन्दोष्णा ग्रथन्भ्रामय-**
**न्क्राथ्यं प्रोथितवानशीकितमतिं भूमावचीकन्नमुम्।**
**मल्लोऽर्धः स च हिंसितः पदमुपासात्सीद्धरेः शुन्धितः**
**तावत्स्वं बलमच्छदज्जुषितवान्मुष्ट्या हली मुष्टिकम् ॥ ५० ॥**

**कृष्ण** इति **अविश्रथितारभीः** अविश्रथिता मुक्ता त्यक्ता अरिभीः शत्रुभयं येन स **कृष्णः** वासुदेवः **अभिमयन्** अभिमुख गच्छन् सन् **क्राथ्यं** हिंस्यम् **अशीकितमतिम्** अशीकिता अमर्षेणाऽसहना बुद्धिर्यस्य तम् **अमुं** चाणूरम् **अचीकन्** असहमानश्च **दोष्णा** बाहुना **ग्रथन्** बध्नन् **भ्रामयन्** प्रावर्तयन् **भूमौ** पृथिव्यां **प्रोथितवान्** अभिहतवान्। **अर्धः** हिंस्यः स चाणूरः **मल्लः** योद्धा **च हिंसितः** हतः **शुन्धितः** शुचीभूतः सन् **हरेः** श्रीनारायणस्य **पदं** मोक्षपदवीम् **उपासात्सीत्** अपद्यत। **तावत्** तत्कालपर्यन्तं **हली** बलभद्रः "तालाङ्को मुसली हली" इति बलभद्रनामस्वमरः। अपि **स्वं** निजं **बलं** वीर्यम् **अच्छदन्** न अवारयन् प्रकाशयन्नित्यर्थः **मुष्टिकं** तदाभधं मल्लं **मुष्ट्या जुषितवान्** परितर्कितवान् हिंसितवानित्यर्थः। **शार्दूल विक्रीडितं** छन्दः ॥ ५० ॥

**श्रथितेति** । १८२३ श्रथ–मोक्षणे । बन्धे–च द्रुमे । हिंसायामिति केचित् । कर्मणि क्तः । **अभिमयन्** । १८२४ मी–गतौ । शता । **अथन्** । १८२५ ग्रथ–बन्धने । शता । **क्राथ्यं** । क्रथ–हिंसायामिति । स्वरितेतं केचिदाहुः । तस्माण्ण्यत् । **अशीकितेति** । १८२६ शीक–आमर्षणे । १८२७ चीक–च । आद्यः सेचने । शीकेः कर्तरि क्तः । **अचीकन्** । चीकेः शता । **अर्द्यः** । १८२८ अर्द–हिंसायाम् । स्वरितेत् । तस्माण्ण्यत् । **हिंसितः** । १८२९ हिसि–हिंसायाम् । इदितोऽस्य युजादिफलं चिन्त्यम् । कर्मणि क्तः । **उपासात्सीत्** । १८३१ आङः–षद–पद्यर्थे । पद्यर्थो गतिः । लुङि सिचि वृद्धिः । शशपोः सदेः लृदित्वाल्लुङ्यङेवेति भेदः । **शुन्धितः** १८३२ शुन्ध–शौचकर्मणि । कर्माविवक्षया कर्तरि क्तः । **अच्छदन्** । १८३३ छद–अपवारणे । स्वरितेदित्येके । शता । **जुषितवान्** । १८३४ जुष–परितर्कणे । ऊहो हिंसा वा तत् । परितर्पणे–इत्येके । अस्मात् क्तवतुः । अस्येदित्वाभावादिट् ॥५०॥

**कूटाद्येषु हतेषु धावितमतिष्वन्येषु धावत्सु च**
**स्वैरं तत्र जनान्प्रयन्विगलितश्रन्थान्कचान्ग्रन्थयन् ।**
**आपन्खेदमरिं तनञ्जनहितं चिक्रीड गोपैर्हरि-**
**स्तूर्यौत्थो विचनन्ध्वनिर्दिवमगाद्दूतो यथा वादितः ॥ ५१ ॥**

**कूटाद्येष्विति कूटाद्येषु** कूटस्तन्नामा मल्ल आद्यो प्रथमो येषु तेषु **हतेषु** व्यापादितेषु **अन्येषु** तदपरेषु **धावितमतिषु** भिया धाविता कम्पिता मतिः (मन्यतेऽनयेति व्युत्पत्तियोगात् अत्र) मनः येषां तेषु सत्सु केषुचित् **धावत्सु** द्रुतं रङ्गतोऽपगच्छत्सु **च** सत्सु । **हरिः** श्रीकृष्णः तत्र रणरङ्गे स्थितान् **जनान्** पुरुषान् **प्रयन्** तर्पयन् **विगलितश्रन्थान्** विगलितः उन्मुक्तः श्रन्थः सन्दर्भः बन्धनमित्यर्थः येषां तान् **कचान्** केशान् " कचः केशः शिरोरुहः " इत्यमरः । **ग्रन्थयन्** सन्दर्भयन् बध्नन् । **अरिं** शत्रुं **खेदं** क्लेशम् **आपन्** लम्भयन् **जनहितं** भक्तलोकानां वृद्धिं **तनन्** श्रद्दधान इच्छंश्च सन् **गोपैः** बल्लवैः सह **चिक्रीड** विजहार । **तूर्यौत्थः**

(टि० ) १ अत्र १८२२ 'दृभ–सन्दर्भे' । इति त्यक्तः । २ अत्र च १८३० अर्ह–पूजाया' मित्यपि ॥

वाद्येभ्य उत्थितः **ध्वनिः** नादश्च **विचनन्** उपसंहतः दीर्घीभवन् सन् **वादितः** सन्देशेन प्रेरितः **दूतो यथा** सन्देशहर इव **दिवं** सुरलोकं " सुरलोको द्यौदिवौ द्वे " इत्यमरः । देवान्प्रति शुभं कथयितुम् **अगात्** अगच्छत् । उक्तं छन्दः ॥ ५१ ॥

**धावितेति** । १८३५ धूञ्–कम्पने । कर्माविवक्षया अकर्मकत्वात् कर्तरि क्तः । **प्रयन्** १८३६ प्रीञ्–तर्पणे । शता । **अन्थेति** । १८३७ अन्थ–१८३८ ग्रन्थ–संदर्भे । आद्यो हिंसायां च द्रुमे । अन्थेर्घञ् । **ग्रन्थयन्** । ग्रन्थेः शता । **आपन्** । **तनन्** । **विचनन्** । रिच्यादिवदनिट् । १८३९ आप्लृ–लम्भने । १८४० तनु–श्रद्धोपकरणयोः । उपहतौ श्रद्धोपघाते च द्रुमे । " उपसर्गाच्च दैर्घ्ये ' । १८४१ चन–श्रद्धोपहननयोरिति चैके । त्रिभ्यः शता । **वादितः** । १८४२ वद–संदेशवचने । स्वरितेत् । वचने च द्रुमे । अस्मात् कर्तरि क्तः ॥ ५१ ॥

**वचन्तो मानन्तो हरिविभवमानन्दमखिला**
**बभूवुर्गर्हन्तो मनसि नृपतिं मार्गितखलम् ।**
**स्त्रियश्चोत्कण्ठन्त्यो ददृशुरजितं मृष्टतनवः**
**नृपस्त्वेतन्नामर्षत रिपुजनाधर्षितबलः ॥ ५२ ॥**

**वचन्त** इति **अखिलाः** अशेषा जना **हरिविभवं** श्रीकृष्णप्रभावं **वचन्तः** परितो भाषमाणाः **मानन्तः** बहु पूजयन्तः स्तुवन्तः **मार्गितखलं** मार्गिता अन्विष्टा खला दुष्टजना येन तं **नृपतिं** राजानं कंसं **मनसि** चित्ते नतु उच्चैः भयात् **गर्हन्तः** निन्दन्तश्च सन्तः **आनन्दं** सुखं **बभूवुः** प्रापुः । **मृष्टतनवः** मृष्टाः शुचीकृताः अलंकृताश्च तनवः शरीराणि याभिः ताः **स्त्रियः** योषितः **च उत्कण्ठन्त्यः** रागेण विवशीभूय सङ्गमिच्छन्त्यः **अजितम्** केनाप्यनभिभूतं श्रीकृष्णं **ददृशुः** दृष्टवत्यः । **तु** पुनः **रिपुजनाधर्षितबलः** रिपुजनेन शत्रुसमूहेन अधर्षितम् अप्रसोढं बलं पराक्रमो यस्य सः **नृपः** कंसो राजा **एतत्** अखिललोकाऽऽनन्दादिभवनं **न अमर्षत** तितिक्षां न चकार । **शिखरिणी** छन्दः । " रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी " इति लक्षणात् ॥ ५२ ॥

**वचन्तः** । १८४३ वच-परिभाषणे अनिट् । **मानन्तः** । १८४४ मान-पूजायाम् । द्वयोः शता । **बभूवुः** । १८४५ 'भू-प्राप्तौ आत्मनेपदी' भूधातुः प्राप्त्यर्थे वा

णिज्वान् । णिजणिचोरात्मनेपदी च स्यात् । अणिच्यात्मनेपदं नेत्येके । तस्माल्लिट् । **गर्हन्तः** । १८४६ गर्ह-निन्दने । शता । **मार्गितेति** । १८४७ मार्ग-अन्वेषणे । कर्मणि क्तः । **उत्कण्ठन्त्यः** । १८४८ कठि-शोके । प्रायेणोत्पूर्व उत्कण्ठार्थः । अस्माच्छतरि ङीप् । **मृष्टेति** १८४९ मृज-शौचालंकारयोः । कर्मणि क्तः । **अमर्षत** । १८५० मृष-तितिक्षायाम् । स्वरितेत् । लङ् । **अधर्षितेति** । १८५१ धृष-प्रसहने । कर्मणि क्तः 'वर्ष-बन्धने इति केचिदाधृषीयेषु इच्छन्ति । आधृषीया गताः ॥ ५२ ॥

> क्रुद्धेनाकथि चाप्यवर्यगणने शठ्येन भोः श्वठ्यतां
> मन्त्री तौ प्रपटय्य पाशवटनैः पापौ विरह्यौ पुरात् ।
> के मूढाः स्तनयित्नुनिर्गदनवत्तूर्यध्वनिं कुर्वते
> मल्लौघोऽपतयद्रिपुं न तु पताञ्चक्रे स पातोचितः ॥ ५३ ॥

**क्रुद्धेनेति** **अवर्यगणने** अन्यायानाम् अनीप्सितव्यानां गणने संख्यायां **शठ्येन** सम्यक् ( प्रथमम् ) अवभाष्येण तेन कंसेन **क्रुद्धेन** जनवचः श्रुत्वा सञ्जात कोपेन सता **अकथि** उक्तम् **चापि** न केवलममर्षितमेवेत्यर्थः । यत् **भोः** जनाः **पापौ** दुष्टौ **तौ** रामकृष्णौ **पाशवटनैः** पाशानां कुटिलरज्जूनां वटनैः वेष्टनैः बन्धनैः **प्रपटय्य** संग्रथ्य बद्ध्वा **पुरात्** मधुरानगरीतः **विरह्यौ** त्याज्यौ बहिष्कार्यौ इति यावत् । इति **मन्त्री** अमात्यः **श्वठ्यतां** सम्यक् अवभाष्यताम् उच्यताम् । **के मूढाः** मूर्खाः **स्तनयित्नुनिर्गदनवत्** स्तनयित्नुः मेघः तच्छब्दवत् "अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः" इत्यमरः । **तूर्यध्वनिं** वाद्यशब्दं **कुर्वते** विदधति । **सः मल्लौघः** योद्धृसमूह एव **अपतयत्** पतितो मृतः । **तु** पुनः **पातोचितः** वधयोग्यो **रिपुः** शत्रुः कृष्णो **न पताञ्चक्रे** न पतितो मृतः(१बहुलत्वेन लिट् प्रयुक्तः ॥ **शार्दूलविक्रीडितं** छन्दः ॥ ५३ ॥

इतः परमदन्ताः । **अकथि** । १८५२ कथ-वाक्यप्रबन्धे । णिजन्तात् कर्मणि चिण् । अतो लोपस्य स्थानिवत्त्वान्न वृद्धिः । **अवर्येति** । १८५३ वर-ईप्सायाम् । यत् **गणने** । १८५४ गण-सख्याने । तच्च संख्याविज्ञानम् । भागशोऽवस्थानं च । अस्माल्ल्युट् । **शठ्येन** १८५५ शठ-१८५६ श्वठ-सम्यगवभाषणे । शठेरचो यत् । **श्वठ्य-**

( टि० ) १ पश–इति स० को० ।

**ताम्** । श्वठेः कर्मणि लोट् । **प्रपटय्य** । १८५७ पट-१८५८ वट-ग्रन्थे । 'वट-वेष्टने' इत्येके । पटेर्ल्यप् । 'ल्यपि लघुपूर्वात्' (६।४।५६) इत्ययादेशः । वटनैः वटेर्ल्युट् । **विरह्यौ** । १८५९ रह-त्यागे । यत् । **स्तनयित्नु** इति । १८६० स्तन-१८६१ गदी-देवशब्दे । ईकारो द्विवचनकृतः । न लोादत्वार्थः 'स्तनिहृषिपुषिगमिमादिभ्यो णेरित्नुच्' इति स्तनेरित्नुचि 'अयामन्ता–' (६।४।५५) इत्ययादेशः । **निगदनैः** गदेर्ल्युट् । **अपतयत्** । १८६२ पत-गतौ वा । अयं गतौ वा णिज्वान् । तत्र णिचि लङ् । **पतांचक्रे** । णिजभावेऽप्यदन्तत्वेन अनेकाच्त्वादाम्प्रत्ययः । **पातति** । पत-गतौ वेत्यदन्तत्व विकल्प्यत इति मते अनदन्तत्वे घञ् । 'पत-ऐश्वर्यगत्योः' इति द्रुमे ॥५३॥

**झटिति पषयन्त्वस्माद्गोपाः स्वरापयताधिकं**
**रचयत मुहुर्दण्डाघातं वनं कलयन्त्वमी ।**
**चहकमहितं नन्दं बद्ध्वाऽस्य सारयतो धनं**
**हरत कृपकस्यारेस्तातं हृत श्रथयत्तमम् ॥ ५४ ॥**

**झटितीति गोपाः** वल्लवाः **अस्मात्** पुरात् **झटिति** शीघ्रं **पषयन्तु** गच्छन्तु । **अधिकम्** अतितराम् एतान् **स्वरापयत** आक्षिपत भर्संयत । **मुहुः** वारं वारं **दण्डाघातं** लगुडैस्ताडनं **रचयत** कुरुत । **अमी** नन्दादयः गोपाः **वनम्** अरण्यं **कलयन्तु** गच्छन्तु । **चहकमहितं** चहकैः परिकाल्कतैः शाठ्यवाद्भिः महितं पूजितं **नन्दं** गोपस्वामिनं **बध्वा** सपाश्य **सारयतः** दुर्बलीभवतः **अस्य** नन्दस्य **धनम्** अर्थं **हरत** गृह्णीत । **कृपकस्य** दुर्बलस्य **अरेः** शत्रोः कृष्णस्य **श्रथयत्तमम्** अतिदुर्बलीभवन्तं **तातं** पितरं वसुदेवं **हृत** मारयत अत्र **हरिणी** छन्दः । "रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" इति लक्षणात्॥ ५४॥

**पषयन्त्वित** । १८६३ पष–अनुपसर्गात् । अयमनुपसर्गो गतावदन्तः । बन्ध-बाधास्पर्शेषु च द्रुमे । अस्मात् प्राप्तकाले लोट् । **स्वरापयत** । १८६४ स्वर-आक्षेपे 'कथादपातिस्पायो (?) णौ पुग्लुक्त्वम्' इति शाकटायनसूत्रेण पुकि वृद्धिः । प्राग्वल्लोट् **रचयत** । **कलयन्तु** । १८६५ रच-प्रतियत्ने । कृपार्थे च द्रुमे । १८६६

(टि०) १ स्तनश्च गादश्चेति द्वन्द्वे द्विवचने च पूर्वसवर्णदीर्घजातः इति भावः ॥

कल-गतौ संख्याने च द्वयोर्लोट् । चहकेति । १८६७ चह-परिकल्कने । ण्वुल् । **महितम्** । १८६८ मह-पूजायाम् । कर्मणि क्तः । **सारयतः** । १८६९ सार-१८७० कृप-१८७१ श्रथ-दौर्बल्ये । दीर्घवतां पाठो ऽग्लोपित्वार्थः । सारेः शता । **कृपकस्य** कृपेर्ण्वुल् । **श्रथयद्** इति । श्रथेः शता ॥ ५४ ॥

**यो मत्क्षयं स्पृहयते मयि भामितेऽपि**
**संसूचयत्यरिगुणांश्च मदन्नखेटि ।**
**तं क्षोटितौजसमगोमितभूमिवन्धं ( द्धं )**
**शत्रौ कुमारयति मारयतोग्रसेनम् ॥ ५५ ॥**

य इति **मदन्नखेटी** मदन्नं मद्दत्तम् अन्नम् अशनं खेटयति भक्षयतीति तादृशः **य** उग्रसेनः **मत्क्षयं** ममैव नाशं **स्पृहयते** इप्सति **मयि भामिते** क्रुद्धेऽपि सति **अरिगुणान्** कृष्णस्य गुणान् शौर्यदयादाक्षिण्यादीन् **संसूचयति** पिशुनयति बोधयति **च** । कृतघ्नत्वात् **क्षोटितौजसं** क्षीणबलम् **अगोमितभूमिबद्धम्** अगोमितायाम् अनुपलिप्तायां भूम्यां क्षितौ बद्धं संयतं **तम्** **उग्रसेनं** तदाख्यं पितृव्यं **शत्रौ** कृष्णे **कुमारयति** क्रीडति ( अनादरे सप्तमी ) अधुनैव क्रीडन्तं शत्रुमनादृत्येत्यर्थः **मारयत** प्राणैर्वियोजयत । यमकमलङ्कारः । **वसन्ततिलकावृत्तं** ॥ ५५ ॥

**स्पृहयत** इति । १८७२ स्पृह-ईप्सायाम् । लट् । **भामितेति** । १८७३ भाम-क्रोधे । कर्तरि क्तः । **संसूचयति** । १८७४ सूच-पैशुन्ये । लट् । **अन्नखेटी** १८७५ खेट-भक्षणे । खेड-इत्येके । खोट-इत्यपरे । खेटेर्णिनिः । अयं क्षेपे द्रमे । **क्षोटितेति** । १८७६ क्षोट-क्षेपे । कर्तरि क्तः । **अगोमितेति** । १८७७ गोम-उपलेपने । कर्मणि क्तः । **कुमारयतीति** । १८७८ कुमार-क्रीडायाम् । शता ॥ ५५ ॥

**शील्यं न साममभीष्विह वेलयामि**
**पल्यूल्यतां यदुजनो मम वातकोऽपि ।**
**छिद्रं अपयितुमेव तु वासयन्ते**
**ये ते निवासितधियो ह्यसुभिर्विभाज्याः ॥ ५६ ॥**

**शील्यमिति** अहम् **अमीषु** यदुषु **इह** इदानीं **शील्यम्** उपधार्यम् अभ्यसनीयं **सामनं** सान्त्वप्रयोगं **न** **वेलयामि** प्राप्तकालतया नोपादिशामि । **मम** **वातकः** सुखकरः सेवको वा **अपि** **यदुजनः** यदुकुलोत्पन्नः लोकः **पल्यूल्यतां**



( टि० ) १ क्षेपे इति सि० कौ०

लूयतां हन्यतां । तु पुनः ये जनाः **छिद्रम्** अपराधं **गवेषयितुम्** मार्गयितुम् अन्वेष्टुम् **एव वासयन्ते** उपसेवन्ते । **हि** यतः **निवासितधियः** आच्छादिताभिप्रायाः अतः **ते असुभिः** प्राणैः **विभाज्याः** पृथक्कर्तव्याः वध्याः । उक्तं छन्दः ॥ ५६ ॥

**शील्यमिति** । १८७९ शील-उपधारणे । अभ्यासस्तत् । 'अचो यत्' (३।१।९७) । **सामनम्** । १८८० साम-सान्त्वप्रयोगे । ल्युट् । **वेलयामि** १८८१ वेल-कालोपदेशे । लट् । कालेत्यपि धातुरित्येके । **पल्यूल्यताम्** । १८८२ पल्यूल-लवनशोधनयोः । कर्मणि लोट् । **वातकः** । १८८३ वात-सुखसेवनयोः । गतिसुखेत्येके । ण्वुल् । **गवेषयितुम्** । १८८४ गवेष-मार्गणे । तुमुन् । **वासयन्ते** । १८८५ वास-उपसेवायाम् । लट् । **निवासितेति** । १८८६ निवास-आच्छादने । कर्मणि क्तः । **विभाज्याः** । १८८७ भाज-पृथक्कर्मणि । यत् ॥ ५६ ॥

**ते मामद्य सभाजयन्ति भुवने यैरून्यते सत्पथो**
**न क्वापि ध्वनयन्तु वेदमुखरास्ते कूटनीया द्विजाः ।**
**इत्यूचे स हि केतयन्परिजनान्सेनापतीन्ग्रामय-**
**न्स्वामात्यान्कुणयन्भटांश्च गुणयन्नृणां मुदं स्तेनयन् ॥ ५७ ॥**

**ते** इति **भुवने** जगति **यैः** जनैः **सत्पथः** सन्मार्गः **ऊन्यते** परिहीयते त्यज्यते **अद्य** अस्मिन्दिने **ते** जनाः **मां सभाजयन्ति** प्रीणयन्ति पश्यन्ति सेवन्ते च । **वेदमुखराः** वेदोच्चारणेन शब्दायमानाः **द्विजाः** ब्राह्मणाः **क्वापि** गुप्तस्थानेपि **न ध्वनयन्तु** शब्दं कुर्वन्तु ये ध्वनयन्तु ते च **कूटनीयाः** दाहनीयाः परितापनीयाः । **स** कंसो **हि परिजनान्** स्वभृत्यादिवर्गं **केतयन्** आमन्त्रयन् अयमेवोत्तरत्रयेऽर्थः **सेनापतीन्** अनीकनायकान् **ग्रामयन्** **स्वामात्यान्** निजमन्त्रिणः **कुणयन्** । **भटान्** योद्धॄन् **च गुणयन् नृणां** जनानां **मुदं** हर्षं **स्तेनयन्** चोरयंश्च सन् **इति** पूर्वोक्तम् **ऊचे** कथितवान् । **शार्दूलविक्रीडितं** छन्दः ॥ ५७ ॥

**सभाजयन्तीति** १८८८ सभाज-प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्येके । लट् । **ऊन्यते** । १८८९ ऊन-परिहाणे । कर्मणि लट् । **ध्वनयन्तु** । १८९० ध्वन-शब्दे । लोट् । **कूटनीयाः** । १८९१-कूट-परितापे । परिदाहे इति केचित् । कूड-दाहे इति हरदत्तः । कूटेरनीयर् । **केतयन्** । **ग्रामयन्** ।

**कुणयन्** । **गुणयन्** । इति । १८९२ केतै-१८९३ ग्राम-१८९४ कुण-१८९५ गुण-चामन्त्रणे । चकारात्-कूटेति च । केतादेः शता । १८९६ केत-श्रावणे निमन्त्रणे च । श्रावणं समयोद्घोषणम् । निमन्त्रणमाज्ञा । १८९७ कुण-संकोचने च । भासने च द्रुमे । **स्तेनयन्** १८९८ स्तेन-चौर्ये । शता ॥ ५७ ॥

**तच्चाकर्ण्य सरोषमुत्पदयते स्मोत्तुङ्गमञ्चं हरिः**
**प्रोत्तिष्ठन्नसिचर्मणी गृहितवान्कंसोऽपि मृग्योऽसताम् ।**
**द्रष्टॄणां कुहकोऽथ शूरयितृभिः स्तुत्योऽसिना वीरयां-**
**चक्रे स्थूलितभीतिरर्थितवधः सत्राशनैर्गर्वितैः ॥ ५८ ॥**

**तच्चेति** **हरिः** भगवान् श्रीकृष्णश्च **तत्** कंसवचः **आकर्ण्य** श्रुत्वा **सरोषं** सक्रोधम् **उत्तुङ्गमञ्चं** कंसाधिष्ठितां महतीं काष्ठादिखट्वाम् **उत्पदयते स्म** उदगच्छत् । **असतां** दुराचाराणां **मृग्यः** अन्वेष्यः **कंसोऽपि प्रोत्तिष्ठन्** मञ्चादुत्थानं कुर्वन् **असिचर्मणी** खड्गं तद्रक्षार्थं गण्डकचर्मचन्द्रिकां च **गृहितवान्** हस्तेऽवलम्बितवान् । **द्रष्टॄणां** दर्शकानां **कुहकः** विस्मापकः **शूरयितृभिः** विक्रम कृद्भिः **स्तुत्यः** प्रशस्यः **स्थूलितभीतिः** परिवृंहित(वृद्ध)भयः **गर्वितैः** अचिरभाविकंसनाशसम्भावनया सञ्जाताभिमानैः **सत्राशनैः** सत्रस्य यज्ञस्य अशनैः भोजिभिः देवैः **अर्थितवधः** अर्थितो याचितो वधो मरणं यस्य सः **असिना** खड्गेन **वीरयाञ्चक्रे** विक्रमं चकार च । वृत्तमुक्तम् ॥ ५८ ॥

आ गर्वादात्मनेपदिनः । **उत्पदयते** । १८९९ पद-गतौ । लट् । गृहितवान् । १९०० गृह-ग्रहणे । क्तवतुः । **मृग्यः** । १९०१ मृग-अन्वेषणे । यत् । **कुहकः** । १९०२ कुह-विस्मापने । ण्वुल् । **शूरयितृभिः** । १९०३ शूर- १९०४ वीर-विक्रान्तौ । शूरेस्तृच् । **वीरयांचक्रे** । वीरेर्लिट् । **स्थूलितेति** । १९०५ स्थूल-परिवृंहणे । कर्तरि क्तः । **अर्थितेति** । १९०६ अर्थ-याच्ञायाम् । कर्मणि क्तः । **सत्रेति** । १९०७ सत्र-सन्तानक्रियायाम् । संततं दीर्घकालतया क्रियत इति सत्रः । घञ् । **गर्वितैः** । १९०८ गर्व-माने । कर्तरि क्तः । आगर्वीया गताः ॥ ५८ ॥

( टि० ) १ संकेत इति क्वचित्

आसूत्रयत्स हि तथाङ्गमसिप्रचारै-
मोमूत्रितारिरतिरूक्षणया रणेषु ।
दुष्पारदुश्चरिततीरणकृद्यथेशो
नो चक्षमे पुटयितुं तमकत्रितोष्मा ॥ ५६ ॥

आसूत्रयदिति अतिरूक्षणया अतिपरुषत्वेन रणेषु युद्धेषु मोमूत्रितारिः पुनः पुनः भृशं वा भयेन प्रस्रावितशत्रुवर्गः स कंसो हि अङ्गं गात्रं असिप्रचारैः खड्गभ्रामणैः तथा तेन प्रकारेण आसूत्रयत् वेष्टितवान् । यथा येन प्रकारेण दुष्पारदुश्चरिततीरणकृत् दुष्पारं समाप्तुं दुःशकं यत् दुश्चरितं दुरितं तस्य अब्धेरिव तीरणकृत् पारोत्तारकः अकत्रितोष्मा अकत्रितोऽशिथिलीभूत ऊष्मा क्रोधवन्हिसंतापो यस्य स ईशः श्रीकृष्णः पुटयितुं संसर्गं प्राप्तुं स्प्रष्टुमपि नो चक्षमे शशाक । वसन्ततिलकम् ॥ ५९ ॥

आसूत्रयदिति । १६०६ सूत्र-वेष्टने । लङ् । मोमूत्रितेति । १६१० मूत्र-प्रस्रवणे । अस्मात् 'सूचिमूत्रि' इति यङन्तात् कर्मणि क्तः । रूक्षणया । १६११ रूक्ष-पारुष्ये । युच् । निष्पारेति । १६१२ पार-१६१३ तीर-कर्म समाप्तौ । पारेर्घञ् । तीरणेति । तीरेर्ल्युट् । पुटयितुम् । १६१४ पुट-संसर्गे । तुमुन् । अकत्रितेति । १६१६ कत्र-शैथिल्ये । कर्तरि क्तः ॥ ५६ ॥

त्वां खञ्जयामि खलयन्त्वमुना जना मां
त्वं विष्टपं गरुडयन्हरिरेव चेत्किम् ।
लोकोऽद्य घातयतु कृष्णमिति प्रलापी
तं [सं] पतन्नपि न खड्गयितुं स लेभे ॥ ६० ॥

त्वामिति अहं त्वां खञ्जयामि खञ्जं करोमि ( खञ्जो गतिविकलः ) जनाः लोका अमुना त्वद्वधेन यद्यपि मां खलयन्तु खलम् आचक्षतां दुर्जनं कथयन्तु । नन्वहं विष्णुरस्मीत्याह त्वमिति चेत् यदि त्वं विष्टपं (जातावेकवचनं) सर्वान् लोकान् गरुडयन् गरुडेनातिक्रामन् (गरुडो विष्णुवाहनः) हरिः विष्णुः एव साक्षात् असि । तथापि मे किं न किमपि शङ्कादिकमित्यर्थः । अद्य लोकः जनः कृष्णं वासुदेवं घातयतु कृष्णस्य वधं कथयतु इति एवं प्रलापी अनर्थकवचोभाषी

(टि०) १ निष्पारेत्यपि पाठः ( - १५) 'धक-दर्शने' इत्यके नायमुदाहृतः ।

'प्रलापोऽनर्थकं वचः' इत्यमरः । **स** कंसः **तं** श्रीकृष्णं **संपतन्** हन्तुम् उत्पतन् **अपि खड्गयितुं** खड्गेन छेत्तुं **न लेभे** प्राप्तवान् ( विभावना ) वृत्तमुक्तम् ॥ ६० ॥

**खञ्जयामी**ति । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' । एतदेव । विवृणोति। तत्करोति तदाचष्टे । खञ्जयामि करोत्यर्थे णिचि लट् । **खलयन्तु** । आख्यानार्थे णिचि लोट् । **गरुडयन्नि**ति । 'तेनातिक्रमति' अस्मिन्नर्थे णिचि शता । 'धातुरूपं च' । कृदन्ताणिणचि धातुरूपं भजन्ते । अनेन आख्यानात्कृतस्तदाचष्टे' इति णिच् 'कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्'इत्येतदुक्तम् । तेन कृष्णस्य कर्मत्वम्' वधभावनिवृत्या हनेर्णिजपत्वं च । तस्माल्लोट् । **घातयतु** । **खड्गयितुमि**ति । 'कर्तृकरणाद्धात्वर्थे' । कर्तुर्यानि करणानि परश्वधादीनि तेभ्यस्तद्धात्वर्थे णिच् स्यात् इत्यर्थः इति खड्गशब्दाणिणचि तुमन् ६०

**लोके वल्कयतीह चित्रितमहामञ्चे स्वयं चित्रय-**
**न्दोष्णा खड्गमुदस्य तस्य वटयन्हस्तादगृह्णादमुम् ।**
**धाम्नोच्चैर्लजयन्विमिश्रितजने रङ्गे निपात्याथ तं**
**द्राक्संग्रामयमाणशस्त्रजकिणस्तोम्ये पपातोरसि ॥ ६१ ॥**

**लोके** इति श्रीकृष्णः **स्वयम्** आत्मना **चित्रितमहामञ्चे** चित्रिते उत्कृत्तलेखे महामञ्चे वृहत्स्वर्णादिखट्वायाम् उत्तरयेति शेषः **चित्रयन्** हस्तलाघवादिनाऽऽश्चर्यं कुर्वन् **धाम्ना** त्विषा प्रभावेण वा "गृहदेहात्विट्प्रभावा धामानि" इत्यमरः । **उच्चैः** हर्षोत्कृष्टतया **लजयन्** प्रकाशमानः सन् । **इह** युद्धरङ्गे **लोके** दर्शकजने **वल्कयति** पश्यति सति । **उच्चैः उदस्य** समाहृत्य **हस्तात्** कंसकरात् **खड्गं** करवालं **दोष्णा** स्वबाहुना **वटयन्** विभाजयन् पृथक्कुर्वन् **अमुं** कंसम् **अगृह्णात्** केशेषु गृहीतवान् । **अथ** अनन्तरं **तं** कंसं **विमिश्रितजने** विमिश्रिताः प्राप्तसंपर्का जना यस्मिन् तस्मिन् **रङ्गे** युद्धशालायां **निपात्य** अवस्रस्य **द्राक्** झटिति **संग्रामयमाणशस्त्रजकिणस्तोम्ये** संग्रामयमाणानां युद्धकर्तॄणां शस्त्रजकिणैः आयुधजन्यचिन्हैः स्तोम्ये श्लाघ्ये **उरसि** कंसवक्षसि **पपात** तदुपरि निषण्णोभूत् । **शार्दूलविक्रीडितं** छन्दः ॥ ६१ ॥

**वल्कयतीति** । १६१७ वल्क[1]-दर्शने । शता । **चित्रितेति** १६१८ चित्र-चित्रीकरणे । आलेख्यकरणं तत् । कर्मणि क्तः । **चित्रयन्** । 'कदाचिद्दर्शने' ।



(टि०) १ वल्क इति सि० कौ० ।

अद्भुतदर्शने चार्थे चित्रधातोर्णिच् (इत्यर्थः) । क्षणिकदर्शने। अस्माच्छता । उद्रंस्य । १६१९ अंस-समाघाते । विभाजने च द्रुमे । ल्यप् । वटयन् । १६२० वट-विभाजने वर्तीत्येके । वटेः शता । लजयन् । १६२१ लज-प्रकाशने । जर्ज्जीत्येके । वणिटलञ्ज्योरिदित्वेऽप्यत्र पाठाददन्तकार्ये पुगादि स्यादेवेति माधवः । मिश्रितेति । १६२२ मिश्र-संपर्के । कर्तरि क्तः । संग्रामयमाणेति । १६२३ संग्राम-युद्धे । अयमात्मनेपदी । स्तोम्ये । १६२४ स्तोम-श्लाघायाम् । यत् ॥ ६१ ॥

यो ह्यच्छिद्रित एव वीर्यशतकृत्तस्मिन्पतत्यन्धय-
न्पिष्टाङ्गः स ममार दण्डितखलस्येशस्य पादाङ्कितः ।
कृष्णोऽप्यश्रुजलाङ्कितेऽतिसुखयत्यामुच्य पुष्पोत्करं
देवौघे हतदुःखने रसयति व्याकर्षदेनं क्षितौ ॥ ६२ ॥

योह्यीति यः श्रीकृष्णः अच्छिद्रितः अभेदितकर्ण एव अतिशिशुरेव वीर्यशतकृत् पूतनावधादिना शतधा पराक्रमं प्रकासितवान् । तस्मिन् श्रीकृष्णे पतति आत्मदेहोपरि निषीदति सति पिष्टाङ्गः त्रुटितदेहः दण्डितखलस्य दण्डिताः निपातितदण्डाः खलाः दुष्टजना येन तस्य ईशस्य श्रीकृष्णस्य पादाङ्कितः चरणाभ्यां लक्षितः सः कंसः अन्धयन् उपहतदृष्टिः मोहं प्राप्नुवन् सन् ममार प्राणैर्वियुक्तवान् । कृष्णोऽपि अश्रुजलाङ्किते पूर्वं दुःखोद्भूतनेत्रजलेन अङ्किते चिन्हिते हतदुःखने दूरीकृतदुःखानुभवे देवौघे सुरजने पुष्पोत्करं सुमनःसमूहम् आमुच्य अभिवृष्य अतिसुखयति भृशं सुखमनुभवति रसयति भगवद्व्यापारमास्वादयति च सति क्षितौ भूमौ एनं कंसं व्याकर्षत् सुहृद्दुर्हृत्सुखदुःखार्थम् विविधम् आकृष्टवान् । उक्तं वृत्तम् ॥ ६२ ॥

अच्छिद्रितेति । १६२५ छिद्र-कर्णभेदने । करणेति पृथग्धातुरित्येके । ( कर्मणि क्तः । ) अन्धयन् । १६२६ अन्ध-दृष्ट्युपघाते । शता । दण्डितेति । १६२७ दण्ड-दण्डनिपातने । कर्मणि क्तः । अङ्कित इति । अङ्कितेति । १६२८ अङ्क-पदे लक्षणे च । १६२९ अङ्ग-च । द्वयोः कर्मणि क्तः । अतिसुखयति । १६३० सुख-१६३१ दुःख-तत्क्रियायाम् । तत्क्रिया तदनुभवः । सुखेः शता । दुःखनेति । दुःखेर्ल्युट् । रसयति । १६३२ रस-आस्वादनस्नेहनयोः । शता ॥ ६२ ॥ 

नित्यं व्ययापितमलो हृदि रूपयंस्तं
प्रच्छेदितप्रकृतिरच्छदितस्वरूपम् ।
ब्रह्माविशत्सुकृतलाभित एष कंस-
स्तत्पादसंव्रूणितमूर्तिरवर्ण्यभाग्यः ॥ ६३ ॥

नित्यमिति व्ययापितमलः व्ययापितं समुत्सर्गं प्रापितं मलं येन सः सुकृतलाभितः श्रीहरिदर्शनजातेन सुकृतेन प्रेरितः यतः अच्छदितस्वरूपम् अनावृतानन्दात्मकं तं हरिं नित्यं सदा हृदि मनसि रूपयन् पश्यन् ध्यायन् । तेनैव प्रच्छेदितप्रकृति प्रच्छेदिता द्वैधीकृता नाशिता प्रकृतिः मायाजनितवासनालेशो येन सः । तदपि तत्पादसंव्रूणितमूर्तिः श्रीकृष्णचरणाभ्यां संव्रूणिता संचूर्णितगात्रा मूर्तिः तनुर्यस्य सः "स्त्रियां मूर्तिस्तनुस्तनूः" इत्यमरः ! अत एव अवर्ण्यभाग्यः अनिरूप्यदैवः एषः कंसो भूपः ब्रह्म अपेतमायं नित्यशुद्धबुद्धानन्दस्वभावं परमात्मानम् अविशत् तदाकाराकारितवृत्तिरभूत् ॥ ६३ ॥

व्ययापितेति । १६३३ व्यय-वित्तसमुत्सर्गे । कर्मणि क्तः । रूपयन् १६३४ रूप-रूपक्रियायाम् । सा च रूपस्य करणं दर्शनं वा । हेतौ शता । प्रच्छेदितेति । १६३५ छेद-द्वैधीकरणे । अच्छदितेति । १६३६ छद-अपवारणे इत्यप्येके। लाभितेति । १६३७ लाभ-प्रेरणे । संव्रूणितेति । १६३८ व्रूण-गात्रविचूर्णने । चतुर्णां कर्मणि क्तः । अवर्ण्येति । १६३९ वर्ण-वर्णक्रियाविस्तारगुणवचनेषु । यत् ६३

प्रपर्णितदिशं रुचा क्षपितभूभृतोऽस्यानुजाः
सदोनिवसितं हरिं ययुरतुत्थिताङ्गाः क्रुधा ।
अमूनधिकमोजयन्नखिलरङ्गमन्दोलय-
न्बलःस्फुटितदोर्बलान्समवधीरयञ्जाङ्गिवान् ॥ ६४ ॥

प्रपर्णितदिशमिति क्षपितभूभृतः क्षपिताः प्रेरिता हता भूभृतोऽन्ये राजानो यैस्ते । क्रुधा कोपेन अतुत्थिताङ्गाः अतुत्थितानि अनावृतानि वर्मभ्योऽपि निर्गतानि अङ्गानि अवयवा येषां ते अस्य कंसस्य अनुजाः कनिष्ठा भ्रातरः वङ्कन्यग्रोधादयः रुचा प्रभया "रुचः प्रभा रुग्रुचिस्त्विड्भाः" इत्यमरः । प्रपर्णितदिशं प्रपर्णिता हरितीकृता दिशो येन तं सदोनिवसितं सदसि सभायां निवसितं कृत

निवासं **हरिं** श्रीकृष्णं **ययुः** योद्धुं जग्मुः । **बलः** बलभद्रः "संकर्षणः सीरपाणिः कालिन्दीभेदनो बलः" इत्यमरः । **अधिकं** सर्वोत्कृष्टं यथा तथा **ओजयन्** भुजबलं प्रकाशयन् **अखिलरङ्गं** सर्वान् युद्धशालास्थलोकान् **अन्दोलयन्** क्षोभयन् विगतधैर्यान् विदधत् सन् **अमून्** कंसभ्रातॄन् **समवधीरयन्** अनादरं कुर्वन् सन् ततः **स्फुटितदोर्बलान्** विशीर्णबाहुबलान् सतः **जघ्निवान्** व्यापादयाञ्चक्रे । अत्र पृथ्वी छन्दः । "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् ॥ ६४ ॥

**अपर्णितेति** । 'बहुलमेतन्निदर्शनम्' एतच्चुरादावदन्तधातुप्रदर्शने बहुलं ज्ञेयम् । तेनैतान्यपि सिद्धानीत्याह । १६४० पर्ण–हरितभावे । अस्य हेतुमण्णिजन्तात् कर्मणि क्तः । **क्षपितेति** । १६४२ क्षप–प्रेरणे । नाशनार्थोऽप्ययम् । अस्मात्कर्मणि क्तः । **निवासितेति** । १६४३ वस–निवासे । कर्तरि क्तः । **अतुत्थितेति** । १६४४ तुत्थ–आवरणे । कर्मणि क्तः । **ओजयन्** । **अन्दोलयन्** । शता । **स्फुटितेति** । कर्तरि क्तः । **समवधीरयन्** । शता । एते बहुलत्वात्सिद्धाः । ओजेर्बलदीप्तौ । अन्दोलेश्चलनम् । स्फुटेः–प्रकाशनविशरणे । अवधीरेरवज्ञा इति द्रुमे । एवं गन्धयतीति हिंसार्थः । अर्थयतीत्यतङ् तेन साध्य इति हरः । अपानयतीत्यपान इत्यदौ आनयतिर्धात्वन्तरमिति योगशास्त्रे ॥ ६४ ॥

अथ स्ववर्ग्यभूतेन केनचिदतिमानुषकर्मणि कृते गोपकुमाराणां प्रहर्षातिशयं वर्णयति—

**हस्तयमानाः पादयमाना गोपकुमारा नृत्तमकुर्वन् ।**
**श्वेतयमानश्चाश्वयमानास्तत्पुरमायन्केशवपक्ष्याः ॥ ६५ ॥**

**हस्तयमाना** इति **गोपकुमाराः** वल्लवसुता **हस्तयमानाः पादयमानाः** हस्तं पादं च निरस्यन्तः कंसवधहर्षेणेतस्ततो विक्षिपन्तः सन्तः **नृत्तं** नर्तनम् **अकुर्वन्** कृतवन्तः । **च** पुनः **केशवपक्ष्याः** श्रीकृष्णपक्षपातिनः ये कंसाद्बिभ्यतः दिशो गतवन्तस्ते यादवादयः **श्वेतयमानाः** श्वेताश्वेन चरन्तः **अश्वयमानाः** अश्वतरेण गच्छन्तः **तत्पुरं** मथुरानगरम् **आयन्** आगच्छन् ॥ ६५ ॥

(टि०) १ अत्र "१६४१ क्षिप्य–दर्शने नोदाहारि" ॥

**ह्रस्तयमानाः पादयमाना** इति । 'णिङङ्गान्निरसने' इति द्वयोर्णिङ् । **श्वेतयमानाः । अश्वयमाना** इति । 'श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेत-कलोपश्च' इति श्वेताश्वाश्वतरशब्दाभ्यां णिङ् । अश्वशब्दतरशब्दयोर्लोपश्च ॥ ६५ ॥

**खला विपुत्कुक्कुरवद्भयार्ता ययुश्च संभाण्डयमानभृत्याः ।**
**भयेन संचीवरिताः स्थिता ये ते तु प्रविष्टा नगरं प्रहृष्टाः ॥ ६६ ॥**

**खला** इति **विपुत्कुक्कुरवत्** पुच्छं व्यस्यन्ति अधः क्षिपन्तीति विपुच्छः कुक्कुराः श्वान इव "कुक्कुरो मृगदंशकः । शुनको भषकः श्वा स्यात्" इत्यमरः । **भयार्ताः** साध्वसपीडिताः **खलाः** दुर्जनाः कंसपक्ष्याः **सम्भाण्डयमानभृत्याः** भाण्डानि उत्थाप्य पदार्थान् समाचयमानाः भृत्याः कर्मकराः येषां तादृशाः सन्तो **ययुः** पुरात् निर्गतवन्तः । **ये** च सत्पुरुषाः **भयेन** कंसभीत्या **संचीवरिताः** चीवरं वल्कलादि निर्मितमुनिवासः आर्जितवन्तः परिहितवन्तो वा सन्तः **स्थिताः** देशान्तरे आसत । **ते तु** पुनः **प्रहृष्टाः** कंसवधेन संजातहर्षाः सन्तः **नगरं** मधुरापुरीं **प्रविष्टाः** प्रवेशं चक्रुः **उपजातिः** छन्दः ॥ ६६ ॥

विपुदिति । पुच्छादिषु धात्वर्थ इत्येव सिद्धम् । 'पुच्छभाण्डचीवराण्णिङ्' (३ । १ । २० ) इति न वक्तव्यम् 'प्रातिपदिकाद्धात्वर्थे' इत्येव णिच्सिद्धेः बहुलोक्त्यात्मनेपदसिद्धेश्च तत्र 'पुच्छादुदसने पर्यसने व्यसने वा' इति णिङि ततः 'क्विप् च' ( ३ । २ । ७६ ) इति क्विप् । पुतं छादयतीति व्युत्पत्त्या पुच्छशब्दस्य संयोगान्तलोपे तकारशेषाद्विपुदिति स्यात् । **संभाण्डयमाने**ति । 'भाण्डात्समाचयने' इति णिङि शानच् । **संचीवरिते**ति । "चीवरादर्जने परिधाने वा" इति णिङि कर्तरि क्तः ॥ ६६ ॥

**निहत्य कंसं मधुरानगर्यां निवेश्य राजानमथोग्रसेनम् ।**
**संतोष्य नन्दं विजहार कृष्णस्तत्रैव रामेण सहात्मगेहे ॥ ६७ ॥**

उपसंहरति निहत्येति **कृष्णः** हरिः **कंसं** राजानं **निहत्य** एवं प्राणवियोज्य अथ

(टि० ) १ एकीकृत्य वसन्तः इत्यर्थः । समाङ्पूर्वश्चय—गताविति धातुः शानजन्तः ॥

अनन्तरं **मधुरानगर्यां** मथुरेति प्रसिद्धायां पुरि **उग्रसेनं** तदाख्यं प्राथमिकं **राजानं निवेश्य** शासनपदे व्यवस्थाप्य **नन्दं** गोपस्वामिनं **संप्रेष्य** स्वगृहं प्रति विसर्ज्य **तत्र** मथुरापुर्याम् **एव आत्मगेहे** स्वगृहे **रामेण** बलभद्रेण "बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः। रेवतीरमणो रामः" इत्यमरः। **सह विजहार** सुखेन रतेत्यर्थः। **उपजातिः** ॥ ६७ ॥

**आरूढो गरुडं भुजान्ततरलश्रीवन्यमालावलिः**
**क्ष्मामान्दोलितचामरान्तरगतः प्रोद्गीयमानोऽमरैः।**
**चञ्चन्मीनसुपर्णकुण्डलधरो धाराधरश्यामलः**
**काले मे चरमे ममाक्षिपदवीमायातु नारायणः ॥ ६८ ॥**

अन्ते मङ्गलं करोति **आरूढ** इति **भुजान्ततरलश्रीवन्यमालावलिः** भुजान्ते बाहुमध्ये इत्यर्थः तरला इतस्ततो लुठन्ती श्रीयुक्ता वन्यमालावली अरण्यसम्बन्धिपुष्पादिनिर्मितस्रक्पङ्क्तिर्यस्य सः। **क्ष्मामान्दोलितचामरान्तरगतः** क्ष्मा पृथिवी मा लक्ष्मीः "पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही" इति "इन्दिरा लोकमाता मा" इति चामरः। ताभ्याम् आन्दोलितयोः चामरयोः चमरीपुच्छयोः अन्तरे मध्ये गतः। **अमरैः** देवैः **प्रोद्गीयमानः** स्तूयमानः। **चञ्चन्मीनसुपर्णकुण्डलधरः** चञ्चन्मीनसुपर्णयोः प्रकाशमानमत्स्यगरुडमूर्तिकयोः कुण्डलयोः कर्णभूषणयोः धरः **धाराधरश्यामलः** मेघश्यामः **नारायणः** श्रीहरिः **गरुडं** तार्क्ष्यम् **आरूढः** कृतारोहणः सन् **मे** मम **चरमे**ऽन्तिमे **काले** मरणसमये **मम अक्षिपदवीं** नयनगोचरम् **आयातु** प्राप्नोति ॥ शार्दूलविक्रीडितं छन्दः ॥ ६८ ॥

**[1]क्वचित्सुयोज्या धात्वर्थाः क्वाप्ययोज्या उणादिषु।**
**क्वचित्कथंचिद्योज्याः स्युर्वक्ष्यन्ते तत्र तत्र ते ॥ ६९ ॥**
**हलन्त्यमुपदेशेऽजित्यादिर्ञिटुडवस्तथा।**
**एभिर्धात्वनुबन्धानां लोपे स्यात्प्रत्ययः पुनः ॥ ७० ॥**
**हलन्त्यमिति हृप्येते स्वरार्थावन्तिमौ हलौ।**
**[2]तरौ लचौ नपौ चेति स्वरार्थाः प्रत्ययेषु षट् ॥ ७१ ॥**

(टि०) १ इमे आदौ योज्याः पूर्वाङ्कितपुस्तकमनुसृत्याऽत्रैवाङ्किताः। २ यत्-अनीयर्-णमुल्-अच्-मानिन्-अप्-इत्यादिषु क्रमेण।

इति श्रीवासुदेवविजयपरिशिष्टीभूते धातुकाव्ये कैशव्याख्यया व्याख्यया समेते भेरीनाद-मल्लसज्जन--कंसमञ्चस्थिति-प्रगुणितरामकृष्णकर्तृकद्वाःस्थगजतत्पवध--सदन्तरङ्ग-प्रवेश--कंससभा--सत्पुरुषकर्तृकपूतनाघातादिशवृत्तोक्ति--श्रीकृष्णदृष्टिपात--तूर्यनाद-कंसाज्ञाश्रावणेशसूक्ति--तच्छक्त्यज्ञजनकरुणोक्ति--युद्ध--मल्लहत्यपद्रुति--सुरजनहर्षोक्तिजकंसक्रुद्धवधवन्धादिविप्रलाप--कृष्णकर्तृकोत्पत्य, कंसपातनोरःस्थिति--वधाऽऽकर्षण--कङ्कादिहतिद्रुति--गोपानर्तनोपद्रुतयद्वाद्यागमोग्रसेनशासनव्यवस्था-नन्दादि-विसर्जन-स्वगृहवासान्तिममङ्गल प्रार्थनावर्णनं नाम **तृतीयः सर्गः**



कश्मीरादिषु शासति प्रभुवरे सिंहे प्रतापादिमे
माघे मासि सिते दले फणितिथौ संवत्सरे वैक्रमे ।
खर्ष्यङ्कग्रहभूमिते हरिपदोर्जम्बूपुरीशालये
व्याख्यैषाऽपि समाप्य कृष्णविजये तद्धातुकाव्ये तथा ॥ १ ॥

रामानन्तोऽजनि **कशवश्च** मधुदापुर्यां प्रसिद्धो बुधः
बाल्येऽधीत्य महेशपूःस्थभवदेवाख्याद् गुरोर्विश्रुतात् ।
छात्राध्यापनकर्मणा च खलु यः स्वायुःशतं पाणिनेः
शास्त्रस्य प्रचुरप्रचारविधये पाञ्चाम्बुकेऽजीगमत् ॥ १ ॥

तत्पुत्रो **रघुनाथ**शर्मविबुधो **लालो मुकुन्दा**दतः
तस्मात्पण्डितधूर्जटिः समभवद् **रामप्रपन्न**स्ततः ।
काव्यव्याकृतितीर्थशास्त्रिपदवीकः सोऽकरोत्कैशवीं
व्याख्यां छात्रगणप्रियां स्ववसतिर्यस्यास्ति जेजों पुरी ॥ २ ॥

इति श्रीवासुदेवविजयं काव्यं सटीकं समाप्तिमगमत् ॥ शुभं भवतु ॥

---

(टि०)--१ "मदूद" इति सम्प्रति प्रसिद्धः शतद्रुविपाशयोरन्तर्वर्तिहोश्या पुरत उपरिज्वालामुख्यधःपर्वतोपत्यकायां यशःपालभूपालभूतपूर्वराजधानीजेजोंपुरीतो दक्षिणदिशि क्रोशमितस्थाने स ग्रामः । २ पञ्चनददेशे । ३ पं० मुकुन्दलालतोऽत्र वसन्ति ॥

श्लोकसूचीयमकरादिक्रमेण अत्र (*) (*) एतच्चिन्हाङ्कितं
॥ धातुकाव्यपद्यं ज्ञेयम् ॥

# धातुसूचीपत्रम् ।

नात्यावश्यकं प्रतिभाति यतः सिद्धान्तकौमुद्योऽखिलान्तेवासिकरकमलेषु भ्रमरायन्ते । तत्र सर्वत्र धातुसूचीपत्राणि सन्त्यनन्तानि तदङ्केनात्राऽपि सुव्यवहारमिति । किन्तु ततोऽस्य यो विशेषः परस्परं धातुषु स एव धातुपाठावालोड्य निश्चित्य च सूच्यते । तत्र पाठभेदः मतान्तरोक्तिमन्तरा भ्रममूलाऽशुद्धिमूलको बहुश इति प्रतीयते ।

---

| सि० कौ० धातुपाठे । | धातुकाव्ये धात्वङ्काः | | सि० कौ० धातुपाठे । | धातुकाव्ये धात्वङ्काः | |
|---|---|---|---|---|---|
| ष्वद | स्वद | १८ | ० | मेटृ | २६३ |
| ० | मान्य | ४७ | लुड (पा०) | ० | ३१६ |
| भिदि | बिदि | ६५ | हिट (पा०) | ० | ३१९ |
| ध्राघृ (पा०) | ० | ११५ | क्रुड | पुड | ३२३ |
| कख | कखे | १२१ | ० | स्फट–स्फुटे(पा०) | ३३१ |
| रिख-त्रख त्रिखि-शिखि } (मू०) | | १५६ | शुठि (पा०) | ० | ३४३ |
| | | | ० | हुट (पा०) | ३५५ |
| ० ० | दघि-लघि(पा.) | १५९ | लड | लल (मू०पा०) | ३६० |
| घघ | घर्घ | १६० | गाडि | ० | ३६१ |
| ० | षच्चे (पा०) | २०३ | ० | धृषृ-धेपृ(पा०) | ३६५ |
| ० | श्रचे (पा०) | २०५ | ० | षच (पा०) | ४०० |
| ० | वृजि (पा०) | २२३ | पैणृ | प्रैणृ | ४५८ |
| ० | मज-माजि(पा०) | २५२ | भ्रन | भ्रण | ४५९ |
| हुडि | ० (पा०) | २७८ | ० | मीम (पा०) | ४६८ |

(टि०) १ धात्वर्थक्रममतान्तरकर्तृभेदविज्ञानादि तु पुस्तकान्येतदङ्कानानुसृत्योद्घाट्य च स्वयमवलोक्यम् एतेऽङ्काः केवलं धातुकाव्ये एव यथायथं मेलिष्यन्ते कौमुद्यां क्वचित् २ चिह्नितानामग्रपश्चाद्भावोऽपि भविष्यति ।

| सि० कौ० धातुपाठे। | धातुकाव्ये | धात्वङ्काः | स० कौ० धातुपाठे। | धातुकाव्ये | धात्वङ्काः |
|---|---|---|---|---|---|
| ० | जिम (पा०) | ४७२ | ० | पश-पष(पा०) | ८८७ |
| ० | षय तय-णय(पा०) | ४८० | ० | भत्त (पा०) | ८९३ |
| शेवृ-खेवृ-क्लेवृ-(पा०) | ० | ५०६ | शै-श्रै | श्रै-सै | ९१८।९१९ |
| चुच्य(पा०) | ० | ५१३ | ० | ध्यै (पा०) | ९२३ |
| नील | णील | ५२२ | ह्वृ | द्वृ | ९३४ |
| तिल (पा०) | ० | ५३३ | ज्रि | श्रि | ९४७ |
| षेलृ (पा०) | ० | ५४२ | डुङ् | दुङ् | ९५४ |
| एषृ (पा०) | पेषृ | ६१९ | उङ्-कुङ्-खुङ् गुङ् घुङ्-ङुङ् (पा०) | ० | ९५४ |
| यासृ (पा०) | णासृ | ६२५ | ष्वन्ज | षन्ज | ९७६ |
| अहि | अंहृ | ६३५ | स्कान्दिर् | स्कदिर् | ९७१ |
| ग्लह | ग्लहू | ६५१ | हृ | ० | १०९७ |
| घष (पा०) | घषि | ६५२ | कि | ० | ११०१ |
| स्तृच | ष्टृच | ६६२ | धिष | ० | ११०३ |
| ० | पिशृ-पेशृ०(पा०) | ७२० | जन | ० | ११०५ |
| ० | रुठ (पा०) | ७४९ | गा | ० | ११०६ |
| ० | व्रज (पा०) | ४६९ | ० | प्युस(पा०) | १११४ |
| क्रदे·क्लद (पा०)[1] | ० | ७७३ | ० | सह(पा०) | ११२९ |
| ० | श्चेट(पा०) | ७८० | ० | पत(पा०) | ११५९ |
| वन | चनं[2] | ८०२ | ईशुँचिर् | शुचिर् | ११६५ |
| स्थल | ष्ठल | ८३६ | ० | बंसु-(पा०) | १२१४ |
| णल | नल | ८३८ | युस (पा०) | ० | १२१५ |
| ० | हल-झल(पा०) | ८४३ | ० | मुष(पा०) | १२२० |
| ० | अचि(पा०) | ८६२ | जितृषा | तृष | १२२८ |
| ० | डुयाचृ(पा०) | ८६३ | | | |

(टि०) १ अयोप्यनिदित-इति नन्दी इदित इति क्षीरस्वामी कदि क्रदि-इदितौ। क्रद-क्लद इति चानिदितौ इति मैत्रेयः। २ अस्याङ्को विस्मृतः। ३ कस्मिंश्चित्कौमुदीपुस्तकेऽयं पाठः

| सि० कौ० धातुपाठे। | धातुकाव्ये | धात्वङ्काः |
|---|---|---|
| तृप-(पा०) | ० | १२७१ |
| श्रह | ० | १२७२ |
| दृ- | द्रु | १२७७ |
| त्रिर्-रिवि(पा०) | ० | १२८० |
| ० ० | श्रोनजी-श्रोनरजी-(पा०) | १२९१ |
| वृहू- | ० | १३५१ |
| चुट-छुट- | पुड-चुड | १३७७ |
| जुट- | जुड- | १३७९ |
| लुट- | लुठ- | १३८१ |
| स्थुड- | स्फुड | १३८८ |
| खुड- | कुड | १३८९ |
| फुल- | स्फुल | १३९० |
| स्फर-(पा०) | ० | १३९१ |
| ० | क्रुड(पा०) | १३९३ |
| क्रुड-भृड-(पा०) | क्रुड रुड | १३९४ / १३९५ |
| ० | तन्जू-(पा०) | १४५९ |
| ० | वृची(पा०) | १४६१ |
| ० | घर्ण(पा०) | १४६९ |
| ० | स्पृ- | १४९० |
| धृ-(पा०) | ० | १४९५ |
| भर-(पा०) | ० | १५०६ |
| इष- | ईष- | १५२५ |
| हेट[1] (पा०) | हेठ | १५३१ |
| कुद्रि- | कुदि | १५३९ |

| सि०कौ०धातुपाठे। | धातुकाव्ये | धात्वङ्काः |
|---|---|---|
| ० | कुट्ट-(पा०) | १५३८ |
| उलडि | श्रोलडि | १५४१ |
| लज-(पा०) | ० | १५४२ |
| स्फिट(पा०) | ० | १५७१ |
| घ्मिङ्- | स्मिङ्- | १५७३ |
| ०० | स्मट-स्मिट- | १५७३ |
| गुठि-(पा०) | ० | १५८८ |
| वडि-(पा०) | डडि- | १५८६ |
| ० | चिक्क(पा०) | १५९६ |
| ० | किल-(पा०) | १६०५ |
| ० | व्रज-(पा०) | १६१७ |
| छञ्जि- | हजि- | १६२१ |
| श्वभ्र- | श्वभ्र- | १६२३ |
| मुस्त- | श्रस्त- | १६३१ |
| ०० | व्यय-व्यव-पा० | १६३५ |
| पुल- | पूल- | १६३६ |
| पूर्ण-पुण-(पा०) | ०० | १६३६ |
| म्रक्ष- | मृक्ष- | १६६१ |
| ०० | म्यक्ष-म्रक्ष-पा० | १६६१ |
| च्छुप- | च्छूप- | १६७२ |
| ० | कुटुम्ब-(पा०) | १६७८ |
| विष्क- | किष्क- | १६८५ |
| कण- | कूण | १६८८ |
| त्रुट- | ० | १६९८ |
| ० | मोक्ष- | १७३१ |

( टि० ) १ क्वचित् 'हिठ' इत्यपि पाठः।

| सि० कौ० धातुपाठे । | धातुकाव्ये | धात्वङ्काः |
|---|---|---|
| रग-(पा०) | लघ- | १७४३ |
| भिजि- | भिजि- | १७६४ |
| अशि- | अशि- | १७८९ |
| शीक- | शीक | १७९१ |
| पुटि- | घुटि | १७९३ |
| जि-चि-(पा०) | जुचि | १७९४ |
| नल- | नड- | १८०२ |
| ० | छृद-(पा०) | १८२० |
| ० | तृप-(पा०) | १८२१ |
| दभ- | ० | १८२२ |
| ग्रन्थ- | ग्रथ- | १८२५ |
| ० | क्रथ(पा०) | १८२५ |
| अर्ह | ० | १८०३० |
| ० | वष-(पा०) | १८५१ |
| ० | कुड-(पा०) | १८९१ |
| संकेत- | केत- | १८९६ |
| धेक- | ० | १९१५ |
| ० | कर्तृ(पा०) | १९१६ |
| वल्क | वष्क- | १९१७ |
| लजी-पा० | जली | १९१९ |
| विष्क- | ० | १९४१ |
| ० | ओज- | १९४४ |
| ० | अन्दोल- | ,, |
| ० | स्फुट | ,, |
| ० | अवधीर | ,, |
| ० | गन्ध | ,, |
| ० | अर्थ | ,, |
| ० | आनी | ,, |



# टीकाकरणकारणम् ।

अस्ति भारतभूमौ शौर्यादिसद्गुणनिधिः पञ्चनददेशः यस्योत्तरदिग्विभागे जालन्धर पीठमध्यवर्ती समस्तभारतमध्यवर्तिका प्रकाशनार्थं ब्रह्मणा धृतेव ज्वालामुखी देवी विपाशाशतद्रूमध्यद्वीपशिरोरत्नं, तत्पर्वतपादाधस्ताद्दिग्यन्ते मधुदापुरी चकास्ति । या यशःपालभूपालभुतपूर्वराजधान्या जेजोंपुर्या दक्षिणपार्श्वे क्रोशान्तराले विद्यते यस्यां सूद्रोपजातीयवैश्यानां स्वाम्यमासीत् । तैश्च राजजनयवनभयतस्तत्स्वाम्यं विहारीलाल शर्मणे स्वशर्मणे स्वपुरोहिताय नूतननगर (नमासहर) वास्तव्याय प्रदाय ततो निरक्रामि अथ स पुरोधा गोप जातीय वनयवनकदर्थितोऽभ्यर्थितवान् स्वस्वजातीयं गुरुदत्तं नूरमहलवास्तव्यं, स च तत्कालिकेन्द्रप्रस्थीयसिंहासनस्थयवनसमूजं प्रार्थ्य तान्यवनान्वनान्निष्काश्य तं सुखयित्वाभ्यर्थितस्तेन तत्रैवोषे । तयोश्च दिवाकरनिशाकरयोरिव प्राभाकरोपाह्वयोः सन्तातिपरम्परयाऽयं ग्रामः संकुलोऽस्ति । तत्र गुरुदत्तस्य गुलाबा रामस्तस्य कृष्णान देऽस्य बुलाकीरामः सूनुरर्जनि । यो महान्वीर आसीत्, येन निशीथे महिषी र्नीत्वा सुयानैरिव पलायमानैश्चौरैर्युयुधे । तैश्च बहुतया खड्गैर्द्वाविंशतिस्थानेषु कृतक्षतोपि नासून्मुमुचे । उदरान्त्रेषु वहिर्भुतेष्वपि पुनरतानि तत्रैव निधाय तदुपरि निजोत्तरीयं संबध्य सुसंनह्य च भूयोपि चौरानवाप्य कांश्चिद्व्यापाद्य कांश्चिद्विद्राव्य महिषीर्गृहमानीय शिथिलितोदरबन्धनो हरिं स्मरन्नाकमगात् ।

ततश्च केशवरामोऽभवत् । यः स्वपितुः पितृव्यपत्न्या मायिजीतिदेव्या उपदेशेन महद्ध्रगीग्रामे वैष्णवब्राह्मणमथुरादासमहात्मनः किञ्चिदधीत्य विदुषा माणिरामेण सह काशीं गत्वा श्रीभवदेवमिश्रपादपद्मोपासनेन साङ्गोपाङ्गवेदविद्याविशारदः पाणिनीयव्याकरणे च प्रधानो बभूव । माणिरामो गुरुशापवशेन तत्रैव जहौ देहं । केशवरामस्तु विवाहितत्वाद्गुर्वाज्ञप्तो निजनिलयमायाय पाणिनीयादिशास्त्रमन्तेवासिषु आविश्चक्रे । निजगृहादन्नादि प्रदाय, पुरा पञ्चनददेशे यल्लेशोपि नासीत् । येभ्योधीत्य महान्तो महान्तो धुरन्धरा विद्वांसो देशदेशान्तरेषु शतशश्छात्रानध्यापितवन्तस्ते चान्यानित्येवं शिष्यप्रशिष्यादिप्रचारैर्जगती भृतास्तीदानीं तच्छिष्येष्वेव गौड़स्वामि-काकाराम-हरयशराय गुलजारि-विभवराम (बूटाराम) गोकुलचन्द्रादयः प्रतिष्ठिततमा आसन् । प्रशिष्येषु च स्वामिविशुद्धानन्दानन्तराम-गिरिधारिलालादय आसन् । पञ्चापकेसरिश्रीरणजित्

सिंह–संसारचन्द्रप्रमुखा यत्पादारविन्ददर्शनमीहमाना अपि न लभन्ते स्म। भक्त्या सदीर देवासिंह–मिश्ररूपलालादयो यत्सेवायामुपतिष्ठन्तेस्म समये २ यैर्ग्रामद्वयं बह्वी भूमी च छात्रव्ययार्थं प्रादाय्यनीहगानयापि । तन्त्रविद्याप्रभावेणानन्नपूर्णाहनुमद्यन्त्रराजगीदेवी तोषजन्यसिद्धयो वशीभूय किंकर्य इव स्मृतिकाले उपतिष्ठन्तेस्म यदग्रे । येन बृहन्तो बृहन्तश्चमत्कारा जनैरदृश्यन्त। ते वृद्धजना अधुनाप्याचक्षते । तस्यात्मजो रघुनाथाभिधोभूत् । योल्पवयस्क एव महाविद्वान् समजनि । द्वाविंशतिवर्षदेशीय एव च संसारस्यासारतामवगमयन् परलोकं शिश्रिये स्वापितरं समाश्वासयितुमिव शिशुयुगलमुत्पाद्य,तयोर्ज्येष्ठो गङ्गायात्रायां विससर्ज प्राणान् श्रीधरो नाम। परो मुकुन्दलालस्तु पितेवाल्पीयस्येव वयसि विपश्चिदग्रणीर जनि । पितामहादखिलामध्यापनधुरमाससाद प्राप च प्रवीणतामत्र। अथ पितामहे वेदाङ्कग्रहचन्द्रेब्दे नवतिवर्षावस्थायां दिवं गते दायाद-दुःखेनामुं ग्रामं विहाय जेजांपुर्यां पौरप्रार्थनया वैक्रमोनविंशतिशतके हरिहरि मन्दिरं विरचय्योवास। किञ्चित्कालं पश्चादध्याप्य विद्यार्थिनः स विरज्य जगत्या विद्वत्संन्यास-मादाय तीर्थादिषु विचरन् हेलराख्यग्रामीयकूपे महाप्रस्थानरीत्या प्रियान् प्राणानुत्ससर्ज । तस्य पञ्चसुता आसन् । रामचन्द्र–लक्ष्मण–वासुदेव–धूर्जटि–रामनारायणाख्याः । तेषु धूर्जटेः पुत्रो रामप्रपन्नोऽहं बालावस्थामध्ययनोपयोगाभावात् पितुश्चाध्यापना-निच्छोरुद्योगेन वृथाऽतिवाहितवान् । परं सर्वज्येष्ठपितृव्यपुत्रस्य पण्डितपरमानन्दस्यो-द्योगेन लघुकौमुदीं रघुवंशं चाधीतवान्। यदुपकृतिमेतावन्मात्रामपियावदायुर्नविस्मरिष्यामि। अथोजिहानायां पिपठिषायां वहिर्गन्तुमिच्छुरपि पितृनिवारितो भीतो वा नैव किञ्चित्कर्तुमशक्नवम् । अथ निरङ्कुशां वनहस्तिनीमिव यौवनावस्थामासाद्यागण-यित्वा तातं वहिर्निर्गत्य होश्यारपुरे स्वपितामहपैतृष्वस्त्रीयपं०कन्हैयालालचरणसर-सीरुहानुकम्पया शास्त्रदुर्गे प्रवेशं लब्धवान् । गीर्वाणवाण्यां निरर्गलवार्तालापे शक्ति-रजनि गद्यपद्यरचने च । तत्रत्यान्मया प्राज्ञपरीक्षासरिदपि समुदतारि । पुनश्चामृत सरोनगरमगमम् । परन्तु यथार्हमुपयोगाभावाद् व्युत्पन्नगुरुलब्ध्यभावखिन्नस्त-द्विहाय कश्मीरराजधानीं जम्बूपुरीमुपगम्य श्रीरघुनाथपाठशालायां श्रीगोकुलचन्द्रविद्वत्सका-सात्तयातज्ज्येष्ठतनुजश्रीमद्गङ्गाधरशास्त्रिभ्योऽपठम् ।

ततश्च व्रजभूम्यां निहालचन्द्रमहात्मनः सविधेपि किञ्चिन्न्यायशास्त्रमधीत्य काश्यां पठितवान् । अथ पितृदेहान्ते तदौर्ध्वदैहिकं गृहे विधाय भूयोपि जम्बूपुरे

श्रीमद्गुरुवर गङ्गाधरचरणयोरूपस्थाय महाभाष्यान्तं व्याकरणं समग्रं साहित्यशास्त्र-मन्यानि च विविधशास्त्राणि पठित्वा शास्त्रिपरीक्षापाथोधिमुदतरम् । गुरुषु स्वर्गमुपास-मानेषु तत्कानिष्ठभ्रातृपं०श्रीजगदीश्वरशर्मणां महामहोपाध्यायानां स्नेहेन जम्बूपुरे एव न्यवात्सम् । अथ कश्मीरानागत्वा सतीर्थ्यकृपारामशास्त्रिद्वारा मन्त्रिवर(दिवानसाहब) रायबहादुरोपाह्वविष्णुदासेन संगत्य राजाऽमरसिंहं प्रार्थ्य महाराजश्रीप्रतापसिंहमहोद-यांश्च परितोष्य रायबहादुरभवानीदासद्वारा पुनः प्रार्थ्य राजाऽमरसिंहमहोदयान् श्रीरघुनाथपाठशालायां पाठनकार्याज्ञापत्रमलभे । पाठयंश्चान्तेवासिनो द्विगर्तादिदेशेषु विद्यां प्रचारयन् वर्षे २ अध्यक्षद्वारा राजतोऽभिनन्दनं प्राप्नोमि । वङ्गदेशीयकाव्योपाधि-परीक्षापि मयोदतारि । अथ गच्छति समये कदाचिदकस्मात् हृदये गीराविरभवत् । यत् पं०केशवरामो मे वृद्धप्रपितामहोऽचकथत् । यन्मे नाम्ना कञ्चिद्ग्रन्थं विरचय्य प्रसिद्धीकुरु इति । अतो मया विचार्य २ वासुदेवविजय–धातुकाव्ये छात्रोपचिकीर्षया च टीकिते ।

बुद्धिर्नास्ति न मेऽभ्यासो महामूर्खः स्वभावतः ।
तथाप्यतो बुधम्मन्यो हास्यो नास्मि कुतो बुधाम् ॥ १ ॥

इति शिवम्



